# LIST OF BOOKS FOR SALE

AT THE LIBRARY OF THE

# ASIATIC SOCIETY OF BENGAL.

No. 1, PARK STREET, CACUTTA,

AND OBTAINABLE FROM

THE SOCIETY'S AGENTS, MR. BERNARD QUARITCH, 11, GRAFTON STREET, NEW BOND STREET, LONDON, W., AND MR. OTTO HARRASSOWITZ, BOOKSELLER, LEIPZIG, GERMANY.

*Complete copies of those works marked with an asterisk * cannot be supplied.—some of the Fasciculi being out of stock.*

## BIBLIOTHECA INDICA.

### *Sanskrit Series*

| | | |
|---|---|---|
| Advaitachintā Kaustubha, Fasc. 1-3 @ /10/ each ... ... Rs. | 1 | 14 |
| Aitarēya Brāhmaṇa, Vol. I, Fasc. 1-5; Vol. II, Fasc. 1-5; Vol. III, Fasc. 1-5, Vol. IV, Fasc. 1-8 @ /10/ each ... ... ... | 14 | 6 |
| Aitereya Lochana. ... ... ... ... ... | 2 | 0 |
| Amarkosha, Fasc. 1 ... ... ... ... ... | 2 | 0 |
| *Aṇu Bhāshya, Fasc. 2-5 @ /10/ each ... ... ... | 2 | 8 |
| Anumana Didhiti Prasarini, Fasc. 1 @ /10/- ... ... | 1 | 4 |
| Aṣṭasāhasrikā Prajñāpāramitā, Fasc. 1-6 @ /10/ each ... ... | 3 | 12 |
| Atmatattaviveka, Fasc. I. ... ... ... ... | 0 | 10 |
| Açvavaidyaka, Fasc. 1-5 @ /10/ each ... ... ... ... | 3 | 2 |
| Avadāna Kalpalatā, (Sans. and Tibetan) Vol. I, Fasc. 1-10; Vol. II. Fasc. 1-10 @ 1/ each . ... ... ... .. | 20 | 0 |
| Bālam Bhaṭṭi, Vol. I, Fasc. 1-2, Vol II, Fasc. 1 @ /10/ each ... ... | 1 | 14 |
| Baudhāyana S'rauta Sūtra, Fasc. 1-3 Vol. II, Fasc 1-5 @ /10/ each ... | 5 | 0 |
| Bhāsavritty ... ... ... ... ... ... | 0 | 10 |
| Bhaṭṭa Dīpikā Vol. I, Fasc. 1-6; Vol. 2, Fasc. 1, @ /10 each ... | 4 | 6 |
| Bauddhastotrasangraha ... ... ... ... ... | 2 | 0 |
| Bṛhaddēvatā Fasc. 1-4 @ /10/ each ... ... ... ... | 2 | 8 |
| Bṛhaddharma Purāṇa Fasc 1-6 @ /10/ each ... ... .. | 3 | 12 |
| Bodhicaryāvatāra of Çantideva, Fasc. 1-6 @ /10/ each ... ... | 3 | 12 |
| Çri Cantinatha Charita, Fasc. 1-3 ... ... ... ... | 1 | 14 |
| Çatadūṣaṇī, Fasc. 1-2 @ /10/ each ... ... ... ... | 1 | 4 |
| Catalogue of Sanskrit Books and MSS., Fasc. 1-4 @ 2/ each ... ... | 8 | 0 |
| Çatapatha Brāhmaṇa, Vol I, Fasc. 1-7, Vol II, Fasc. 1-5, Vol. III, Fasc. 1-7 Vol. V, Fasc. 1-4 @ /10/ each ... ... ... | 14 | 6 |
| Ditto Vol. VI, Fasc. 1-3 @ 1/4/ each ... ... | 3 | 2 |
| Ditto Vol. VII, Fasc. 1-5 @ /10/ ... ... ... | 3 | 2 |
| Ditto Vol. IX. Fasc. 1-2 ... ... ... | 1 | 4 |
| Çatasāhasrikā Prajñāpāramitā Part, I. Fasc. 1-17 @ /10/ each .. ... | 10 | 10 |
| *Caturvarga Chintāmaṇi, Vol. II, Fasc. 1-25; Vol. III. Part I, Fasc. 1-18. Part II, Fasc. 1-10. Vol. IV. Fasc. 1-6 @ /10/ each ... | 36 | 14 |
| Ditto Vol. IV, Fasc. 7-8, @ 1/4/ each ... ... | 2 | 8 |
| Ditto Vol. IV, Fasc. 9-10 @ /10/ ... ... ... | 1 | 4 |
| Çlokavartika, (English) Fasc. 1-7 @ 1/4/ each ... ... ... | 8 | 12 |
| Çrauta Sūtra of Çānkhāyana, Vol. I, Fasc. 1-7; Vol. II, Fasc. 1-4; Vol. III, Fasc. 1-4; Vol 4, Fasc. 1 @ /10/ each ... ... | 10 | 0 |
| Çri Bhāshyam, Fasc. 1-3 @ /10/ each ... ... ... ... | 1 | 14 |
| Dāna Kriyā Kaumudī, Fasc 1-2 @ /10/ each .. ... ... | 1 | 4 |
| Gadadhara Paddhati Kālasāra Vol. I, Fasc. 1-7 @ /10/ each ... ... | 4 | 6 |
| Ditto Ăchārasārah Vol. II, Fasc. 1-4 @ /10/ each ... ... | 3 | 2 |
| Gobhiliya Grihya Sutra, Vol. I. @ /10/ each ... ... ... | 3 | 2 |
| Ditto Vol. II. Fasc. 1-2 @ 1/4/ each ... ... ... | 2 | 8 |
| Ditto (Appendix) Gobhila Parisista ... ... ... | 2 | 0 |
| Ditto Grihya Sangraha ... ... ... ... | 0 | 10 |
| Haravali ... ... .. ... ... ... | 1 | 14 |
| Karmapradiph, Fasc. I ... ... ... ... ... | 1 | 4 |
| Kāla Viveka, Fasc. 1-7 @ /10/ each ... ... ... ... | 4 | 6 |
| Kātantra, Fasc. 1-6 @ /12/ each ... ... ... ... | 4 | 8 |
| *Kūrma Purāṇa, Fasc. 3-9 @ /10/ each ... ... ... ... | 6 | 10 |
| Kiranavali, Fasc. 1-2 @ /10/ each ... ... ... ... | 1 | 4 |
| Madana Pārijāta, Fasc. 1-11 @ /10/ each ... ... ... | 6 | 14 |
| Mahā-bhāṣya-pradīpōdyōta, Vol. I, Fasc. 1-9; Vol. II, Fasc. 1-12 Vol. III, Fasc. 1-10 @ /10/ each ... ... ... ... | 19 | 6 |
| Ditto Vol. IV, fasc. 1 @ 1/4 ... .. ... | 2 | 8 |
| Manuṭīkā Sangraha, Fasc. 1-3 @ /10/ each ... ... | 1 | 14 |
| Mārkaṇḍēya Purāṇa, (English) Fasc. 1-9 @ 1/- each ... .. | 9 | 0 |
| *Mīmāṁsā Darçana, Fasc. 10-19 @ /10/ each ... ... | 6 | 4 |
| *Mugdhabodha Vyakarana, Fasc. 1-4 @ /10/ each ... ... | 2 | 8 |

# मुग्धबोधं व्याकरणम् ।

मङ्गलाचरणम् ।

मुकुन्दं सच्चिदानन्दं प्रणिपत्य प्रणीयते ।
मुग्धबोधं व्याकरणं परोपकृतये मया ॥

ॐ नमो गणेशाय ।

* ब्रह्मादिदेवासुरवृन्दवन्दिते, पद्मालयेशार्च्चितसरोजराजिते ।
कन्दर्पदर्पान्तकपादनीरजे सन्तु प्रणामा वरदोरुदव्रजे ॥

पञ्चाननं चन्द्रकलाविशुद्धं नादं दधानं प्रकृतिप्रयुक्तम् ।
व्यस्तं समस्तं स्वरितं सुसिद्धं चाष्टोदितं तं त्रिगुणं नमामि ॥

दनुजकुल-विपक्ष-क्षुब्ध-दुग्धाब्धि-गर्भो-
ल्लसदमृत समाना रेजिरे यस्य वाचः ।
मुखर-खल-खरोक्ति-ध्वान्त-विध्वंस-भानो
स्त्रिभुवन-बुध-वक्षःक्षेत्र-पीयूषवृष्टेः ॥

---

* मङ्गलेत्यादि श्लोकव्याख्या अन्याश्च कतिपयटीकाटिप्पन्यः परिशिष्टे द्रष्टव्याः ।

तेन व्याकरणं कृतं कलियुगे दृष्ट्वा भवाब्धौ नरा-
नज्ञानावृतमानसान् करुणया श्रीमुग्धबोधं भुवि ।
पाणिन्यादिमतावलोकनपरः श्रीरामशर्म्मा कृती
तस्यैतां सुधियां प्रमोदजननीं टीकां तनोति स्वयम् ॥
गुणवद्भिर्गुणो ग्राह्यो न दोषस्त्विह यत्नतः ।
सतां स्खलनजो दोषः परिष्कार्य्यः सतां पुनः ॥
परेऽत्र पाणिनीयज्ञाः केचित् कालापकोविदाः ।
एके विद्यानिवासीयाः स्युरन्ये प्राच्चिमसारकाः ॥

इह खलु सकलशिष्टैकवाक्यतया प्रारिप्सितग्रन्थसमाप्ति-प्रतिबन्धकीभूतासाधारणदुरदृष्टध्वंसजनकेश्वरनमस्काररूपं मङ्गलं कुर्व्वन् शिष्यशिक्षायै आदौ श्लोकेन निबध्नाति मुकुन्दमित्यादि । ननु कथं नमस्कारादभिमतसिद्धिः, मङ्गलसत्त्वे कादम्बर्य्यादाव-समाप्तेः तदसत्त्वे शिशुपालवधादौ समाप्तेश्चेति । मैवं, इह विघ्नो माभूदिति कामनया शिष्टैः क्रियमाणस्य तस्याभिमतसमाप्ति प्रतिबन्धकीभूतविघ्नाभावः फलम् । असमाप्तिस्तु कादम्बर्य्यादौ विघ्नस्य प्राचुर्य्यात् । नहि सहस्रजनसाध्यं कर्म्म शतेन साधयितुं शक्यते । शिशुपालवधादौ तु स्वभावसिद्धविघ्नाभावान्मङ्गलं विनैव समाप्तिः । अथवा तत्र नमस्कार एवासीत्, कायवाङ्मनोभिरेव तत्सम्भवात् । न चात्र प्रायश्चित्तवद्विघ्ननिश्चयेऽधिकार इति वाच्यं, तत्सन्देहेऽपि शिष्टाः प्रवर्त्तन्ते यत इति । अन्यथा अनुप-स्थितारातिनृपतीनां रथ करि-तुरग पदाति सेना-सेनापति-समा-दरणं न स्यादिति दिक्

## मङ्गलाचरणम्।

सच्चिदानन्दं प्रणिपत्य मया व्याकरणं प्रणीयते इत्यन्वयः। सन्त्वाशी चिज्ज्ञानसावानन्दश्चेति सच्चिदानन्दः। य-सः। असत् भावे शत्, लोपोऽस्त्यसोरित्यादिना अकारलोपः, पश्चात् सौ नुम्, स्थानस्य लुपि, सन् सत्यः (१)। चिती संज्ञाने क्विपि चित्, विशिष्ट-ज्ञानम्। आङ्पूर्व्वे टुनदि समृधि, घञ्, आनन्दः, अनवच्छिन्नप्रेमा-स्पदीभूतसुखमिति यावत्। तथाच "सत्यं विज्ञानमानन्दं ब्रह्म" इति श्रुतिः। सच्चिदानन्दं किंविशिष्टं? मुकुन्दं, मुक्तिं ददातीति डप्रत्यये मनीषादित्वान्मुक्तिशब्दस्य मुकुमादेशः। यद्यपि सच्चिदा-नन्दशब्देन ईश्वरएवोच्यते, तथापि मुमुक्षूणां यागयोगाद्यनुष्ठान-द्वारा मुक्तिदातृत्वज्ञापनाय मुकुन्दमितिविशेषणीयम्। यद्वा श्रवणमनननिदिध्यासनादिसाध्यमुक्तेर्यो दाता भवति, स भक्ता-भीष्टफलप्रदो भवतीति ज्ञापनाय। प्रणिपत्येति पत्लृ गत्यैश्व-र्य्ययोः, क्त्वाचे, व्यादेनञः क्त्वोयपे इति यप्, प्रान्तर्नोण इति नो णः। प्रधानप्रणयनक्रियायाः पूर्व्वकालीनत्वं प्रणिपातस्य संलक्ष्य तदुत्तरकालीनत्वं प्रणयनक्रियायाः संलक्ष्यते। अभिधानादेककर्तृत्वम्। यद्यपि निपूर्व्वपतधुर्नत्यर्थस्तथापि भक्तिश्रद्धातिशयपूर्व्वकं-स्वापकर्ष-बोधकव्यापारविशेषज्ञापनाय प्रशब्द इति। व्याकरणमिति व्याङ्-पूर्व्वकृञधुर्व्युत्पादनार्थः, व्याक्रियन्ते व्युत्पाद्यन्ते प्रकृतिप्रत्ययपरि-कल्पनया सिद्धशब्दा अनेनात्र वा, घे ङे वानटि णुर्घूङिति णुः, पश्चात् लिङ्गसंज्ञायां सेर्म। प्रणीयत इति प्रपूर्व्व-णीञ्प्रापणे कृत्यर्थः, तस्मात् ढे ते यक् च, कित्त्वान्न णुः, प्रान्तर्नो ण इति णः। ननु

(१) नित्य इति पाठान्तरम्।

अन्यानि व्याकरणानि सन्ति, किमनेन इत्यत आह मुग्धबोध मिति। मुग्धः सुन्दरो बोधो यस्मात् तन्मुग्धबोधं, अन्यापेक्षय प्रकरणशुद्धा झटितिपदपदार्थज्ञानं यस्मात् इत्यर्थः। यद्वा मुग्धानां मूढ़ानां बोधो ज्ञानं यस्मात् तत्। तथाच सर्व्वेषां विशिष्टज्ञानजनकतया अत्युपादेयमिति। मुग्धः सुन्दरमूढ़यो रिति धरणिः। बुध्यी ज्ञ बोधे घञ्, णः। ननु ग्रन्थकृतां ज्ञान मस्त्येव, किमनेनेत्याह परोपकृतये इति। परेषामुपकृतिः परोप कृतिस्तस्यै परोपकृतये, उपकृतिरुपकारः। ग्रन्थकृतां प्रवृत्तिस् ईश्वरवत् फलानुसन्धानं विनैव। यद्वा पराचासावुपकृतिश्चेति परोपकृतिस्तस्यै, परा श्रेष्ठा, ततश्च स्वीयपरकीयोपकाराय। तथाच, रुणद्धि रोदसीं चास्य यावत् कीर्त्तिरनश्वरी। तावत् किलायमध्यास्ते सुकृती वैबुधं पदमितिस्मरणात् स्वीयोऽप्युपकारः। केचित्तु चिच्चासावानन्दश्चेति चिदानन्दः, पश्चात् सच्चासौ चिदा नन्दश्चेति सच्चिदानन्दस्तमिति यगर्भ-यसं स्वीकुर्व्वन्ति, यस्य (कर्म्म धारयस्य) षत्वात् (तत्पुरुषत्वात्) द्विदयोरेवेति। तत्र, जिनेन्द्र बुद्धिपादाः—काला (१) इति सूत्रे द्वे अहनी जातस्य द्व्यह्नजात इति त्रिपदतत्पुरुषं स्वीकृतवन्तः। अतएव यसप्रकरणे ग्रन्थकृतोक्तं सच्चासौ चिच्चासावानन्दश्चेति सच्चिदानन्द इति। यद्वा चिच्च

(१) कालाः परिमाणिना (२।२।५)—परिच्छेद्यवाचिना सुबन्तेन सह कालाः समस्यन्ते। द्वे अहनी जातस्य यस्य स द्व्यह्नजातः। यस्य हि जननादूर्द्ध्वं दिनद्वयं गतं, स द्व्यह्नजात इति व्यवह्रियते इति पाणिनीये।

मङ्गलाचरणम्।

१। ओं नमः शिवाय।

( ओं। १।, नमः। १। शिवाय ४। )

इति नमस्कारसूत्रम्।

'आनन्दस्य तौ चिदानन्दौ, सन्तौ चिदानन्दौ यस्मात् स तं। तथा च तत्त्वज्ञानं स्वर्गादिसुखञ्च यस्माद् भवतीति।

१। ओमिति। त्रिविधा चास्य शास्त्रस्य प्रवृत्तिः। उद्देशो लक्षणं परीक्षा चेति। उद्देश उपदेशः, सदाशिव-परमात्म-स्वरूप-ब्रह्मण उपदेशः (१)। यतः, सिद्धार्थं सिद्धसम्बन्धं श्रोतुं श्रोता प्रवर्त्तते। शास्त्रादौ तेन वक्तव्यः सम्बन्धः सप्रयोजन इति। सिद्धोऽभिधेयः, अर्थः प्रयोजनं, सिद्धस्य अर्थस्य तत्, सिद्धेन सह सम्बन्धः सिद्धसम्बन्धस्तम्। तत्र किं केन कथ(२)मिति जिज्ञासायां, किं प्रयोजनं? शिवम्। यतः, प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्त्तते। तदुक्तं, सर्व्वस्यैव हि शास्त्रस्य कर्म्मणोवापि कस्यचित्। यावत् प्रयोजनं नोक्तं तावत् तत्केन गृह्यते इति। तथाच शिवाय शिव-प्रयोजनाय ओङ्कारप्रतिपाद्याय तस्मै परमात्मने नमः।

सिद्धसम्बन्धप्रकारमाह।

आत्मा बुद्ध्या समर्थ्यार्थान्नियुङ्क्ते तद्विवक्षया।
मनस्तद्वह्निमाहन्ति स प्रेरयति मारुतम्॥
वह्निमारुतसंयोगात् क्षोभाद् वागिन्द्रियस्य च।
'सूक्ष्मा वाग्जायते पूर्व्वं स एव कथितो ध्वनिः॥

(१) नामकीर्त्तनमिति यावत्, ओमितिशब्दब्रह्मण इतिशेषः।

(२) किं प्रयोजनम्, केन सह व्याकरणस्य किम्प्रकारः सम्बन्धः।

तत्तत्स्थानेष्वथ यदा वायुश्चलति सेन्द्रियः।
पश्यन्ती वर्णरूपा वाक् तत उत्पत्तिमर्हति॥
मध्यमा पदरूपाथ वाक्यरूपाथ वैखरी।
इति वाचामवस्थाः स्युर्मुखमध्ये तदिन्द्रियम्॥
अर्थप्रत्यययोर्वाक्यात् श्रुतादनुमितान्मतात्।
विशिष्टं खं मुखं राति विखरा सैव वैखरी॥

जायते प्रादुर्भवति। तथाच भगवद्वाक्यम्—

ओमित्येकाक्षरं ब्रह्म व्याहरन् मामनुस्मरन्निति।

एतेन शंशब्देरित्यादि-बहुलं ब्रह्मणीत्यन्त-दशाध्यायिरूप व्याकरणस्य साध्यत्वं, शूद्राणामनधिकारित्वञ्च प्रत्युक्तमिति। अथ वर्णदेशना।

हृत्कण्ठजिह्वं खलु तालु मूर्द्धा दन्तास्तथौष्ठावथ नासिका च।
वर्णप्रकोष्टानधऊर्ध्वभेदानित्याह चाष्टावुपदेशतोऽर्थित्॥

तथाचाहुः शिक्षाकाराः—

अष्टौ स्थानानि वर्णानामुरः कण्ठः शिरस्तथा।
जिह्वामूलञ्च दन्ताश्च नासिकौष्ठञ्च तालु च इति॥

किं पुनः कस्य प्रयत्नः (१)।

स्पृष्टत्वमीषत्स्पृष्टत्वं विवृतत्वं तथैव च।
संवृतत्वं च वर्णानामन्तः प्रयत्न उच्यते॥ इत्याहुः। (२)

---

(१) वर्णोच्चारणानुकूल आभ्यन्तरो व्यापारविशेषः।

(२) स्पृष्टत्वं ईषत्स्पृष्टत्वं विवृतत्वं संवृतत्वञ्च वर्णानां अन्तःप्रयत्न आभ्यन्तर प्रयत्न उच्यते। एतेषामाभ्यन्तरत्वं वर्णोत्पत्तिप्रागभावित्वात्. तथाहि नाभि

## मङ्गलाचरणम्।

२। शं शब्दैः। (शं। १। शब्दैः ३।।)।

शब्दैर्मङ्गलं स्यात्। इति प्रयोजनाभिधेयसम्बन्धाः।

इदमादिमङ्गलं, तथाचाह मनुः—

ओंकारश्चाथशब्दश्च द्वावेतौ ब्रह्मणः पुरा।

कण्ठं भित्त्वा विनिर्यातौ तेन माङ्गलिकावुभौ इति।

अथ त्यादिरुच्यते इत्यत्राथशब्दः मध्यमङ्गलं, बहुलं ब्रह्मणीति ब्रह्मशब्दोऽन्तमङ्गलं शास्त्रस्याभ्युदयपरम्। तथाच, मङ्गलादीनि मङ्गलमध्यानि मङ्गलान्तानि शास्त्राण्यव्याहतप्रसराण्यायुष्मद्वराख्याख्यातृश्रोतृकाणि भवन्तीति श्रुतेरिति। यद्वा अकारोकारमकारप्रतिपाद्याय ब्रह्मविष्णुशिवात्मकाय नमः, शिवाय कल्याणाय। एके तु उभयोरुपासकत्वात् उभयनमस्कारः, अथवा सूत्रवृत्त्योर्निर्विघ्नसिद्धये इत्याहुः। ननु प्रकृतिप्रत्ययपरिकल्पनया साधुशब्दव्युत्पादनाय प्रतिज्ञायामनेन कः साधुशब्दो व्युत्पादित इति शङ्कां निरस्यन्नाह इतीति। इतिशब्दः प्रक्रान्तपरामर्शी। तथाहि ओं नमः शिवायेति नमस्कारसूत्रम्।

२। शं शब्दैः। किमर्थमेतयोरुपदेशः? सिद्धार्थं सिद्धसम्बन्धं

प्रदेशात् प्रयत्नप्रेरितो वायुः प्राणो नाम ऊर्द्धमाक्रामन्नुरःप्रभृतीनि स्थानान्याहन्ति, ततो वर्णस्य तदभिव्यञ्जकध्वनेर्वा उत्पत्तिः, तदुत्पत्तेः प्राग्यदा जिह्वाग्रोपाग्रमध्यमूलानि तत्तद्वर्णोत्पत्तिस्थानं ताल्वादि सम्यक् स्पृशन्ति तदा स्पृष्टता. ईषत् यदा स्पृशन्ति तदा ईषत्स्पृष्टता, समीपावस्थानमात्रे संवृतता, दूरत्वे विवृतता। अतएव इचुयशानां तालव्यत्वाविशेषेऽपि तालुस्थानेन सह जिह्वाग्रादीनां चवर्गोच्चारणे कर्त्तव्ये सम्यक् स्पर्शः, यकारे ईषत् स्पर्शः, शकारेकारयोः समीपदूरावस्थितिरिति तत्त्वबोधिनी।

श्रोतुं श्रोता प्रवर्त्तते । शास्त्रादौ तेन वक्तव्यः सम्बन्धः सप्रयोजन इति । तथा च सिद्धसाध्यसमभिव्याहारात् सिद्धः साध्यायोपयुज्यते इति हेतुत्वेन । ननु नित्यानां वर्णानां साध्यत्वमेव कुतः इति चेत् सत्यं, तेषां व्यञ्जकवायोर्जन्यत्वमादाय साध्यत्व-व्यवहारो ननु वर्णानामिति । शब्दैः शमिति, शब्दैः परम्परया काव्यरचनादिद्वारा ऐहिकं, यागयोगाद्यनुष्ठानद्वारा पारलौकिकं स्वर्गमोक्षरूपं कल्याणञ्च भवतीत्यर्थः । इत्यादि, इतिशब्दः प्रक्रान्तपरामर्शी । शं शब्दैरिति वाक्येन प्रयोजनाभिधेयसम्बन्धाः, प्रयोजनं कल्याणम्, अभिधेया वक्ष्यमाणसाधुशब्दाः, सम्बन्धो जन्य-जनकभावः, प्रदर्शिता इति शेषः । अथ साधुशब्दव्युत्पादनाय शास्त्रं करिष्यमाणः परामृशति । साध्वसाधुशब्दान् प्रत्येकमुल्लिख्य साध्वसाधुशब्दपरिज्ञानं युगसहस्रेणाप्यशक्यं, शब्दानामनन्तत्वात् । ततश्च बहुतरविशेषावच्छिन्नसंग्राहिकैका संज्ञा विधेया व्यव-हारार्थम् । तथाच, संज्ञा च परिभाषा च विधिर्नियम एव च । अतिदेशोऽधिकारश्च षड्विधं सूत्रलक्षणम् इत्युक्तम् । व्यवहारार्थं स्वशास्त्रे कृतःसङ्केतः संज्ञा,यथा अक् इक् इत्यादि । परितो व्यापृता भाषा परिभाषा । सा द्विविधा न्यायमूला ज्ञापकसिद्धा च । यथा शिवेहीत्यादौ स्थानिवदादेश इति न्यायात् आदिष्टाङि अवर्ण-लोपः । राज्ञी इत्यत्र सदानोऽल्लोप इति नित्यमकारलोपः, आदौ-पोरित्यत्र निरनुबन्धस्य ग्रहणेन न सानुबन्धस्य ग्रहणमिति ज्ञापनात् । विधानं विधिरप्राप्तिप्रापकः, क्वचित् वर्णोत्पादनरूपः क्वचिदभावरूपः, तस्यैव भेदौ नाशनिषेधौ, क्वचिदादेशरूपश्च । यथा

स्याद्यन्ताधिकारः। सन्ध्यध्यायः।

## अथ संज्ञा।

१। अ इ उ ऋ ऌ क, ए ओ ङ, ऐ औ च हं य व र ल, ञ ण न ङ म, झ ढ ध घ भ, ज द ग ब, ख फ छ ठ थ, च ट त क प, श साद्यन्ताख्याः। (अ—स।१।।।, आद्यन्ताख्याः १।।।)।

एषां मध्ये ये वर्णास्ते आदिवर्णान्त्यवर्णसमाहारसंज्ञाः स्युः।

---

रामाणां, शिवायोनमः, अ अनन्तः, मुरारिरित्यादौ नुमादि विधिः। सामान्यप्राप्तकार्य्यस्य विशेषावधारणं नियमः, यथ वृत्रहा इत्यादौ घनियमः। अन्यधर्मस्य अन्यत्रारोपणमतिदेशः यथा भव्यं भाव्यमित्यादौ अच्त्वातिदेशात्दवादयः। पूर्व्वसूत्र स्थितस्य दस्य परसूत्रोपस्थितिरधिकारः, यथा सह र्णं घ इत्यतः सह शब्दस्यादिगोचोरित्यादावनुवृत्तिः। उक्तयोः (१) कथं सूत्रत्वं—

अल्पाक्षरमसन्दिग्धं सारवद्विश्वतोमुखम्।
अस्तोभमनवद्यञ्च सूत्रं सूत्रविदोविदुरिति (२) दर्शनात्।

---

२। अइ। अश्च इश्च उश्च ऋश्च ऌश्च ते अ इ उ ऋ ऌ लुप्तप्रो

---

(१) ओं नमः शिवाय शंशब्दैरित्यनयोः।

(२) अल्पाक्षरमिति—अल्पाक्षरं संक्षिप्तवर्णविन्याससाध्यम्। असन्दिग्धं इदमेतदन्यद्वेति बुद्धिभेदाजनकम्। सारवत् निष्कृष्टार्थयुक्तम। विश्वतोमु बहुषु लक्ष्येषु प्रवृत्तम्। अस्तोभं निरर्थकशब्दैर्वर्ज्जितम्। अनवद्यं अश्लीलत्वादि दोषशून्यम्।

दं, तेभ्यः कमितं करोति, अ इ उ ऋ, ऌ क ए ओ ङ इत्यत्र ककारं विना अ इ उ ऋ ऌणामनुवृत्त्यो तेभ्यः ए ओ इत्येताभ्यां ङमितं करोति, एवं ङकारं विना अ इ उ ऋ ऌ ए ओ इत्येषामनुवृत्त्या तेभ्यः ऐ औ इत्येताभ्यां चमितं करोति, तथा चं विना हससूत्रे अनुवृत्तिरित्यर्थः (१)। चत्वारि दानि, अन्यथा एकदले कङचां चावयवत्वे (२) हादिवदित्त्वं न स्यात्। एषाममैन्धिर्न्ना-जो अन्त इत्यादिना चादिपाठात् (३)। हश्च यश्च वश्च इत्यादि-चंसः। हादिसान्ता लुप्तप्रोक्तान्ताः। अन्तश्च अन्तश्च अन्तौ ताभ्यां सह आदिः आद्यन्तौ राजदन्तादित्वादादिशब्दस्य पूर्व्वनिपातः शाकपार्थिवादित्वान्मध्यपदलोपः, आद्यन्तौ आख्या येषां ते आद्य-न्ताख्याः (४)। एषां मध्य इति, एषां अकारादिसकारान्तानां मध्ये यान् वर्णानपेक्ष्य य आदि स्तेन सह यान् वर्णानपेक्ष्य योऽन्त-स्वरूपो योऽवयवश्च स तेषां संज्ञेत्यर्थः (५)। अतएवोक्तं समाहार-

---

(१) इत्थं परपदे सर्व्वेषां पूर्व्ववर्णानां अनुवृत्तावपि ग्रन्थप्रयोगानुसारेण तत्तत्संज्ञा वेदितव्याः। तेन अक् इक् इत्यादिवत् उक् इत्यादीनामप्रयुक्तत्वादना-देयत्वमिति। अतएव "अक् इत्यादिसंज्ञा यथायोग्यप्रयोजनमुद्दिश्य योज्या" इति का-सि।

(२) द्वन्द्वसमासावयवत्वे सति।

(३) चादिर्गिर्निरिति वक्ष्यमाणसूत्रे चादिगणे अचां पाठादित्यर्थः।

(४) क्वचिदादिवर्णेन सह अन्तस्वरूपोऽन्तस्थितो यो वर्णस्तमादाय संज्ञा भवेत्। यथा अक् इत्यादयः। क्वचिच्च अन्तावयव-स्वरूपवर्णमादायेत्यर्थः। यथा अन् इत्यादयः।

(५) अन्तश्च अन्तश्च अन्तावित्येकशेषे एकेनान्तशब्देन कङचा इतो वर्णा अन्येन च द्वन्द्वसमासावयवीभूतवर्णा गृह्यन्ते इत्याशयः। "एषामिति अभेदसम्बन्धे

४ । इत् कृते । ( इत् ।१।, कृते ।४। )

कस्मैचित् कार्य्यायोच्चार्य्यमाणो वर्णः इत्संज्ञः स्यात् । तस्य-कार्य्येऽनुच्चारः । यथा अचि कङचाः संज्ञार्थाः । हसे अकार उच्चारणार्थः ।

---

संज्ञाः स्युः, सम्यक्प्रकारेण आहरणविधायिकाः(१) संज्ञास्तेषां भवन्तीत्यर्थः । अन्यथा यदि सर्व्वेषामादिवर्णेन सह सर्व्वेषामन्तः मकारः सर्व्वेषां संज्ञा भविष्यति तदा सर्व्वान् वर्णानुल्लिख्य एकाक्षरसंज्ञा कृता स्यात् न तु आद्यन्ताख्या इति (२) । प्रत्याहारा हि—अक् अच् अव् अम् अञ् इक् इङ् इच् इल् (उक्) (३) ऋक् एङ् एच् एह् ऐच् हल् हव् हस् यँल् यम् यप् वम् ञम् ञप् ञम् णङ् णम् णप् झभ् झव् झप् झम् ढभ् जव् खथ् खप् खस् छत् चक् चप् शस् । एते चत्वारिंशत् शब्दाः प्रत्याहाराः ॥

४ । इत्कृते ॥ कृते इति निमित्तार्थे व्यं, एति गच्छतीति इत् । कस्मैचिदित्यादि । कस्यचित् कार्य्यस्य हेतोरुच्चार्य्यमाण उपदिश्य-

षष्ठी, मध्ये इत्येकारान्ताव्ययशब्दोऽधिकरणमात्रवाची तेनान्तस्तूते ये वर्णा" इति । का-सि । "मध्यशब्दस्येह मध्यावयववाचित्वे तु अकारसकारयोः प्राप्तिर्न स्यादि"ति दुर्गादासः

(१) सम्यक् प्रकारेण ग्रन्थोपयोगित्वेनेत्यर्थः । आहरणम्—मेलनम् ॥

(२) वक्ष्यमाणफभोत्वादिवद् येन केनचिदेकाक्षरेणैकां संज्ञामकरिष्यदित्यर्थः । "स्युरिति बहुवचननिर्द्देशात संज्ञानां नानात्वं ज्ञापितमिति" । का-सि ।

(३) आचार्य्यप्रयुक्ताः संज्ञाश्चत्वारिंशत् । तर्कवागीशेन तु परमतमनुसृत्य स्वकृतटीकायां उक् इति संज्ञायाः प्रयुक्तत्वादिहापि उक् संज्ञा कृतेति ।

५। आ वत् स्वघंप्लु। ( आ ।१।, वत् ।१।, स्वघंप्लु ।१। ) ।

अ आ अ ३ इति वर्णत्रयं क्रमेण स्वघंप्लुसंज्ञं स्यात् । वत् शब्दात् इ ई इ ३ इत्यादिषु च । स्व एज् नास्ति ।

मानो वर्ण इत्संज्ञः स्यात् । तथाच आचार्य्यैर्यत् यत् कार्य्य-मुद्दिश्यैव यद्यदुपदिष्टं तत्तत् प्रयोजनमुद्दिश्यैव इत् संज्ञा कृता । तेषां तु प्रयोगकाले अनवस्थानं अन्वर्थसंज्ञाबलादित्याह तस्ये-त्यादि । तस्य इत्संज्ञकवर्णस्य कार्य्ये कार्य्यकाले अनुच्चारः अप्रयोग इत्यर्थः । ननु अक् इङ् एजित्यादौ यथा प्रत्याहारार्थमुपदेशः कङ्वां, तथा कथं नाकारादीनामिति चेन्न, आदिशब्दस्यावय-वार्थत्वात् । अन्तशब्दस्तु स्वरूपावयवार्थ इति । इत्संज्ञस्य प्रयोगकाले अनवस्थानं दर्शयति यथेत्यादि । अचि अकारादि-नववर्णमात्रघटितप्रत्याहारे कङ्चा अक्इङ्एजित्यादिसंज्ञा-प्रयोजनका इत्यर्थः । एवं हसि अकारस्य प्रयोजनान्तराभावात् उच्चारणप्रयोजनकत्वमेव ।

५। आ इति बहुत्वगोचरितं लुप्तप्रोक्तं दं, वत्शब्दः साद्दृश्यार्थेय्यं, स्वघंप्लु लुप्तप्रोक्तं दं, स्वश्च घंश्च प्लुश्च तत् । नन्वेक-वर्णस्य संज्ञात्रयं निरर्थकं, एकेनैव चरितार्थत्वात् । न च यथा प्रादे-शिनिव्यसंज्ञात्रयं तथात्रापीति वाच्यं, इह फलभेदाभावात्, तत्र तु शिनिव्यानां फलभेदेनावश्यविधेयत्वमिति । नापि त्रिवर्णात्मकसंज्ञा वाच्या, एकाक्षरेणैव चरितार्थत्वात् गौरवाच्च, यतो मात्रालाघवे-नाचार्य्याः पुत्रोत्सवं मन्यन्ते इति स्मरणात् । तस्मात् संज्ञात्रयेण

संज्ञित्रयमुपस्थाप्यते। तथाहि यदैकक्षणोच्चरिताकारस्तदा तस्य ह्रस्वसंज्ञा, यदा द्विक्षणोच्चरिताकारस्तदा तस्य दीर्घसंज्ञा; यदा बहुक्षणोच्चरिताकारस्तदा तस्य प्लुतसंज्ञा, बहुक्षणोच्चरितस्य एक-द्विक्षणोच्चरितत्वं विना बहुक्षणोच्चरितत्वासम्भवात्। तथाचाहुः शिक्षाकाराः।

एकमात्रो भवेत् ह्रस्वो द्विमात्रो दीर्घ उच्यते।
त्रिमात्रस्तु प्लुतो ज्ञेयो व्यञ्जनं चार्द्धमात्रकमिति॥

अत्र त्रिमात्रपदं बहुमात्रोपलक्षणम्। एके तु अश्व आंश्व अश्व सौत्रत्वात् सन्धिः बहुलं ब्रह्मणीत्युक्तेः, तथाच छन्दोवत् सूत्राणि भवन्तीति भाष्यमित्याहुः। वदिति आशब्दसमभिव्याहा-रात् अवत्वैकमात्रत्वद्विमात्रत्वबहुमात्रत्वधर्म्मेण मातृश्यं गृह्यते। तेन इ ई इ ३ इति, आदिना उ ऊ उ ३ ऋ ॠ ऋ ३ ऌ ॡ ऌ ३। (१) नन्वेवः सन्ध्यक्षरत्वात् ह्रस्वाभावं दर्शयति ह्रस्वएज् नास्तीति। व्युत्क्रमेणान्वय स्तेन ए ए ३ ओ ओ ३ ऐ ऐ ३ औ औ ३ इति। अनच्त्वात् (२) प्रतक्ष्य प्ररक्ष्य इत्यादौ ह्रस्वाभावात् ह्रस्वस्य तन् पितीति तन् न स्यात्।

(१) "केचित्तु आवदित्येकपदं मत्वा इ ई इ ३ इत्यादीनां संज्ञात्रयं सिद्धं कुर्व्वन्ति, तन्मते कथमसिद्धस्योपमानत्वं सङ्गच्छते। अमृतवत् दधि भुङ्क्ते इति प्रयोगे अदृष्टामृतस्य यथा स्वादुत्वम् अर्थतो दधिभोजनद्वारा सिद्ध्यति तथात्र कल्पनादित्याहुः"। का—सि।

(२) द्वयोर्व्यञ्जनयोर्द्वाभ्यामर्द्धमात्राभ्यां यद्येकमात्रा भवेत् तदा प्रतक्ष्येत्यादौ एकमात्रस्य ह्रस्वत्वेन ह्रस्वस्य तन् पितीति कथं तन् न स्यादित्याशङ्क्याह अनच्त्वात् व्यञ्जनानामजभिन्नत्वात् अचामेव ह्रस्वदीर्घप्लुतसंज्ञाविधानादित्यर्थः।

६ । जपोऽक् समो र्णा ऋक् च । (जपः १।, अक् ।१।, समः १।, र्णः १।, ऋक् ।१।, च ।१।) ।

समानो जपोऽक् च परस्परं र्णसंज्ञः स्यात्, ऋक् च । साम्यन्त्वेकस्थानत्वम् ।

अत्रयं एह क ख ग घ ङाः कण्ठ्याः ।

इत्रयं च छ ज झ ञ शा ए ऐ यास्तालव्याः ।

ऋत्रयं ट ठ ड ढ ण र षा मूर्द्धन्याः ।

ऌत्रयं त थ द ध न ल सा वो दन्त्याः ।

उत्रयं प फ ब भ म ला ओ औ ओष्ठ्याः ।

एषां मध्ये यो येन समः स तस्य तत्र तत्र ।

६ । जपः । जपाग्टकाः(१) प्रत्याहाराः । जपाकोः पृथक् टकरणात् जप् जपेनैव अक् अकेनैव र्णसंज्ञस्तेन कुम्भकार इत्यादौ न सह र्णे घः । ऋकारऌकारयोः स्थानवैषम्यात् पृथग्टकोविधानं, तेन होतृकार इत्यादौ ऌकारेण सह ऋकारस्य घः । साम्यमिति समस्य भावः साम्यं ब्राह्मणादित्वात् ष्णः । एकस्थानत्वमिति एकस्थानोच्चरितत्वमित्यर्थः । एहः प्रत्याहारः ए ओ ऐ औ ह इति । कण्ठ्याः कण्ठे भवाः, शरीरावयवाद् य इति यः, एवमन्यत्र । उभयत्र पाठात् ए ऐ कण्ठतालव्यौ, ओ औ कण्ठौष्ठ्यौ, वकारो दन्त्यौष्ठ्यः । नच अत्रयम् एहकवः (२) कण्ठ्या इत्यादि वाच्यं, अन्योन्याश्रय-

---

(१) जप + अक + ऋकः ।

(२) कव इति कुपल्‌शब्दाज्जसि रूपम् ।

दोषात् (१)। सवर्ण इति परे। एषामिति। एषां अ आ अ ए इ क ख ग घ ङ इत्यादिवर्णानां मध्ये येन वर्णेन समो यो वर्णस्तस्य सामान्येन विधानेन सम आदेशः स्यात् नलसमादेशः। यथा भृज्जौ भृज्जः इत्यादि। तत्रेति परमी, पूर्वस्य परनिमित्तकसामान्यादेशे परवर्णस्य सम आदेशः। यथा शान्तः अङ्कित इत्यादि। तत इति पी, परस्य पूर्वनिमित्तकसामान्यादेशे पूर्ववर्णस्य सम आदेशः। यथा वाग्घरिः अजभसोरित्यादि। अनियमे प्राप्ते वचनम्। अत्र वदन्ति—

> सूत्रे प्रान्तं यद्विधेयं द्यन्तं यत्राप्यते हि तत्।
> त्रान्तं यत् तस्य योगे स्यात् ष्यन्तं यस्मात् परन्तु तत्॥
> यस्य स्थाने भवेत् कार्य्यं तत् ष्यन्तं समुदाहृतम्।
> सान्तं गम्ये परे वाच्ये यस्मिन्नुपपदे हि तत्॥
> क्वचिद्व्यत्ययतो (२) ज्ञेयमिदं पाणिनिसम्मतम्।

यथा—सहर्णर्घ इत्यादि, त्रौसे लृतो व्रिमित्यादि, वारादर्थैरित्यादि, आदिगीचोरित्यादि, जसशसोः शिरित्यादि, घेशप्रे इत्यादि। परे तु तुल्यास्यप्रयत्नं सवर्णमिति (१।१।९) (३) प्रयत्नसाम्ये। प्रयत्नास्तु—

(१) स च दोषः स्वपक्षसापेक्ष-परपक्षसापेक्ष-पक्षकत्वरूपः। तथाच वर्णानां स्थाननिर्द्देशे कर्त्तव्ये कु इत्युक्तौ सवर्णत्वज्ञानमेकस्थानत्वज्ञानमपेक्षते, एकस्थानत्वज्ञानमपि सवर्णत्वज्ञानमपेक्षते इत्यन्योन्याश्रयदोषापत्तेरित्यर्थः।

(२) व्यत्ययस्तु सेमयप्यदेः क्लोः ऽह्यणौ रे इत्यादौ बोध्यः।

(३) ताल्वादिस्थानमाभ्यन्तरप्रयत्नश्चेत्येतद्द्वयं यस्य येन तुल्यं तन्मिथः सवर्णसंज्ञं स्यादिति वृत्तिः।

७। चपोदिताकानिता णीः । (चपा ३।, उदिता ३।, अका ३।, अनिता ३।, णीः १। )

उकारेता चपेन इद्रहितेनाका णीं गृह्यते ।

---

आभ्यन्तरीणाश्चत्वारः स्पृष्टत्वादय ईरिताः ।

बाह्या विवारसंवारौ श्वासो नादश्च घोषतः ॥

अघोषश्चाल्पप्राणश्च महाप्राणोऽष्ट ते मता इत्याहुः ।

अस्मन्मते तु आस्यसाम्येनैव सिद्धेः ।

७। चपोदिता। उत् इत् यस्य स उदित् तेन, चप् प्रत्याहारः च ट त क प इति तेन, उदितेति चपेत्यस्य विशेषणं, नास्ति इत् यस्य सोऽनित् तेन, अकेत्यस्य विशेषणम् । तथाच च ट त कपा एते यदा उदितः स्युः तदा णीं गृह्णन्ति, एवं अक्, अ इ उ ऋ ऌ एते यदा इद्रहितास्तदा णीं गृह्णन्ति इत्यर्थः (१) ।

---

(१) "अत्र सामान्यशब्दस्य विशेषपरत्वात् कार्य्यान्तरासम्पादकीभूतोदिच्चपः समानवर्णग्राहकत्वं, तेन मघोनस्तुङ्‌वत्यत्र तुङः समानवर्णग्राहकत्वम्, अतो-कारस्य कार्य्यान्तरसम्पादकत्वात्, कार्य्यान्तरन्तु एतत्कार्य्यातिरिक्तकार्य्यं त्रिदचो-ऽद्वेर्नुस्मृति । दभोयार्वेति ज्ञापकात् कार्य्यस्वरूपेद्रहिताकः समानवर्णग्राह-कत्वं त्वदां टेरक्तौ चैक्याद्युद जयन्पोऽर्श आदित्वाद इत्यादिषु प्रदर्शितम् । स्वस्येत् मनीत्यत्र कार्य्यनाशारक इत्यत्र च इकारबोधक-इत्‌शब्दोपादानं ज्ञापक-सिद्धस्यानित्यत्वज्ञापनार्थम् । केचित्तु दभोयार्वित्यस्य ज्ञापकत्वेन प्रत्ययादेशयोः समानवर्णग्राहकत्वं नास्तीति व्याख्याय मघोन इत्यत्र तुङोऽपि समानवर्णग्राह-कत्वमित्यूचुः । तन्न युक्तं स्तुग्भिः ष्टुभिः ष्टु इत्येतयोश्चुटोः समानवर्णग्राहकत्वा-पत्तेः । तत्रैव इ ई इत्यक्‌संज्ञाक्रान्तकार्य्यस्वरूपस्य ह्रस्वेकारप्रयोगेणाप्राप्तत्व-मिति ज्ञापकमणविषयमेव, अतएव तेषां मते स्तुग्भिरित्यादौ न दोषः किन्तु मघोन इत्यत्र गत्यभाव इत्यवधेय"मिति । का-सि ।

८। इङोऽरलेङ् णुः। ( इङः ६।, अर् अल् एङ् ।१।, णुः १।, )।

इङः स्थाने अर् अल् एङ् एते णुसंज्ञाः स्युः।

---

८। इङः। अर्‌च अल्‌च एङ्‌च तत्, एङ् प्रत्याहारः, यद्वा प्रत्येकं दं, एषां यो येन सम इति नियमात् इदुतोरपि एकार-ओकारौ भवतः न तु ऋकारस्य ऌकारस्य च। ऋकारे त्रयोऽज्भागाः सन्ति तन्मध्यवर्त्ती तुरीयो रेफ इति (१) इकारो-कारभागसत्त्वेऽपि (२) अरुपदेशात् (३) अरेव णुसंज्ञः न तु इरुरौ ; एवं ऌकारेऽपि (४)। इङ इति षष्ठीनिर्द्देशात् एङ एव एङ्, यथा प्रेजते परोखति इत्यादौ णुः। गुण इति परे।

---

(१) अस्यायमाशयः 'उरण् रपरः' (उः ६। अण् ।१। रपरः १।) इति पाणिनि-सूत्रम्। ऋकारस्य स्थाने अण् अर्थात् अ इ उ एते त्रयो वर्णा रपरा भवन्ति। रइति रलयोः संज्ञा। ऋकारेणात्र ऌकारोऽपि गृह्यते। तेन ऋस्थाने अर्, इर्, उर् एते स्युः। एवं ऌ स्थाने अल् स्यादिति सूत्रार्थः।

(२) यद्यपि ऋस्थाने इर्, उर् इत्यपि भवतस्तथापि।

(३) गुणसंज्ञास्थले इति शेषः।

(४) त्रयोऽज्भागाः सन्तीत्यनेनान्वयः। तत्र इल्, उल् इत्येतयोरप्रयोगात् अलेव गुणसंज्ञः। अतएव कार्त्तिकेयसिद्धान्तेन चं ऋकारे त्रयोऽज्भागाः इत्यादि एवं ऌकारेऽपीत्यन्तं तर्कवागीशवचनमुद्धृत्य "तर्कवागीशस्तु पाणिन्यादिमतमव-लम्ब्याहे"त्युक्तम्। अन्यच्च, "सर्व्वत्र णुविधायकसूत्रे इङः प्राप्त्यर्थमियं संज्ञा, तेन णुर्घुङ इत्यत्र अन्त्येङः प्राप्तिः। आदिगेचोरित्यनेन इको गेर्घोरित्यनेन एङश्च णुविधानेनैव इङः प्राप्तौ अत्र इङ उपादानं व्यर्थमिति चेन्न,—स्वमोजस्घिरिति-वत्, उद्देश्यविधेयभावान्वयात णुपदेन अरलेङ् इत्यस्योपस्थितत्वात्। अत्र तु णुपदेन इङःस्थानकर्त्तव्यारलेङ् वाच्यमिति न तु केवलारलेङ्। अतः कार्य्येण कार्य्युपस्थाप्यते, तेन व्रजवदेतिस्थले त्रिपदेन कार्य्यिस्वरूपाजुपस्थाप्यते, अच आरालैज् इत्यत्र अच्ग्रहणादि"त्युक्तम्। "ईमत्वादित्रर्णएकारयोरेकारः उवर्ण-

९ । अच आरालैच् त्रिः । ( अचः ६।, आ आर् आल् ऐच् ।१।, त्रिः १। ) ।

एते त्रिसंज्ञाः स्युः ।

१० । प्रपरापसंन्यवानुनिर्दुर्व्यधिसूत्परिप्रत्यभ्यत्यप्युपाङ् गिः । ( प्र—आङ ।१॥, गिः १। ) ।

एते विंशतिर्गिसंज्ञाः स्युः ।

अत्वार्चायां स्वतौ, नातिक्रमेऽतिः, पर्य्यधी गतौ ।
अपिः पदार्थ-सम्भाव्य-गर्हानुज्ञा-समुच्चये ॥

---

९ । अचः । आश्च आर् च आल् च ऐच तत्, ऐच् प्रत्याहारः, सौत्रत्वात् सान्तविधेरनित्यत्वाद्वा न चैक्यादः ; शेषं पूर्व्ववत् । वृद्धिरिति परे । ·

१० । प्रपरा । प्रश्च परा च अपश्च सम् निश्च अवश्च अनुश्च निश्च दुश्च विश्च अधिश्च सुश्च उत् परिश्च प्रतिश्च अभिश्च अतिश्च अपिश्च उपश्च आङ् च ते । विंशतिरिति स्वरूपकथनम् ।

अत्वेत्यादि । अत्व प्रादौ स्वतौ पूजार्थौ न गी, यथा सुस्तुते, अतिस्तुते । अतिक्रमे अतिर्न गिः, फलोदयेऽपि क्रियाप्रवृत्तिरतिक्रमः तस्मिन्, यथा अतिसिञ्चति शालीनित्यादि । गतौ पर्य्यधी न गी, यथा परिसेधति अधिसेधति इत्यादि । याभ्यां पर्य्यधिभ्यां योगे गत्यर्थधुः स्वार्थं न जहाति, गत्यर्थधुसमभिव्याहृतौ पर्य्यधी

---

ओकारयोरौकारः । ततोऽर्व्वाग्दृष्टौ अरलौ रलयोः समत्वात् क्रमेण ऋवर्ण-लृवर्णयोः स्याताम्, समुदायसाम्याभावे आंशिकसाम्यस्यापि ग्राह्यत्वादिति-दुर्गादासः ।

इत्यर्थः, (१) तथाच अधिपरी अनर्थकाविति परे। अपिः पदार्थेत्यादि। पदार्थश्च सम्भाव्यश्च गर्हा च अनुज्ञा च समुच्चयश्च तत् तस्मिन्, अप्रयुज्यमानपदस्यार्थः पदार्थस्तस्मिन्, यथा सर्पिषोऽपि स्यात्, मधुनोऽपि स्यात्, विन्दुपदस्यार्थे अपिशब्दः (२)। सम्भाव्यः सम्भावनं योग्यतेति यावत्, यथा अपि सिञ्चेन्मूलसहस्रम्। गर्हा निन्दा, यथा अपि स्तुयात् वृषलम्, अपि सिञ्चेत् पलाण्डून् ब्राह्मणकः। अनुज्ञा प्राकाम्यं, यथा अपि सिञ्च अपि स्तुहि यथेष्टं कुरु इत्यर्थः। समुच्चयः परस्परसंश्लेषः, यथा अपि सिञ्च अपि स्तुहि, उभयं कुरु इत्यर्थः, सर्व्वत्र षत्वाभावः फलम्। स्वादेरनुकरणात् क्विन्नलुक्, न गौणानुकरणयोरिति निषेधात्। ननु चादिर्गिर्निरित्यतः प्राक् गिसंज्ञा क्रियतां कथमिहेति चेन्न, धुसंज्ञायाः प्राक् गिसंज्ञाविधानं धोः प्राङ्नियतप्रयोगार्थं, तेन प्रकृष्टं नयति प्रणायकः, प्रकृष्टमेजते प्रेजकः इत्यादौ णत्वणुत्वे स्तः, न तु प्रगतो नायकः, प्रनायकः, प्रगतं एजकः प्रेजकः इत्यादौ (३), द्व्यय्योगे व्यस्येति सत्वाभावात्। कथं तस्य व्यत्वमिति, चादिपाठात् (४)। ननु प्रजयति अभ्यागच्छति प्रतिष्ठते इत्यादौ

---

(१) अतएव उपसर्गस्य द्योतकत्वं न तु वाचकत्वमित्युक्तम्।

(२) अत्र अप्रयुज्यमानविन्दुपदस्यार्थं आक्षिप्यते इति का-सि। पदार्थोऽल्पत्वं अपि सिञ्चति अल्पं सिञ्चतीत्यर्थ इति दुर्गादासः।

(३) प्रनायक इत्यादौ प्रादीनामध्याहृतगतिक्रियां प्रत्युपसर्गत्वं न तु नयनादिक्रियां प्रतीति। अतएव प्रगतोऽध्वानं प्राध्व इत्यत्र गेरध्वन इत्यप्रत्ययः।

(४) द्व्ययोगे विशेषणभावापन्ने सतीत्यर्थः, व्यस्येति-व्यस्यग्यनुकारेति सूत्रेण, सत्वाभावात्-समासत्वाभावात् न णत्वणुत्वे इति पूर्व्वेणान्वयः। धातुप्रकरण-घटितणत्वविधेः पूर्व्वं व्यस्यग्यनुकारेति समासविधानात् समासाभावे णत्वं नस्यादिति-

११। भ्वादिर्धुः। (भ्वादिः १।, धुः १।)।

भू-सत्तायामित्यादिर्गणो धुसंज्ञः स्यात्।

---

प्रकर्षाभिमुख्यसामीप्यगमनं गेरेव कल्प्यते, तदन्वयव्यतिरेकानु-विधानादिति(१) चेत् न, बधार्थराधां चमार्थमृषामिति विशेषणेन धोरेवानेकार्थत्वकल्पनात्, प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थबोधकत्वाच्च (२)। अतएव गेर्द्योतकत्वं, न वाचकत्वं, द्योतकत्वं हि सामान्यशब्दानां विशेषतात्पर्य्यग्राहकत्वम्। प्रतिष्ठते इत्यत्रापि विरोधिलक्षणया धोर्गमनोपस्थितितात्पर्य्यसंग्राहकत्वमिति। तथाचोक्तं कामधेनौ "क्रियावाचित्वमाख्यातुं प्रसिद्धार्थः प्रदर्शितः। प्रयोगतोऽन्ये मन्तव्या अनेकार्था हि धातवः"। तथाच भट्टौ सहस्रशोऽसौ शपथानशप्यत्, अकरोदित्यर्थः।

११। भ्वादिः। "भूरादिर्यस्य गणस्य सः, तद्गुणसंविज्ञान-

---

सूचितम्। तेन प्रनायक इत्यत्र उपसर्गत्वाभावात् समासाभावे णत्वं नस्यात्। प्रेजक इत्यत्र च अनुपसर्गत्वात् गेर्धोरित्यनेन गुणोऽपि नस्यात्। अतएवोक्तं "प्रादीनामुपसर्गत्वं धातुयोगे च सर्व्वदा। अव्ययत्वं लिङ्गयोगे कथितं पूर्व्वसूरिभिरित्युक्तेः प्रादिर्यदा धातुयोगी भवति तदा तस्योपसर्गत्वं, यदा तु लिङ्गयोगी तदा तस्याव्ययत्वमिति। प्रनायकः प्रगतो नायको यस्माद्देशात् स इत्यादौ प्रादयो नोपसर्गा अपि तु तत्प्रतिरूपकाः। तेन तेषां चादिगणे पाठात् निपातत्वेऽव्ययत्वं सिद्धमिति"।

(१) अन्वयस्तत्सत्त्वे तत्सत्ता व्यतिरेकस्तदसत्त्वे तदसत्ता, ततश्च प्रजयतीत्यादौ सत्युपसर्गे प्रकर्षाद्यर्थः, असति च तस्मिन् तदर्थाभाव इत्येवमन्वयव्यतिरेकाभ्यां तत्तदर्थबोधनादित्यर्थः।

(२) प्रजयति इत्यादौ जिप्रभृतीनां धातूनां प्रकृतित्वम् न तु प्रादीनामुपसर्गाणामिति।

ह:। पृथ्वीवाचकभूशब्दस्य धुसंज्ञां निरस्यन्नाह भूसत्तायामित्यादि। गणशब्द: समूहवचन:। तथाच भूसत्तायामित्यादिदशगणपठितानां क्रियावाचिनां धुसंज्ञेत्यर्थ:। क्रिया तु क्वचित् सिद्धा, आकाशादेर्यदस्तित्वादिकम्। क्वचिदसिद्धा, तण्डुलादे: पाकाद्याश्रितक्रमरूपा पूर्व्वापरीभूतावयवा च (१) साध्यत्वेन विवक्ष्यते इति। यदुक्तं, यावत्सिद्धमसिद्धं वा साध्यत्वेन विवक्ष्यते। आश्रितक्रमरूपत्वात् सा क्रियेत्यभिधीयते (२)। यद्वा क्रिया ध्वर्थ: (३)। स च परिस्पन्दनसाधनसाध्य:, यथा गमनादि:, अपरिस्पन्दनसाधनसाध्योऽपि, यथा अवस्थानादि:। गणे पाठाभावात् अलपयति वर्पयति संज्ञपयति इत्यादेर्न धुत्वम् (४)। गणपाठात्तु श्वेतते मेघ:, रज्यते रवि:, नीलति तमालवनं, शोणति कोकनदं, स्पृशति वायु:, विशेषयति अर्थं, समवैति घटं, जानाति शिवं,

---

(१) पूर्व्वापरीभूतौ अवयवौ यस्यास्तादृशी, पूर्व्वावयवोऽधिश्रयणं तत्र चुल्ल्यां स्थालीस्थापनं, अपरावयवो जलतण्डुलाद्यर्पणम्। अतएवोक्तं विक्लित्त्यनुकूलव्यापार: पाक इति।

(२) सिद्धं नित्यं सत्तादिकं, असिद्धं अनित्यं गैणाभावादिकं वा, यावत् यत् समस्तं वस्तु साध्यत्वेन प्रयत्नादिक्रियारूपत्वेन विवक्ष्यते, आश्रितक्रमरूपत्वात् आश्रितं प्राप्तं क्रमरूपं पूर्व्वापरीभाव: येन तत् आश्रितक्रमरूपं तस्य भावस्तत्त्वात् सा क्रियेत्यभिधीयते।

(३) अस-नश-प्रभृतिवाच्यानां सत्ताभावादीनां पूर्व्वापरीभावस्याभावात् कथं क्रियात्वमित्याशङ्क्याह यद्वेति। पूर्व्वाचार्य्यकृतगणपठितानां भ्वादीनां वाच्यैव क्रियेति निष्कर्ष:।

(४) शिष्टप्रयोगानुसारीदं लक्षणं (धातुलक्षणं) शिष्टैश्च एते (अलपयतीत्यादय:) न प्रयुक्ता इत्येषामर्थवत्त्वैव नास्तीति कातन्त्र-टीका।

१२। सित्यादिः क्तिः। (सित्यादिः १, क्तिः १)

स्यादिस्त्यादिश्च क्तिसंज्ञः स्यात्।

---

सुखमिच्छति, श्रत्नं इष्टोत्यादौ गुण-विशेष-समवायादीनां क्रियात्वमेवेति शाब्दिकाः प्राहुः (१)। भूसत्तायाम् अस भुवीत्युक्तेरिहार्थकथने अन्योन्याश्रयो न दोषः। यद्यपि विकल्पे वा, विशेषे वि, आङ् च अवधारणे, इत्यादीनां क्रियार्थत्वं, विकल्पते इत्यादिप्रयोगात्, तथापि वादीनां विकल्पाद्यर्थद्योतकत्वान्न धुसंज्ञेति। जृ-श्वि-प्रभृतीनां सौत्राणां गणे पाठाभावेऽपि ध्वधिकारे पाठादेव धुसंज्ञा। दशगणा हि, भ्वाद्यदादि जुहोत्यादिदिवादि-स्वादयः स्मृताः। तुद्रुधादी तनादिश्च क्रीचुरादी इमे दश। चुरादेर्ञान्तत्वादेव धुत्वे सिद्धे विकल्पितञान्तानां ञेरभावपक्षे धुत्वार्थोऽत्र पाठः। पूर्व्वाचार्य्यकृतधातुपाठाभिप्रायेणेदं सूत्रितम्, अन्यथा स्वकृतगणक्रमेण जृ-श्वि-स्तन्भु विषेत्यादीनाम् इरित्त्वादेव ङे सिद्धे पृथग्विधानमनर्थकं स्यात्। धातुरिति परे।

१२। सित्यादिः। सिश्च तिश्च तौ सितौ तावादी यस्य स सित्यादिः। तद्गुणसंविज्ञानद्वः। द्वन्द्वात् परः श्रूयमाणः शब्दः प्रत्येकमभिसंबध्नातीति न्यायादाह स्यादिस्त्यादिश्चेति। स्यादय एकविंशतिः त्यादयः साशीतिशतसंख्यका वक्ष्यन्ते। विभक्तिरिति परे।

---

(१) श्वेतते मेघ इत्यादौ श्वितप्रभृतीनां गुणादिवाचकत्वेऽपि गणपाठात् धातुत्वमिति दर्शितम्। एवं गाडि वदनैकदेशे, द्रव्येऽपि वर्त्तमानस्य गण्डेर्धातुत्वं,

१३ । क्तद्व्वान्येकद्विबहुष्वेकशः ।.

( क्तद्व्वानि १।।।, एकद्विबहुषु ७।।।, एकशः ।१।।। )

क्तेरेकैकं वचनं क्रमात् क्त-द्व-व्व-संज्ञं स्यात्, तानि च क्रमादेकद्वि बहुष्वर्थेषु प्रयुज्यन्ते ।

---

१३ । क्तद्व । एकम् एकम् एकशः वीप्सायां चशस् । एकशब्दस्य ससम्बन्धिकत्वात् (१) क्तिं विपरिणम्याह क्तेरिति । अर्थेष्विति । अर्थशब्देन सित्याद्योरर्था गृह्यन्ते । तेन रामः, कृष्णः, देवैर्गम्यते स्वर्ग इत्यादौ लिधुभ्यां लिकर्त्राद्योरेकत्वद्वित्वबहुत्वविवक्षायां क्तद्व्वानि भवन्तीत्यर्थः । यद्यपि क्तद्व्वमेकद्विबहुष्वेकशः इति सूत्रिते सिद्धे व्वनिर्द्देशः क्वचित् व्यभिचारार्थः । तथाहि, विंशत्यादेरनावृत्तौ व्वे क्तम् । विंशत्यादिपरार्द्धपर्य्यन्तेभ्यो व्वे क्तं स्यादनावृत्तौ । एकोनविंशतिः शूराः, विंशतिः शैलशासिनां, परार्द्धमणवः । अनावृत्तौ किं, द्वे शते शूराणां, द्वे विंशती घटानामित्यादि । तथाच शतैस्तमक्ष्णामनिमेषवृत्तिभिरिति रघुः । तिष्यपुनर्व्वसुभ्यां भे चे द्वम् । तिष्य एकः, पुनर्व्वसू द्वौ, एभ्यो नक्षत्रे चे व्वे द्वं स्यात् । तिष्यश्च पुनर्व्वसू च तिष्यपुनर्व्वसू इष्येते । तिष्यार्थग्रहणात् पुष्यपुनर्व्वसू सिद्धपुनर्व्वसू इत्यपि । तिष्य-

---

ोम गणड इत्यपि सिद्धमिति कातन्त्रपञ्जी । गडि गण्डे इति कविकल्पद्रुमः । 'यत्र द्रव्यनिर्द्देशस्तत्र तन्निष्ठक्रियाविशेष उपलक्ष्यते इति मैत्रेयवोपदेवौ । केचित्तु गण्ड इति शब्दस्य व्युत्पत्त्यर्थमेवायं धातुर्मन्तव्यो नत्वस्यान्यत्र प्रयोग इत्याहु'रिति ...द्वीकायां दुर्गादासः ।

(१) सम्बन्धिसापेक्षत्वात् ।

पुनर्व्वस्वोरिति किं, राधानुराधाः (१)। भे किं, तिष्ये जातः पुनर्व्वस्वोर्जातौ इति जातार्थ-त्य-लुकि तिष्यश्च पुनर्व्वसू च ते तिष्यपुनर्व्वसवः। चे किं, यस्तिष्यः स एव पुनर्व्वसू येषां ते तिष्य-पुनर्व्वसवः, ये दृष्टिदोषेण विपर्ययेण पश्यन्ति इत्यर्थः। व्वे किं, एकत्वे माभूत्, तेन तिष्यपुनर्व्वसु इति (२)। सर्व्वो हि द्वन्द्वो विभाषयैकवद्भवति इत्यस्य ज्ञापकमिति। जात्यर्थादसंख्यया व्वं वा क्ते। जात्यभिधेये गम्यमाने क्ते व्वं वा स्यात्, न तु संख्यया योगे। सम्पन्नो यवः सम्पन्ना यवाः, गौरियं गाव इमा इत्यादि। सम्पन्नादेर्व्वं जातिवाचिविशेषणत्वात्। (३) वस्तुधर्म्मस्वरूपस्य योऽर्थः स्यात् परिचायकः। सा जातिराकृतिर्गम्या उपदेशादपि क्वचित्। असंख्यया किं, एको व्रीहिः। क्ते किं, व्रीहियवौ। अर्थेति किं, काश्यपस्य प्रतिकृतिः काश्यपः,(४) जातौति किं,देवदत्तो यज्ञदत्तः। लेर्गौरवे। लेर्गौरवे गम्यमाने क्ते व्वं वा स्यात्। त्वं गुरुः यूयं गुरवः महाशयः महाशया इत्यादि। अविशेषणास्मदो द्वे च। अविशेषण-स्यास्मदः क्ते द्वे च व्वं स्यात् वा। अहं ब्रवीमि वयं ब्रूमः, आवां

(१) राधे विशाखे द्वे, अनुराधाः सप्त चतस्रो वा, तासां द्वन्द्वे बहुत्वमेव।

(२) अत्र समाहारद्वन्द्वः।

(३) जातिमाह वस्तुधर्म्मेति।

(४) यद्यपि गोत्रञ्च चरणैः सहेत्युक्तेरस्य जातित्वमस्त्येव तथापि नात्र जात्यभिधानं चिकीर्षितं अतएव "जात्याख्यायामेकस्मिन् बहुवचनमन्यतरस्याम्"-मिति पाणिनिः (१।२।५८)। अत्र आख्यायामिति किं काश्यपप्रतिकृतिः काश्यपः। भवत्ययं जातिशब्दो नत्वनेन जातिराख्यायते। किं तर्हि? प्रतिकृति-रिति। काशिका।

१४। त्यन्तान्यौ दली। (त्यन्तान्यौ १॥, द-ली १॥)

त्यन्तशब्दो दसंज्ञः स्यात्, अन्यस्तु लिसंज्ञः।

ब्रूवः वयं ब्रूमः। अविशेषणेति किं, अहं पटुर्ब्रवीमि। वयमप्रगल्भ-मनसः इति तु विशेषणविशेष्यभावस्य कामचारात् अस्मद एव विशेषणत्वम्। यदा तु अस्मद एव विशेष्यत्वं तदा न स्यात्। फल्गुनीप्रोष्ठपदाभ्यो भे द्वे। फल्गुनीभ्यां प्रोष्ठपदाभ्याञ्च द्वे व्वं वा स्यात् नक्षत्रे। पूर्व्वे फल्गुन्यौ पूर्व्वाः फल्गुन्यः; पूर्व्वे प्रोष्ठपदे पूर्व्वाः प्रोष्ठपदाः। प्रोष्ठपदाशब्देन भाद्रपदाशब्दस्यापि ग्रहणम्। भे किं, फल्गुन्यौ माणविके। वर्षादेः क्रदयोर्व्वा तु वल्वजादेः। वर्षादेः क्रे द्वे च व्वं नित्यं स्यात् वैल्वजादेस्तु वा।

वर्षा दारा गृहा लाजाः सिकताश्च जलौकसः।
बहुलाः कृत्तिका आपो वस्रान्ते तु दशा मघाः।
अविज्ञातार्थकाः सर्व्वे यथा तव सुताः कति।
वल्वजा वल्वजश्चाप्सरसश्चैवाप्सराः समा।
समाः कविभिरुक्ताः सुमनसः सुमना अपि॥

१४। त्यन्तान्यौ। क्तिरन्ते यस्य स त्यन्तः, त्यन्तश्च अन्यश्च तौ, दश्च लिश्च तौ। त्यन्तदेन लुप्तक्तिकस्यापि ग्रहण, न दं तसाविति ज्ञापकात्। लिङ्गसंज्ञायाः प्राक् धु-क्ति-दसंज्ञाविधानात् धु-क्ति-दभिन्नस्य लिङ्गसंज्ञा इत्यर्थः (१)। तेन हन्धो दिप् अम्, अहन्

(१) अनुकरणस्थले तु धातुविभक्त्योरपि लिङ्गत्वं स्यात्, यथा भुवः प्राप्नो वा मम्, चे जसि वा इत्यादि।

## १५ । लुपि न सन्ध्याद्यविधौ ।

(लुपि ७।, न ।१।, सन्ध्याद्यविधौ १॥ )

लुबिति लोपे कृते यो लुप्तस्तदाद्यन्तयोः सन्धिर्न स्यात्, तदाद्यस्य च यो विधिः स च न स्यात् ।

इत्यत्र न नस्य लुप्, (१) भवतीत्यादेर्न स्याद्युत्पत्तिश्च । हरिहरौ पीताम्बरः इत्यादौ समुदितस्यावयवस्य त्यन्तत्वेऽपि समुदितस्य लिसंज्ञा तस्यात्यन्तत्वात् । अन्यशब्देन इहार्थवदनर्थवतोर्ग्रहणं, तेन रामो गङ्गा स्नानं प्र परा च वा इत्यादीनां लित्वमिति । स चार्थवद्ग्रहणे नानर्थकस्येति परिभाषया अनर्थवतो न ग्रहण मिति वाच्य, परिभाषायाः क्वाचित्कत्वात् । एष वन्ध्यासुतो याति खपुष्पकृतशेखरः । कूर्मलोमपटाच्छन्नः शशशृङ्गधनुर्द्धर इत्यादौ तु समुदायस्य वाच्याप्रसिद्धावपि लित्वं, खण्डशः प्रसिद्धेः । पृथक् सग्रहणादिति परे (२) । दं पदं, लिर्लिङ्गम् (३) ।

१५ । लुपि । आदौ भवः आद्यः, अश्चासौ आद्यश्चेति आद्यः,(४) आदेर आद्यः(५) अ आद्यो यस्य तदाद्यं, सामान्यत्वात्

(१) तत्र प्रकृतिनान्तलिङ्गस्य नस्य लुब्विधानात् ।

(२) पाणिनीये "अर्थवदधातुरप्रत्ययः प्रातिपदिकम्" १ । २ । ४५ । इति प्रातिपदिकस्य प्रथमलक्षणम् । "कृत्तद्धितसमासाश्च" १ । २ । ४६ । इति द्वितीय लक्षणम् । तत्र समासस्य पृथक् सग्रहणात् वन्ध्यासुतादिशब्दानां प्रातिपदिकत्व मित्युक्तम् ।

(३) प्रातिपदिकमिति परे ।

(४) आदिरवर्ण इत्यर्थः ।

(५) अत्र आदेरिति पञ्चम्यन्तं, तेन लुप्तस्य आदिवर्णादुत्तरो योऽवर्णः स आद्य इत्यर्थः । अतएव भो अत्र इत्यादौ नाकारलोपः ।

क्लीवत्वं, पश्चात् आद्यश्च आद्यश्च आद्यश्च आद्यं, क्लीवाक्लीवयोः क्लीवं वा तु क्वमिति क्रम्। तस्य विधिराद्यविधिः, ततः सन्धिश्च आद्यविधिश्च तौ (१)। लुविति वर्णानामदर्शनं विच्छेद इति यावत्। यद्यपि विश्व इति, श्रिया एति, क इह, देवा अत्र, भो अत्र, राजभ्याम्, राजभिरित्यादावुक्तरूपेण (२) सिध्यति तथापि सन्धिग्रहणं स्यादिलुपि (३) सन्धिज्ञापकमिति। अतएवाग्रे सन्धिग्रहणात् सन्धिलुप्येव न सन्धिरिति वक्ष्यति। शार्ङ्गिषु पिपक्षु इत्यादौ षत्वं स्यादेव अनवर्णाश्रितत्वात्। मघवान् इत्यादौ तु नो लुप् फेभाविति प्रकृतिनान्तस्यैव ग्रहणात् न नो लुप्। लुपि युक्तवत् लिङ्गं संख्या च (४)। लुविति यो लुप्तस्तदर्थे युक्तवत् प्रकृतिवत् लिङ्गसंख्ये स्याताम्। अङ्गस्यापत्यानि अङ्गास्तेषां निवास इत्यर्थे

(१) सन्धिशब्देनेह सन्ध्यध्यायस्थसूत्रविहितकार्य्यमिति बोध्यम्। आद्यविधि-रित्यत्र आदिशब्दस्य साकाङ्क्षत्वात् सर्व्वत्र लुप्तस्येत्यनेनान्वयः। तेन लुप्तस्य य आदिवर्णस्तस्य विधिर्न स्यात्। अतएव राजभ्यामित्यादौ आल्लिमभवीति नाकारः। एवं वज्रमाचष्टे इति ञौ टिलोपे क्विपि ञेर्लोपे वज्र् इति लिङ्गात् सौ स्यान्तस्याराद्दिति रेफस्य लुपि लुप्तस्यादिवर्णत्वेन जकारस्य चुङ् इति कङ् न स्यात् तेन वज इत्येव। तथा लुप्तस्य य आदिरवर्णस्तन्निमित्तकोऽपि विधिर्न स्यात्। तेन राजभिरित्यादौ न ऐस्। गङ्गे अत्र इत्यादौ व्वह्वेऽमीयू इत्येकारस्य सन्धिनिषेधे तन्निमित्तकस्याकारलोपस्यापि निषेधदर्शनेन सन्धिनिषेधप्रसङ्गे आदि-विधेर्निषेधेनैव तन्निमित्तकविधेर्निषेधस्यापि प्राप्तत्वात् भो अत्र इत्यादौ एङोऽत इति नाकारलोप इति दुर्गादासमतम्।

(२) आद्यविधिनिषेधेन।

(३) स्याद्यन्तप्रकरणीयसूत्रेण लुपीत्यर्थः।

(४) लुप्शब्देन लोपे कृते यथा सन्ध्याद्यविधिनिषेधस्तथा क्वचित् तद्धित-प्रत्ययानां लुपि तदन्तशब्दानां प्रकृतिवल्लिङ्गवचने स्यातामिति परेषां मतमावेदय-न्नाह लुपीति।

ष्णास्तस्य लुपि अङ्गा जनपदः। एवं पञ्चालाः पुण्ड्राः कुरवः। लुपि किं, लवणेः संस्कृतः, लवणाल्लुक्, लवणः सूपः (१)। द-भेदात् क्वचित् संख्यैव प्रकृतिवत्। यथा खलतिकस्य गिरेरदूरभवानि वनानि खलतिकं वनानि (२), वरणादित्वात् (३) ष्णास्य लुप्। क्वचिल्लिङ्गं प्रकृतिवत् यथा—हरीतक्याः फलानि, हरीतक्यः फलानि, विकारे फले लुप्। मे त्वविषयस्योत्तरदस्यैव पुंवद्भाव इति भाष्यं, मथुरा च पञ्चालाश्च मथुरापञ्चालाः। त्वविषयस्योत्तरदस्यैवेति किं, पञ्चालमथुरे। एकस्मिन्नाद्यन्तवद्व्यपदेशिवच्च। (४)

(१) लवणाल्लुगिति सूत्रेण लुकि कृते लुप्करणाभावान्नपूर्व्वोक्तं कार्य्यमिति।

(२) अत्र खलतिकशब्दस्य पुंस्त्वं न, केवलं वचनमेव।

(३) वरणादेश्च। वरणादेश्चतुर्थ्यर्थेषु उत्पन्नस्य त्यस्य लुप् स्यादिति तद्धित-टीकायां चातुरर्थिकप्रकरणे वक्ष्यतीत्युक्तं वरणादित्वादिति।

(४) इदानीमाद्यन्तशब्दार्थं निर्वक्ति एकस्मिन्निति। उक्तञ्च, आद्यन्तवदेकस्मिन्। १।१।२१। इति पाणिनीयसूत्रटीकायां तत्त्वबोधिन्यां "सत्यन्यस्मिन् यस्य पूर्व्वो नास्ति स आदिः। सत्यन्यस्मिन् यस्य परो नास्ति सोऽन्तः इति लोके प्रसिद्धं, तदुभयमेकस्मिन्नसहाये न सम्भवतीति तत्र आद्यन्तव्यपदिष्टानि कार्य्याणि न स्युरतोऽयमतिदेश" इति। अस्यायमाशयः यत्र द्वित्रा वर्णाः सन्ति तत्र यस्य पूर्व्वो नास्ति स एवाद्यः, यस्य च परो नास्ति स एवान्त्य इति वक्तुं युज्यते लोकप्रसिद्धेः। यत्र तु एक एव वर्णस्तत्र कथमाद्यन्तव्यवहार इत्याशङ्क्याह असहाये एकस्मिन् वर्णेऽपि आद्यन्तवत् कार्य्यमतिदिश्यते आरोप्यते। आद्यन्त-वदिति आद्यन्तयोरिवेति सप्तम्यन्ताद्वत्प्रत्ययः। आद्यन्तनिर्द्देशेन यत्कार्य्यं विहितं तदत्रापि भविष्यतीत्यर्थः। अतएव औपः तैङः इत्यादौ सुप् तिङ् शब्दाभ्यां ष्णे कृते लोकप्रसिद्धनिरुक्तादिलक्षणविरहितत्वेऽपि ष्णित्त्वेञ्चिराद्यच इति वृद्धिः स्यात्। चाययतीति इनृधोर्ञौ ञ्णित्यन्त्येति वृद्धिः। एवमन्यत्र। व्यपदेशिवच्चेति। अस्यायमर्थः—"विशिष्टोऽपदेशो व्यपदेशः मुख्यो व्यवहारः सोऽस्यास्तीति व्यपदेशी मुख्य इति यावत्, तेन तुल्यमिति तत्त्वबोधिनी।

१६। **चादिर्गिर्निः।** (चादिः १।, गिः १।, निः १।)।

चादिर्गणो गिश्च निसंज्ञः स्यात्।

एकस्मिन्नसहाये विषये आद्यन्तवत् कार्य्यमतिदिश्यते, व्यपदेशिवच्च। सौपः, तैङः, आदिवत्त्वादाद्यचो त्रिः। एवम् आयति ईत्यादावन्तवत्त्वात् त्रिः। आर्थ्यं ऋदन्तत्वात् घ्यण्। एवम् इः कामदेवः तस्मिन् औ अन्तवत्त्वाड्डौ। व्यपदेशिवदिति, व्यपदेशस्तादूप्येण कथनं विद्यते यस्य स व्यपदेशी तद्वत्, ई एव (१) यथा—एकोऽच् यस्य स एकाच् तस्मादिन्न स्यात् अवान् इत्यादौ।

१६। चादिः। च आदिर्यस्य स चादिः तद्गुणसंविज्ञानत्वेन चस्यापि निसंज्ञा। चादिर्यथा। चं औषट् वषड्ङ् स्वधा सह समं साकं पुरा हन्त किं वा तु स्वित् यदिवाऽथवा चण् चन

(१) भिन्नान्यैकार्थेति सूत्रस्य टीकायां "समस्यमानपदार्थोऽपि अन्यपदार्थः स्यात्, व्यपदेश्य-व्यपदेशिवद्भावात्। यथा—शोभनशरीरः शिवापुत्रः, जनार्दनस्वात्मचतुर्थ एवं त्युक्तवता तर्कवागीशेन व्यपदेश्य व्यपदेशिवद्भावो बहुव्रीहिसमास एवेति दर्शितम्; ततश्च यत्र बहुव्रीहौ समस्यमानपदार्थान्यपदार्थयोरभेदावगमस्तत्रैव व्यपदेशिवद्भाव इति निष्कृष्टार्थः।

उक्तञ्च कार्त्तिकेयसिद्धान्तेन अन्त्याजादिष्टिरिति सूत्रटीकायाम्—"अन्यपदार्थसमस्यमानपदार्थयोरैकार्थप्रतिपादकत्वं कुत्रचिद् बहुव्रीहिसमासस्य स्थापितम्। यथा—शोभनशरीरः शिवापुत्रः, जनार्दनस्वात्मचतुर्थ इत्यादौ अवयवावयवित्वसम्बन्धेनान्यपदार्थाभावादेकार्थप्रतिपादकत्वम्। अतएव ग्रन्थकृता कल्याणीपञ्चमारात्रय इति मुख्यपूरण्या उदाहरणानन्तरं कल्याणपञ्चमीकः पक्ष इति प्रत्युदाहृत्य रात्रिः पूरणीवाच्या चेति पूर्वत्र मुख्यत्वमित्युक्तमिति।

प्याड़ङ्ग हंहो नहि। किंवा वै नहिकं कुवित् पशु सुकं हाहेति·हे है नवा तावद्दाढ़मलं कच्चेतिथमहं सत्यं ह्निकं वाव रे। नूनं पर्य्यनुकं हहा ह नकिरा शश्वत् किमु प्राड़थो वेलायामुत इ तथाहि चिदरे सत्रा धगाहो अथो। मीनायां वड़हो कु हो वषमये नोचेदयि प्रत्यले स्वाहा हाह धिगाशु वौषड़हहावश्यं सहामास्म चेत्। संवत्तथाच शीघ्रं खुम् मा आङ् मा किनकिम् सु ना। ननु आहोस्विदाहोस्मित् सार्द्धं कच्चि-दंतिस्वपि। यावत् शंसु न चेदेव होही यद्दाधि हं क्लते श्रोमेवं थाट् स्वकं नोचेत् ग्यच-क्ति-प्रतिरूपकाः (१)॥ श्रौषट् वौषट् स्वधा स्वाहा अलम् एतेषां पृथक् पाठः द्रव्ययोगार्थः (२)। कश्चित् स्वाहा सह समं साकं सार्द्धमलमिति स्वराटौ, क्लते उच्चैर्नीचैः शनैरित्यपि चादावाह। परि आङ् अप अनु अति सु अपि अधि प्रति उप इत्येषां भागमर्य्यादाद्यर्थद्योतकत्वात् द्रव्ययोगाच्च पाठः। गिप्रतिरूपकाः प्रदत्तमवदत्तमित्यादि। अच्प्रतिरूपकाः अ इ उ ऋ ऌ ए ओ ऐ औ इति। त्यन्तप्रतिरूपकाः वने ब्रूहि अस्ति खले मैन्ये इत्यादि। दभेदात् द्रव्यवृत्तिचादीनां न नित्यं, तेन पशुः पुरुषः स्वाहा अग्नायौ, तथाच स्वाहयेव हविर्भुजमिति रघुः। निपातानां द्योतकत्वं न तु वाचकत्वं, (३) तेन रामस्य

(१) एते चादयः साकल्येन परिसंख्यातुमशक्याः। यदुक्तं "इयन्त इति संख्यानं निपातानां न विद्यते। प्रयोजनवशादेते निपात्यन्ते पदे पदे" इति।

(२) चादयोऽसत्त्वे १।४।५७। इति पाणिनिः। अद्रव्यार्थाश्चादयोनिपात-संज्ञाःस्युरिति वृत्तिः। लिङ्गसंख्यान्वितं द्रव्यमिति तत्त्वबोधिनी।

(३) 'निपाताश्चादयो ज्ञेया उपसर्गाश्च प्रादयः। द्योतकत्वात् क्रियायोगे

## १७ । णमितोऽन्त्याचोऽन्तेऽन्त्यस्यादौ ।

( णम्-इत: १।।।, अन्त्याच: ५।, अन्ते ७।, अन्त्यस्य ६।, आदौ ७। ) ।

णित् यस्योच्यते तस्यान्त्यादच: पर:, निदन्ते, ङिदन्त्यस्य स्थाने, मिदादौ स्यात् ।

## १८ । परस्त्य: । (पर: १।, त्य: १।) ।

प्रकृते: परो य: स त्यसंज्ञ: स्यात् ।

---

सदृश: देवस्य समुच्चय इतिवत् रामो न, देवश्च इत्यादौ षी न स्यात्, नञादे: सादृश्यादिद्योतकत्वात् ।

१७ । णमित: । णम् प्रत्याहार:, ण न ङ म इति इत् येषां ते णमित: । अन्ते भवमन्त्यम्, अन्त्यञ्च तत् अच्चेति अन्त्याच् तस्मात् अन्त्याच:, णित्यस्येति षीनिर्द्देशात् यस्य णिन्निन्ङिन्मि-द्विधानं तस्यायं नियम: । यथा पयांसि पुंस्कोकिल: पुमान् रामाणाम् इत्यादि । षीनिर्द्देशनियमात ग्राही पच इत्यादौ न स्यात् ।

१८ । पर: । परशब्दस्य ससम्बन्धिकत्वात् प्रकृतिमुप-स्थापयतीत्यत आह प्रकृतेरिति(१)। ननु वहुगर्त्त: वहुपटुरित्यादौ

---

लोकादवगता इमे" इत्युक्तम् । निपाता अपि द्योतका एव न तु वाचका:, तेषां वाचकत्वे तु घटस्य समुच्चय इत्यत्र यथा सम्बन्धे षष्ठी तथा घटश्च इत्यत्रापि षष्ठ्यापत्ति: । इदानीन्तु घटशब्दस्यैव लक्षणया समुच्चयवाचित्वाच्चकारस्य तद्द्योतकत्वाच्च षष्ठीति दुर्गादास: ।

(१) प्रत्ययात् प्रथमं क्रियतेऽसाविति प्रकृति:, लिङ्गं धातुश्च । प्रतीयते येनार्थ: स प्रत्यय इति रूढ़िरिति कातन्त्रवृत्ति: ।

१९। अं अः नुवी। (अं अः ।१॥, नु वी १॥)।

अकार उच्चारणार्थः, बिन्दुद्विबिन्दुमात्रौ वर्णौ क्रमान्नुविसंज्ञौ स्तः।

२०। क+पौ$^{m}$ मून्यौ। (क+पौ$^{m}$१॥,मून्यौ१॥)।

कपावुच्चारणार्थौ, वज्रगजकुम्भाकृती वर्णौ क्रमान्मूनीसंज्ञौ स्तः।

---

वहोरप्रत्ययत्वप्रसङ्गस्तस्मिन् सति वहुगर्त्त इत्यत्र गर्त्तोत्तरादित्यनेन ईये कृते वहुगर्त्तीय इत्यनिष्टं स्यात् इति चेन्न, प्रकृतेः पर इति दिग्लक्षणा पौ, निर्द्देशविहितोपलक्षणत्वात्(१) लेर्वहुः प्रागित्यत्र प्राक्शब्दयोगे पौविधानात् तस्य त्यत्वमिति दिक्।

१९। अं अः। अं अः इति लुप्तप्रोहं दम्, अं च अश्च तौ, नुश्च विश्च तौ। उच्चारणार्थ इति प्रयोजनान्तराभावात्। नुरनुस्वारः विर्व्विसर्ग इति परे।

२०। क+पौ$^{m}$। क+श्च प$^{m}$ श्च तौ। यद्यपि कखपफयोर्मून्यावित्यत्र मून्योः स्थाने क+पा$^{m}$ विति कृते हरि+काम्यः कृष्ण$^{m}$ पाता इत्यादि सिध्यति, तथापि मूनीनुवीनां णत्वविधौ स्वरतां स्वरसम्बौ व्यञ्जनता इत्यस्य ज्ञापनार्थं पृथक् संज्ञाविधानमिति। तेन उर+कायेण उर$^{m}$ पेण इत्यादौ णत्वम्। हरि+काम्यः हरि$^{m}$ पाता इत्यादौ न यत्वम्।

---

(१) दिग्लक्षणा पौति—सामान्यतो दिग्वाचकशब्दयोगे पञ्चमीत्यर्थः। निर्द्देशेति—यत्र यथा निर्द्देशेन यद्विहितं तस्य उपलक्षणत्वात् प्रतिपादकत्वात् परशब्दस्येति शेषः। तेन प्रकृतेः परवत् क्वचिन्निर्द्देशानुसारेण पूर्व्वोऽपि प्रत्ययसंज्ञः स्यादित्यर्थः।

२१। हो झस्। (हः १।, झस्।१।)।

हकारो झस्संज्ञः स्यात्।

इति संज्ञापादः।

तथा चाहुः शिक्षाकाराः—अयोगवाहा अनुस्वारविसर्ज्जनीयजिह्वामूलीयोपध्मानीयाः, एषां सामान्येनोपदेशः स्वरता णत्वविधौ व्यञ्जनता परगमनार्थमिति। मूर्जिह्वामूलीयः नीरूपाध्मानीय इति परे।

२१। होझस्। झस्प्रत्याहारेण यद् विधेयं तद्धकारेणापि भविष्यति इति, तेन वृंहितमित्यादौ हेऽपि नुः। यद्यपि ग्रषमान्ते हकारोपदेशात् अर्हेण अघुसादित्यादि सिध्यति, तथापि एह प्रत्याहारस्यान्तहकारसन्देहनिरासार्थमिदमिति कश्चिदित्यके। वस्तुतस्तु एकस्थान प्रयत्न विशिष्ट वर्णद्वयाभाव-ज्ञापनाय हस्य पृथगुपादानमिति(१)। यद्यपि चपर्णेदिताऽकानिता र्णः, लुपि न सम्ध्याद्यविधौ, णमितोऽन्त्याद्योऽन्तेऽन्त्यस्यादाविति सूत्रितं, तथापि संज्ञायाः प्राधान्यात् संज्ञापादः। पादोहि एकार्थावच्छिन्नसूत्रसमूहः।

अथ रामो रामाः भवति भवतः इत्यादौ सन्धेरुपयुक्तत्वात् सर्व्वेषामादौ सन्धिं निरूपयति। सन्धिस्तु संहिता, संहिता तु परः सन्निकर्षः, स चार्द्धमात्रा-कालातिरिक्त-कालानुच्चरितत्वे सत्युच्चार इति। यदुक्तं, संहितैकपदे नित्या नित्या धातूपसर्गयोः। सूत्रेष्वपि तथा नित्या सैवान्यत्र विभाषया इति।

(१) हो झस् इति सूत्रेणेति शेषः।

## अथ सन्धिः ।

२२ । सह णे घः । ( सह ।१।, णे ७।, घः १। ) ।

णे परे पूर्व्वस्य णेन सह घः स्यात् ।

मुरारिः, लक्ष्मीशः, विष्णूत्सवः, धातृद्धिः, शक्लृदन्तः, होतृकारः ।

---

२२। सह। लुप्तप्रोक्तं दं, तस्मिन्निति सोनिर्द्दिष्टे पूर्व्वस्येति(१) नियमादाह पूर्व्वस्येति। सहशब्दस्य साकाङ्क्षत्वात् सप्तन्तणस्य क्लिविपरिणामादाह णेनेति। एजभसोः णघयोरभावात् अक एव घः। मुरारिरित्यादि, मुरनाम्नोऽसुरस्यारिः, लक्ष्म्या ईशः, विष्णोरुत्सवः, धातुः ऋद्धिः, शक्लृनामा कश्चित् शक्लृश्चासाव् दन्तश्चेति, होतुश्चारित लृकार इति वाक्यं, शाकपार्थिवादित्वान्मध्यपदस्य लोपः। शक्लृदन्त इति नेच्छन्ति परे(२)। चैत्रेण सह मैत्रः स्थूलः, पुत्रेण सह आगतः पिता इत्यादौ सहशब्दस्य पृथक्त्व प्रतीतावपि वालुकाभिः सह, मृत्पिण्डं घटं करोति इत्यादिवत् अनेकत्वप्रतीतिरिति, लाघवात्। अतएव मुरारिरित्यादौ एक एव घः॥

---

(१) नियमश्चायम्—तस्मिन्निति निर्द्दिष्टे पूर्व्वस्य (१।१।६६) इति पाणिनिसूत्रम्। सप्तमीनिर्द्देशेन विधीयमानं कार्य्यं वर्णान्तरेणाव्यवहितस्य पूर्व्वस्य बोध्यमिति वृत्तिः।

(२) लृकारस्य दीर्घस्य प्रयोगो नास्तीति पाणिनिक्रमदीश्वरादिर्विति दुर्गादासः।

२३ । आदिगेचोर्गुन्ब्री । ( आत् ५।, इक्-एचोः ६॥, गुन्ब्री १॥ ) ।

अवर्णात् परयोरिगेचोरवर्णेन सह क्रमात् गुन्ब्री स्तः । हृषीकेशः, दामोदरः । सन्धिग्रहणात् सन्धिलुप्येव न सन्धिः । माधवर्द्धिः, शिवल्कारः, कृष्णैकत्वं, मुकुन्दौकः, कृष्णैक्यं, भवौषधम् ।

२४ । गेर्धोरनेधिन एङ्ऋकोः ।

(गेः ६।, धोः ६।, अन्-एध्-इनः ६।, एङ्-ऋकोः ६॥) ।

२३ । आत् । आदिति पो-क्रान्तं दं, अकाऽनिता र्णो गृह्यते इति । तस्मादित्युत्तरस्येति (१) नियमादाह अवर्णात् परयोरिति । हृषीकेश इति, हृषीकाणि इन्द्रियाणि तेषामीशः । दाम रज्जुः उदरे यस्य इति वाक्यम् । सन्धिग्रहणादित्यादि । सन्धिग्रहणात् लुपि नेत्यादावितिशेषः, उक्तरूपेण(२) राजभ्यां राजभिः श्रिया एति भो अत्र इत्यादौ सिद्धे, सन्धिलुपि सन्धिप्रकरणीयसूत्रकृतलुपि न सन्धिः, एवकारस्य व्यवच्छेदात् (३) स्यादिलुपि सन्धिरित्यर्थः । माधवस्य ऋद्धिः, शिवेनोच्चारित ऌकारः, कृष्णस्य एकत्वं, मुकुन्दस्य ओकः स्थानं, कृष्णस्य ऐक्यं, भवस्य औषधमिति वाक्यम् । इगेचोरिति षोनिर्देशात् तत्समादेशः ।

---

(१) नियमश्चायम्—तस्मादित्युत्तरस्य ( १।१।६७ ) इति पाणिनिसूत्रम् । पञ्चमीनिर्देशेन क्रियमाणं कार्यं वर्णान्तरेणाव्यवहितस्य परस्य ज्ञेयमिति वृत्तिः ।

(२) तत्र आद्यविधिनिषेधेन ।

(३) अन्ययोगव्यवच्छेदादित्यर्थः ।

गेरवर्णात् परयोरेधिनवर्ज्जितस्य धोरेङृकोरवर्णेन सह क्रमात् गुणवृद्धी स्तः ।

प्रेजते, परोखति, अपार्च्छति । अनेधिनः किं—उपैधते, अवैति ।

२४ । गेर्धेः । एध् च इन् च तौ स्वरूपौ, तयोः समाहारः, न एधिन् अनेधिन् तस्य, एङ् च ऋक् च तौ तयोः, आत् सह चेत्यनुवर्त्तते । एधङ वृद्धौ, इन ल गतौ एतदुभयभिन्नस्य धोरवयवभूतयोरेङृकोस्तद्गेरवर्णात् (१) परयोरित्यर्थः, तेन प्रगत एजकः प्रेजकः इत्यादौ न स्यात् गतसमभिव्याहृतस्य प्रादेरेजतीत्यादेरगित्वात् (२) । स्वादिपाठे लृकाराभावात् परत्रोदाहरिष्यति ।

(१) तद्गेरिति तस्य धातोः पूर्ब्ववर्त्तिनो गेरित्यर्थः ।

(२) उक्तञ्च गोयीचन्द्रेण—धात्वन्तरोपसर्गस्य सम्बन्धिनोऽवर्णात परयोरेङृकोः गुणवृद्धी न स्तः । प्रगत एजको यस्मात् इति वाक्ये प्रैजक इत्यत्र प्र उपसर्गो गमेरेव न त्वेजेरिति । यदा तु प्रकृष्टार्थेन प्रशब्देन सह प्रादिसमासस्तदापि प्रैजक इति । प्रादीनां क्रियायोग एवोपसर्गत्वं, अत्र तु कर्त्तृयोगेनानुपसर्गत्वादिति ।

कार्त्तिकेयसिद्धान्तोऽप्याह—

अत्र गिरुपसर्गः "प्रादीनामुपसर्गत्वं धातुयोगे च सर्व्वदा । अव्ययत्वं लिङ्गयोगे कथितः पूर्ब्वसूरिभिरिति न्यायात् धातुयोगिप्रादीनां गित्वमभिहितं तस्य ग्रहणात् धातुसम्बन्धिनोरेङृकोः प्राप्तावपि पृथग्ग्रहणं धात्वन्तरसम्बन्धिगेरवर्णेन सह अनेन गुणवृद्ध्यभावार्थम् । एतेन मध्यपदलोपसमासेऽस्यानधिकारः सूचितः, तेन प्रगता एजका यस्मात स प्रैजक इत्यत्र मध्यपदस्य गतभागस्य लोपे तत्सम्बन्धिनः प्रशब्दस्य एजधातोः सम्बन्धाभावाद्गुणरिति । ननु प्रगत इति क्तान्तं नाम, एजक इति णकान्तं नाम तद्योगिप्रादेर्गित्वं कथं सम्भवतीति चेत् सत्यं, प्राक प्राप्तधातुयोगप्रादेर्गित्वं पश्चात् णकान्तक्तान्तादिनामयोगे क्वचिन्न निवर्त्तते इत्यनन्तरस्य प्रेप प्रेष्य इत्युदाहरता प्रदर्शितत्वात् । न च तर्हि

२५ । लिधोर्वा । ( लिधोः ६।. वा ।१८ ) ।

लिधोस्तु पूर्व्वोक्तं कार्य्यं वा स्यात् । प्रेकीयति प्रैकीयति, प्रोघीयति प्रौघीयति, प्रार्चीयति प्रर्चीयति, प्राल्कारीयति प्रल्कारीयति ।

२५ । लिधोः । प्रादी लिः पश्चात् धुस्तस्य । सिद्धे सत्यारम्भो नियमार्थः(१) । अनेधिन इति नानुवर्त्तते । पूर्व्वोक्तादेन गेरवर्णात् परयोर्लिधोरेङृकारयोरवर्णेन सह क्रमात् गुणो वा स्त इत्यर्थः । एधिनो निवृत्तिं दर्शयति प्रैकीयति इन्लगतौ क (२) एकः तं इच्छति, क्योऽस्यादिति क्य अ ई एकीय, धुसंज्ञातिवादयः, व्यस्येति प्रस्य समासः, एवमन्यत्र । प्रोङ्कांम्यति प्रोङ्कारीयति इत्यादौ परत्वादवर्णलोपः(३) ।

---

धात्वर्थद्योतकानां प्रादीनां धात्वन्तरसम्बन्धित्वाङ्गीकारे प्रकृष्टं एजते प्रेजते इत्यादावपि क्रान्तलक्षधातुयोगित्वे एजधात्वादिसम्बन्धाभावात् सर्व्वत्रास्याविषय इति वाच्यम् । समस्यमानपदसम्बन्धिप्रादीनां तदर्थद्योतने पदभेदाभावात् मध्यपदलोपसमासानुपपत्तेः । प्रादीनां द्योतकत्वं आख्यातनिष्पन्नधातुयोगे ज्ञेयं, अतएव प्रकृष्टं एजते इत्यत्र प्रकृष्टार्थस्तु एजृधातुना द्योत्यते, तेन धात्वन्तरत्वाभावादस्य विषय इति । ननु प्रसक्तं प्रतिषिध्यते इति न्यायात् समासनिष्पन्नप्रैजक इत्यत्र नामसम्बन्धिन एङः सन्धिः कथं प्रतिषिध्यते इति चेत्सत्यं, यद्यपि लब्धिष्पन्नं नाम इति प्रागभिहितं तथापि तेषां क्रियावाचकत्वात् क्वचित् धातुत्वं व्यवह्रियते, तेन भूस्योयोजनलक्षोऽर्कमित्यादौ भूस्य इत्यादीनां क्रियात्वेन व्यवहृतत्वात् अन्यत्रापि तथा चिन्त्यमिति ।

(१) लिधोरिति नियमसूत्रमित्यर्थः ।

(२) औणादिकः क प्रत्ययः ।

(३) विप्रतिषेधे परं कार्य्यम् । (१।४।२) इति पाणिनिः । तुल्यबलविरोधे परं कार्य्यं स्यात् । इति वृत्तिः ।

२६ । **लोपोऽस्योमाङोः ।** ( लोपः १।, अस्य ६।, ओम्-आङोः ७॥ ) ।

अवर्णस्य ओमाङोः परयोर्लोपः स्यात् ।

शिवायोन्नमः, शिवेहि, ब्रह्मोतं, राजर्षिः ।

स्थानिवदादेशः । द्वयोर्विभाषयोर्मध्ये विधिर्नित्यः ।

२६ । लोपः । ओम् च आङ् च तौ स्वरूपौ तयोः, पुनरस्योपादानं सङ्गादिनिवृत्त्यर्थं, लोपपदोपादानात् णुव्रीति निवृत्तम् । शिवायोन्नम इति लोपोऽप्यादेश उच्यते इति न्यायात् स्थानिवत्त्वेन अयां य्वोरिति यकारस्य न लुप । शिवेहि इति आङ्पूर्व्वादिनधोर्हि शपोलुक् शिध्वोर्नित्यसापेक्षत्वात् आदौ आदिशेचोरिति णः पश्चादनेनाकारलोपः । ब्रह्मोतमिति आङ्पूर्व्व उङ् शब्दे क्तः(१) ब्रह्म वेदः तस्य आ सम्यक् प्रकारेण उतं उच्चारितमिति यावत् । राजर्षिरिति आ सम्यक् प्रकारेण ऋषिः अर्षिः राज्ञोऽर्षिः राजर्षिः(२) । स्थानिवदादेश इति । स्थानमस्यास्ति स्थानी पूर्व्वस्थितः, स्थानीव स्थानिवत्, आदिश्यते असौ आदेशः, परस्मिन् पूर्व्वविधावच इति शेषः(३) । तथा च परनिमित्तकपूर्व्वविधौ कर्त्तव्ये अचः स्थाने य आदेशः स स्थानिवत्, स्थानी यथा

(१) वेञधातोः क्त उतमिति केचित् ।

(२) राजर्षिशब्दः प्रायशः कर्म्मधारयमिथ्यन्तएव प्रयुज्यते । इह तु सूत्रोदाहरणार्थोऽयमिति ।

(३) स्थानिवदादेश इत्यस्मिन्नंशे परस्मिन् पूर्व्वविधावच इत्यंशोयोज्य इत्यर्थः ।

कार्य्याणां निमित्तं भवति तथादेशोपीत्यर्थः, तेन पिवति गणयति तातंहि इत्यादौ न गुणिजवादयः स्युः। अतिदेशकार्य्यं क्वचित् न स्यात्, यथा—नु नु द्वि घं युलोपेषु दान्त-चप्-जव् अमेषु च। झभेषु षङ्कङोरेवं जिश्च क्विञ्ञोस्तु जिस्तथा(१)। एषु स्थानिवन्न स्यात्। संयन्ति इनो यादेशे मस्य नुः, न य स्थानिवत्। कथं किम्बुक्तं, यं दृष्ट्वा यस्योत्पत्तिः स तस्य सन्निपातः, सन्निपातविधिरनिमित्तं तद्विघाताय इति न्यायात् न नुः। दध्यत्र इत्यादौ इकोयन्नादेशे स्यादनचीति अस्य द्विः, न य स्थानिवत्। प्रतिदीव्न इत्यादौ प्रतिदिवन् शब्दस्य पौपरे सदान इत्यल्लोपे व्यनच् तयोति घंः, अल्लोपस्य न स्थानिवत्त्वं। यायावर इत्यत्र याधोर्यङि यायायधोर्वरे हसाल्लोप इत्यकारलोपे य्वोर्लोप इति यकारलोपः, अकारलोपो न स्थानिवत्। कौ स्त इत्यादौ लोपोऽस्त्यसोरित्यकारलोपो दान्तकार्य्ये आवादेशे न स्थानिवत्। ओमाङोः स्थानिवत्वातिदेशादोमाङ्भिन्ने दान्ते अस्य विषयः। जक्षतुरित्यादौ अदधार्घसादेशे हनगमेत्युङ्लोपः झपझसोरिति घस्य क, उङ्लोपो न स्थानिवत्। धद्धे इत्यत्र धाधोर्ध्वे, शपोलुक्, ह्वादिरिति द्विः, आद्गोरित्याकारलोपः, झभान्तस्यति खेदस्य

---

(१) नुरनुस्वारः, द्विर्द्वित्वं, घोंदीर्घः, यलोपः, दान्त इति पदान्ते यत् कार्य्यं तत्, चप् जव् अम् एते प्रत्याहाराः एषु कर्त्तव्येषु आदेशो न स्थानिवत्। एवं झभेषु झभ् इति प्रत्याहारः। षङ् इति शब्राजेति विहितः। कङ् इति चुङ् क्रुङ् इत्यनेन विहितः। एषु कर्त्तव्येषु जि जिं लोपः न स्थानिवत्। तथा क्विञ्ञोः—क्विपि ञौ च परे यत्कार्य्यं तस्मिन् कर्त्तव्ये जिर्जि लोपो न स्थानिवत्। संयन्तीत्यादौन्येषामुदाहरणानि।

धः, पश्चात् प्रकृते धस्य झप्झसोरिति जवे आकारलोपो न स्थानिवत्। गोन्ति इत्यत्र गोमत् क लेपने गोमधो ञ्यन्तात् क्विः, ञिलोपे मकारस्य नुः, पश्चात् जपे जमनोरिति जमे अकारलोपो न स्थानिवत्। पिण्ढि इत्यादौ पिषधोर्हिः न णो ग्रे इति न्ले जपे जमनोरिति जमादेशे न् न स्थानिवत्। दाहमाचक्षाण इत्यादौ ञौ क्विपि दादेर्घ इति घः धाक् इत्यत्र झभान्तस्येति झभादेशे न ञिः स्थानिवत्। एवं धाक् धाग्भ्यामित्यादौ चपजवोरपि(१)। यायष्टि रित्यादौ यजधो यङन्तञ्यन्तात् क्तौ षङि ञिलोपो न स्थानिवत्। पापक्तिरित्यादौ यङन्तञ्यन्तात् पचधोः क्तौ कङि ञिलोपो न स्थानिवत्। नावयतीति(२) क्विपि नौः इत्यत्र ऊटि ञिलोपो न स्थानिवत्। वादयन्तं प्रैरिरत् अवीवदत् इत्यादौ ञ्यादिकार्य्ये(३) ञिलोपो न स्थानिवत्। ननु कथमोङ्कारीयदिति (४) चेत् सत्यं भूयोऽमगादेरिति सूत्रमकृत्वा अजादिग्रहणमेवं ज्ञापयति सकृल्लक्ष्ये लक्षणं प्रवर्त्तते इति, तथाच एकस्यामो लोपे परामममादाय त्रिः। क्वचिदपवादविषये उत्सर्गोऽभिनिविशते इति न्यायात् उपशब्दस्याङि वा अकारलोपः तेन उपेहि उपैहि। तथाच तामुपेहि

(१) चपि जवि च कर्त्तव्ये ञि नं स्थानिवदित्यर्थः।

(२) नावमाचष्टे इति ञौ तिपि रूपम्।

(३) ञेः परे अङिपरे उक्तो ह्रस्वादिकार्य्ये इत्यर्थः।

(४) ओङ्कारीयेति नामधातोर्दिपि रूपम। अत्र ओम् शब्दे परे अमागमस्याकारः कथं न लुप्यते इत्याशङ्क्याह नन्विति।

२७। एवेऽनियोगे। ( एवे ७, अनियोगे ७)।

अवर्णस्य एवे परे लोपः स्यात् अनियोगे।

अद्येव, नियोगेतु—अद्यैव गच्छ।

२८। वौष्ठोत्वोः से। (वा।१।, ओष्ठोत्वोः ७॥, से ७)

अवर्णस्य ओष्ठोत्वोः परयोर्लोपः स्यात् वा से सति।

विम्बोष्ठः विम्बौष्ठः, स्थूलोतुः स्थूलौतुः। से किं तवौष्ठः।

---

महाराज इति चण्डी, पूर्व्ववाशब्दव्यवस्थया वा। ननु पूर्व्व-सूत्राद्वानुवर्त्तते कथं नित्यमिदमित्याह द्वयोरित्यादि, विभाषयो-र्वाशब्दयोरित्यर्थः।

२७। एवे। नियोगो व्यापारविशेषः, न नियोगः अनि-योगस्तस्मिन्। सामान्यशब्दस्य विशेषपरत्वात् अनियोगेऽपि सादृश्यसम्भावनातिरिक्ते न लोपः, तेन इहैव वयं धीराः, मिथ्यैव श्रीः श्रियंमन्या इत्यादि। सादृश्यसम्भावनयोस्तु चर्म्मेव रज्जुः तदद्येवाभूदिति। एके तु सादृश्यनियोगेऽपि बालेव गच्छ मालेव तिष्ठ इत्याहुः॥

२८। वौष्ठो। ओष्ठश्च ओतुश्च तौ तयोः, सः समास-स्तस्मिन्। विम्बोष्ठ इति, विम्बाविव ओष्ठौ यस्य इति वाक्यं, एवं स्थूलश्चासावोतुश्चेति। सन्निहितालाभे विप्रकृष्टं विधिरपेक्षते इति न्यायात् यस्य इस ओष्ठोतुभ्यां स स्तस्यावर्णस्य तयोर्लोप इत्यर्थः, तेन हे राजपुत्रौष्ठौ ते, हे राजपुत्रौतुस्ते, हे देवदत्तौष्ठकमलं

२८। त्रौसे त्वृतो व्रिं। (त्रौ-से ७, तु ।१।, ऋतः ।१।, व्रिं २।)।

अवर्णात् पर ऋतो व्रिमाप्नोति त्रौसे सति। शीतार्त्तः।

त्रौसे किं परमर्त्तः। त्वन्तस्य नानुवृत्तिः।

ते, हे देवदत्तौतुव्याघ्रस्ते इत्यादौ न स्यात् (१)। वाशब्दस्य व्यवस्थावाचित्वात् प्रोष्ठः प्रोष्ठपदा प्रोष्ठीति(२) नामजात्योर्नित्यम्। तवौष्ठ इति, वसे तु आ ओष्ठादोष्ठं औष्ठं, तस्मिन् (३) तवौष्ठं, तवोष्ठं इत्यपि लोपोऽस्येत्यादिना नित्यं भवति।

२८। त्रौसं। त्रौ तृतीया त्रा सः त्रौसस्तस्मिन्। क्लिं विपरिणम्याह अवर्णात् पर इति, तथाच ष्या अव्यवहित-ऋत-ऋकारस्य व्रिर्नतु ऋत-ताकारस्य। शीतार्त्त इति शीतेन ऋतः पीड़ित इत्यर्थः, एवं क्षुधया ऋतः क्षुधार्त्तः। परमर्त्त इति परमश्चासावृतश्चेति यसः। कथं नार्त्तः कालमपेक्षत इति चेत् आङ्पूर्व्व-ऋधोः क्ते आर्त्तः पश्चान्नञा योगः। नचानेनैव सिद्धे किमर्थमिदमिति वाच्यं ऋतशब्देन शीतर्त्त इत्यनिष्ट-वारणार्थमिदमिति।

---

(१) एगूटाक्षरयोषु अवर्णान्तशब्देन सह तत्परवर्त्तिनोरोष्ठौतुशब्दयो समासाभावाच्चावर्णस्य लोप इति।

(२) प्रोष्ठोवृषः, प्रोष्ठपदा नक्षत्रविशेषः, प्रोष्ठी मत्स्यविशेषः।

(३) औष्ठशब्दे परे इत्यर्थः।

३०। ऋण प्र वसन वत्सर वत्सतर दश कम्बल-स्यार्णः। (ऋण—कम्बलस्य ६।, ऋणः १।)।

एषामवर्णात् पर•ऋणो व्रिमाप्नोति। ऋणार्णं, प्रार्णं।

३१। स्वाक्षयोरीरोहिण्यौ। (स्व-अक्षयोः ६॥, ईर-ऊहिण्यौ, १॥)।

अनयोरवर्णात् परावेतौ व्रिमाप्नुतः। स्वैरः, अक्षौहिणी।

---

३०। ऋण। ऋणार्णमिति ऋणाद्दणं, (१) प्रकृष्टमृणं, वत्सरेण देयमृणं, वत्सतरार्थमृणं, दश•ऋणानि सन्ति यस्मिन् देशे नद्यां वा दशार्णो देशः दशार्णा नदी, ऋणं जलदुर्गभूः, कम्बलार्थ-मृणं कम्बलार्णमिति। एषामिति किं अधमर्ण इत्यादि।

३१। स्वाक्ष। स्वैर इति ईर्कि गतौ•नुदि, (२) भावे घञ् ईरणमीरः स्वस्य ईरः स्वैरः(३), काशिकायां स्वैरमिति क्लीवं, तन्त्रासक्तता ईरस्याकार उच्चारणार्थस्तेन ईरेरिणोरपि ग्रहणं, स्वैरं स्वैरी स्वैरिणीति व्याख्यातम्। स्वेरा इत्यत न स्यात् अनभिधानात्। अक्षौहिणीति अक्षान् ऊहितुं शीलमस्या इति वाक्यम्। णत्व-निर्देशात् सेनायामेव। सर्वेपस्यादेरिति वा णत्वविधानात् पाशकस्त्रियां वा णत्वे अक्षौहिणी, अणत्वपक्षे अक्षौहिनीत्येके।

---

(१) ऋणस्यापनयनाय यदन्यदृणं क्रियते तदृणार्णमिति सिद्धान्तकौमुदी।

(२) नुदि प्रेरणे इत्यर्थः।

(३) तर्कवागीशमते स्वैर इति पुंलिङ्गपाठः।

३२। प्रस्योढ़ोढ्यूहाः। (प्रस्य ६।, ऊढ़-ऊढ़ि-ऊहाः१।।)

प्रस्यावर्णात् परा एते त्रिं यान्ति। प्रौढ़ः, प्रौढ़िः, प्रौहः।

३३। वैषैष्यौ। (वा।१।, एष-एष्यौ १॥)।

प्रस्यावर्णात् परावेतौ त्रिं वा प्राप्नुतः। प्रैषः प्रैष्यः, प्रेषः प्रेष्यः।

---

३२। प्रस्य। शाकटायनसम्मतत्वादूहग्रहणम्। प्रौढ़ इति ऊहधोः क्तः, एवं क्तिः प्रौढ़िः, ऊहसाहचर्य्यात् ऊहनिर्द्दिष्टक्तक्त्यो-र्ग्रहणम् न तु वहनिष्पन्नयोः, (१) तेन प्रोढ़ोभारः, प्रोढ़ीरथानां इत्यादि (२)। एवं आङ्पूर्व्ववहेरपि प्रोढ़ः प्रोढ़िः। प्रौह इति ऊहनमूहः भावे घञ्।

३३। वैष। प्रैष इति इष सर्पणे घञ्, प्रैष्य इति घ्यणन्त-निर्द्देशः (३) एष इति अनव्ययसाहचर्य्यात्, तेन प्रेष्य गतः (४) इत्यत्र यवन्ते न स्यात्। गेर्धोरिति नित्ये प्राप्ते वचनमिदं। नित्यमिति परे (५)।

---

(१) ऊढ़ इति वहेः क्तेन निष्पादितमिति बहूनां मतम्, ऊहधोः क्ते ऊढ़ इति कथं सिध्यतीति सुधीभिश्चिन्त्यम्।

(२) ऊढ़ोढ़ी अत्र वहनिष्पन्नौ।

(३) न तु आङ्पूर्व्व इष धातोः क्वाचो यपि रूपम्। अत्र हेतुमाह एष इति।

(४) आगत्य गत इत्यर्थः।

(५) प्रेषः प्रेष्य इति पदद्वयं ईषधातोः क्रमेण घञि घ्यणि च ईषः ईष्य इति स्थिते गुणे कृते सिद्धमिति सिद्धान्तकौमुदी।

३४ । मनीषाः ।—( १।।। )

मनीषाद्या निपात्यन्ते ।

मनीषा, हलीषा, लाङ्गलीषा, शकन्धुः, कुलटा, सीमन्तः, पतञ्जलिः, सारङ्गः ।

---

३४ । मनी । शब्दव्युत्पादनप्रस्तावेऽर्थे कार्य्याभावात् मनीषाशब्दः स्वरूपपरः, (१) तस्य एकत्वे बहुत्वानुपपत्त्या त्वनिर्द्दिष्टमनीषाशब्दो गणं सूचयति(२)। तथाच भाष्ये "यल्लक्षणेनानुत्पन्नं तत्सर्व्वं निपातनात्सिद्ध"मिति । तस्य सिद्धिस्तु क्वचिद्वर्णविपर्य्ययैः क्वचिद्वर्णविकारैः क्वचिद्वर्णागमैः क्वचिद्वर्णनाशैः क्वचिद्धात्वर्थातिशयैर्ज्ञातव्या । तथाच – वर्णागमो वर्णविपर्य्ययश्च द्वौ चापरौ वर्णविकारनाशौ । धातोस्तदर्थातिशयेन योगस्तदुच्यते पञ्चविधं निरुक्तमिति ३) । मनीषादिर्यथा–मनीषा हलीषा शकन्धुः समर्थौ रथ्या पिशाचः कपित्थो दधित्थः । मरुत्तो लुलापो जिनो यस्कनिष्के मयूरो हनूमान् वृषी सिंह-गूढे । सारङ्ग-कारस्कर-किष्कुकुम्भाः सीमन्त-कन्दर्प-धुरन्धराश्च । दूडाश-दूणाश-परःशताद्याः

---

(१) शब्दव्युत्पादनप्रकरणे वाच्ये, कार्य्याभावात्—तत्तत्कार्य्याणां साकल्येन लक्षणनिर्द्देशाभावात् । स्वरूपपरः मनीषाशब्दस्य स्वरूपनिर्द्देशः, यः शब्दो व्युत्पाद्यः स एव स्वरूपतो निर्द्दिष्ट इत्यर्थः । एतेनैवंविधाः शब्दा निपात्या इति सूचितमिति ।

(२) इत्यादि-बहुवचनान्ता गणस्य संसूचका भवन्तीति न्यायादित्यर्थः ।

(३) धात्वर्थातिशयेन धातूनामनेकार्थत्वकल्पनेन । निरुक्तं वेदाङ्गशास्त्रविशेषः । उक्तञ्च, शिक्षाकल्पो व्याकरणं निरुक्तं ज्योतिषन्तथा । छन्दश्चेति षडङ्गानि वेदानां वैदिका विदुरिति । निरुक्तं पदभञ्जनमिति हेमचन्द्रः ।

कुद्दाल कुस्तुम्बुरु-कुञ्जराश्च। यथायथं षोड़श-काम्दिशीक-काम्तीर-पारस्कर-मस्कराश्च। मस्तीर-भद्रङ्करणाग्निमिन्धा वलाहकोडुम्बर-विष्किराश्च। अट्टहासस्तथता दिवौकाः शुद्धोदनोदुम्बर गोष्पदानि। पतञ्जलिर्मस्करि-लाङ्गलीषा-ऽपरस्परापस्कर-तस्कराश्च। परस्परा ऽवस्करमन्तितान्तमं मध्यन्दिनाऽन्योन्यमनीषितञ्च। लोकम्पृणो धूर्जटि-शोणितार्शौ प्रतिस्कशोऽश्वत्थ-बृहस्पती च। समशनमटविर्दच्छिणतारं हनुमदुदूखलमुष्णङ्करणम्। कीचक-कुलटा-लोकम्पोणं तैलम्पाताऽङ्गणगव्यूती। प्रायश्चित्तं प्रायश्चित्ति-र्जीमूत-वनस्पति-गन्धर्व्वाः। अश्वत्थामास्पदमर्द्दशनं किष्किन्धो-लूखलमाश्चर्य्यम्। श्येनम्पाताऽर्णवो दूश्यो धेनुम्भव्या पृषोदरः। भ्राष्ट्रमिन्धः पृषोद्यानं केशवाद्यमुषर्बुधः। श्मशानमन्तिषत् द्वन्द्वं परोक्षं पुङ्गलोऽन्तिमम्। अनभ्यासमित्यः पश्चार्द्धं दूड़भो ब्राह्मणस्तथा। प्रस्तुम्पति रजस्तुन्दमन्यदीयश्च वाड्वलिः। प्रस्क-ण्वोऽन्यत्कारकश्च हरिश्चन्द्रः किकीदिविः। चर्म्मण्वती च राजन्वान् वृषणश्वो वृषणवसुः। भुवर्लोको मनुष्यश्चाऽङ्गिरसश्चेतरेतरम्। नभस्वञ्च मुकुन्दश्च मन्मथोऽन्ये प्रयोगतः॥

मनीषेत्यादि। ईषङ सर्पणे सेमक्तात् सरोरिति स्त्रियां भावे अः मनस ईषा, हलस्य ईषा अनयोष्टेर्लोपः मूर्द्धन्यान्तः, ताल-व्यान्तम्तु हलीशा हलेशा इति केचित्। शकस्य नृपतेरन्धुः कूपः। समोऽर्थोऽस्य समर्थः। रथेन पाति रथप्रा नदी वहिष्ठादित्वात् षः। पिशितमश्नाति पिशाचः। कपयस्तिष्ठन्त्यस्मिन् कपित्थः। एवं दधित्थः। मरुता दत्तो मरुत्तः। अप्स लुनाति लुलापो महिषः।

जितमनेन जिनः। यशः कीर्ति यस्कः। निकाम्यते निष्कं हिर-ण्यम्। मह्यां रौति, मेऊ इति रौति वा मयूरः। हनुरस्यास्तीति हनूमान्। ब्रुवन्तः सीदन्त्यस्यां बृसी (१)। हिनस्तीति सिंहः अत्र अक्षरविपर्ययः। रतेस्तननं(२)। सारमङ्गं यस्य सारङ्गः(३)। कारं करोति कारस्करो वृक्षः। कारकरोऽन्यः। कीर्यते त्रायते मृग-त्वादित्वात् कुः किष्कुः। केनोभ्यते(४) कुम्भः। सीमानमन्तति सीमन्तः केशविन्यासः, अन्यत्र सीमान्तः। कं न दर्पयति कन्दर्पः। धुरं भारं ध्रियते (धरति) धुरन्धरः। दुःखेन दाश्यते दूडाशः। दुःखेन दाश्यते दूणाशः मूर्द्धन्यः। शतात् परं परःशतं वेः श इति कश्चित्, एवं परःसहस्रमित्यादि। कुं उद्दालयति कुद्दालः। कुत्सितं तुम्बुरुः कुस्तुम्बुरुः धन्याकम्। कौ जीर्य्यति कुञ्जरः। यथायथेत्यर्थे यथायथं क्लीवत्वम्। षड़धिका दश षोड़श। कां दिशं गच्छामीति चिन्तयन् पलायितः कान्दिशीकः। कु ईषत् कुत्सितं वा तीरं प्रान्तभागोऽस्य कास्तीरम्। पारं करोति पारस्करो देशः। मा क्रियते अनेन मस्करो वेणुः। सत् ईषत् तीरं सस्तीरम्। अभद्रं भद्रं करोत्यनेन भद्रङ्करणम्। अग्नेरिन्धः अग्निमिन्धः। बला-दाहृतं कमनेन बलाहको मेघः। उन्नतोऽम्बरं उडुम्बरः। विकि-रति विष्किरः शकुनिः। वेहपाठात् विकिरोऽपि। अट्टं अट्टं

---

(१) व्रतिनः सीदन्त्यस्यामिति क्वचित् पाठः।

(२) रतिं अनुरागं तनोतीत्यर्थः।

(३) सारङ्गश्चातकादिः, अन्यत्र साराङ्ग इति।

(४) केन जलेन उभ्यते पूर्य्यते इत्यर्थः। उनृभ ढे घञ्।

हसति अट्टहासः(१)। अट्टाट्टहास इति मैथिलाः। तथस्य भावस्तथता। द्यौरोकः स्थानं यस्य दिवौकाः, यद्यपि दिवेत्यकारान्तोऽप्यस्ति तथापि वान्तादोकारनिवृत्त्यर्थं पाठः। शुद्ध ओदनो यस्य शुद्धोदनः। उडुम्बरवत् उदुम्बरः। गवां पदं गोष्पदं गोभिः सेवितो देशो मानञ्च। पततां प्राणिनां अञ्जलिर्यस्मै स पतञ्जलिरनन्तः। काम्यकर्म्माणि मा कर्त्तुं शीलमस्य मस्करी भिक्षुः। हलीषावत् लाङ्गलीषा। अपरे च अपरे च अपरस्पराः क्रियासातत्ये, अपरस्पराः सार्थाः गच्छन्ति अविच्छेदेन यान्तीत्यर्थः। अपकरोतीति अपस्करो रथाङ्गं, अन्यत्रापकरः। तत्करोतीति तस्करश्चौरः। परे च परे च परस्परं क्रियाविनिमये। अवस्करः पुरीषे, अन्यत्रावकरः। अन्तिकादन्तितः कस्य तः। अन्तिकात् तमे तिकलोपे अन्तमः। दिनस्य मध्यं मध्यन्दिनम्। अन्ये च अन्ये च क्रियाविनिमये अकारस्योकारे अन्योन्यम्। मनसा ईषितं मनीषितम्। लोकस्य पृणे मन् लोकम्पृणः, लोकम्पृणमिति केचित्। धूरिव जटा यस्य स धूर्जटिः शिवः। शोणितमर्शो यस्यास्ति स शोणिताशी। प्रतिष्कशः पुरोयायी (२) अन्यत्र प्रतिगतः कशां प्रतिकशोऽश्वः। अश्वास्तिष्ठन्त्यस्मिन् सोऽश्वत्थः(३)। वृहतां पतिः

(१) अट्टमट्टं हसनमित्यर्थेऽपि। मूलोदाहरणे ढात् षस्थिति षण्। हासे वाच्ये एव निपात्य इति।

(२) प्रतिपूर्व्वक कशेः पचादित्वादन् इति सिद्धान्तकौमुदी।

उक्तञ्च "ग्राममद्य प्रवेक्ष्यामि भव मे त्वं प्रतिष्कशः" इति काशिका।

(३) सदा चलदलत्वेन अश्व इव तिष्ठतीति डे अश्वत्थ इत्यमरटीकायां भरतः।

बृहस्पतिः सुराचार्य्यः। सममश्नं समशनम्। अटन्तो वयः पक्षिणो यत्र अटविः अरण्यम्। दक्षिणतीरमित्यर्थे दक्षिणतारं, दक्षिणञ्च तत्तीरञ्चेति वाक्यं, वेदपाठात् दक्षिणतीरमपि। हनूमान् पूर्ब्बवत्। ऊर्द्धं खन्यते उदूखलम्। उणस्य करणे मन् उणाकरणम्। चीक किं मर्षणे णकः वर्णविपर्य्यये कीचको वंशदैत्ययोः। कुलान्यटति कुलटा भिक्षुक्यां असत्याञ्च(१)। लोकम्पृणमिति लोकम्पृणवत्। तिलपातोऽस्यां क्रियायां तैलम्पाता पितृक्रिया। अङ्गान्यस्मिन् अङ्गणं मूर्द्धन्यान्तम्। गवां यूतिः गव्यूतिः क्रोशयुगम्। प्रायात् चित्तचित्त्योः सुम् (२) प्रायश्चित्तं प्रायश्चित्तिः। जीवनं जलं मूतं बद्धमनेन जीमूतो मेघः। वनस्य पतिः वनस्पतिः वृक्षः। गानं धर्म्मोऽस्य गन्धर्ब्बः। अश्वस्येव स्थाम (बलं) यस्य अश्वत्थामा द्रोणपुत्रः। आस्पदं प्रतिष्ठायाम्। अर्द्धमशनं अर्द्धशनम्, इदं नेच्छन्ति केचित्। किञ्चित् ध्यायते चिन्त्यते अस्मिन् किष्किन्धोऽद्रिः। उलूखलमुदूखलवत्। आश्चर्य्यमद्भुते, अन्यत्र आचर्य्यं कर्म्म शोभनम्। श्येनपातोऽस्यां क्रियायां श्यैनम्पाता मृगया। अर्णः पानीयमत्रास्ति अर्णवः केशादित्वाद्वे सकारलोपः। दुःखेन ध्यायति दूढ्यः।

---

(१) 'अटतीत्यटा पचाद्यच् टाप्। कुलस्य अटा कुलटा। यदि तु कुलम् अटतीति विगृह्यते तदा कर्म्मण्यणि ङीपि कुलाटीति स्यात्'—इति तत्त्वबोधिनी।

(२) चित्त चित्तिशब्दौ निश्चयार्थौ। तथाच प्रायोनाम तपः प्रोक्तं चित्तं निश्चय उच्यते। तपोनिश्चयसंयुक्तं प्रायश्चित्तमिति स्मृतम्॥ निश्चयसंयुक्तं पापक्षयमात्रसाधनत्वेन निश्चितमित्यर्थः।

धेनुर्भविष्यति धेनुम्भव्या। पृषदुदरमस्य पृषोदरः। भ्राष्ट्रस्येन्धे मन् भ्रोष्टमिन्धः। पृषदुद्यानमस्य पृषोद्यानम्। केशिनमवधीत् केशवः। आधारयति आध्यायतीति वा॰ आढ्यः। उषसि बुध्यते उषर्बुधः, उषोबुध इति कश्चित्। शवानां शयनं यत्र श्मशानम्। अन्तिके सीदति अन्तिषत्। द्वौ द्वौ द्वन्द्वं, द्वन्द्वं रहसि चार्थेच वैरे मिथुनयुग्मयोरिति धरणिः। अक्षिभ्यां परं परोक्षं, पृथोरसि साधयन्ति केचित्, तन्मते अत्र पाठः परशब्दे ऽनिष्टवारणार्थः। पूर्य्यते गलति च पुद्गलः शरीरम्। अन्तिके भव इत्यर्थे मस्त्यः, मे कस्य लोपः, अन्तिमः। यद्वा अन्तिकात्तमः प्रकृतिप्रत्यययोः क्-त-लोपे अन्तिमः। वेदपाठात् अन्तिकतमश्च। अनभ्यासे दूरे इत्यः (१) मंश्च अनभ्यासमित्यः, परिहार्य्यसन्निधि-रित्यर्थः। पश्चादर्द्धं पश्चार्द्धम्। दुःखेन दभ्यते वञ्च्यते दूडभः। वाहितं पापमनेन ब्राह्मणः। गवि कर्त्तरि प्रस्थं सन् तुम्पती। प्रस्तु-म्पति गौः अन्यत्र प्रतुम्पत्यश्वः। (२) अजस्येव तुन्दमस्य अजतुन्दं नगरम्। अन्यस्येदं अन्यदीयम्। वाग्वादस्यापत्यं वाड्वलिः। प्रगतं कल्मषं पापमस्य प्रस्कण्वऋषिः। अन्यस्य कारके दन्, अन्यत्-कारकं। हरिरिव चन्द्रो रमणीयः, हरिश्चन्द्रो राजा। किकीपूर्व्व-दिवधोः क्वौ दिवेर्दिव्यादेशः, किकीदिविः चातकपक्षी। चर्म्म अस्या अस्ति चर्म्मण्वती नदीकदल्योः। राजा अत्रास्ति राज-

---

(१) इत्यः गम्यः इनधोः ठे क्यप्।

(२) तुम्पतीति तौदादिक तुपधातोरूपमपि रूपम्। प्रस्तुम्पति गौः हिंस-त्यर्थः।

३५ । यलायवायावोऽचीचः ।

( यल्-अय्-अव्-आय्-आवः १।।।, अचि ७।, इचः ६। )

इचः स्थाने य् व् र् ल् अय् अव् आय् आव् एते अचि परे क्रमात् स्युः । त्र्यम्बकः, विष्णोशो, धात्रच्युतौ, लांकृतिः, हरये, शम्भवे, नायकः, पावकः ।

---

न्वान्, सुराज्ञि देशे, अन्यत्र राजवान् । वृषणोऽश्वः वृषणश्वः । वृषणोवसुः वृषण्वसुः । भुवर्लोक इत्यत्र सस्य रेफः । मनुरिव मनुष्वत् । अङ्गिरा इव अङ्गिरस्वत् । इतरे च इतरे च क्रियासातत्ये इतरेतरम् । नभ इव नभस्वत् । मुक्तिं ददातीति मुकुन्दः, वेदपाठात् मुक्तिदश्च । मनो मथ्नाति मन्मथः कामः । शेषं प्रयोगानुसारेण ज्ञेयम् । अन्यस्याऽषीत्रान्तस्य दन्नाशादौ से । षीत्रान्तभिन्नस्यान्यस्य दन् स्यात् आशादौ से सति, अनावितौ । अन्याचासावाशाचेति अन्यदाशा । एवं अन्यदाशीः अन्यदास्थितः अन्यदास्था अन्यदर्थः अन्यदूतिः अन्यद्रागः अन्यदुत्सुकः । अर्थशब्दस्य वेदपाठात् अन्यार्थोऽपि । अषीत्रान्तस्येति किं अन्यस्यान्येन वा आशा अन्याशा (१) ।

३५ । यल । यलाजिचः प्रत्याहाराः । इच इति षीक्रान्तं दं(२) यलस्यावयवापेक्षया यथाक्रममुक्तम् । त्र्यम्बक इति त्रीणि

---

(१) "रूढ़िशब्दा एते कथञ्चिद्व्युत्पाद्यन्त इत्यवयवार्थे नाग्रहः कार्य्य" इति तत्त्वबोधिनी । एते मनीषादयः शब्दा इत्यर्थः ।

(२) इच इति षष्ठ्यर्थे प्रोक्तान्तमित्यपि क्वचित्पाठः ।

३६ । वाव गोर्दान्ते ।

( वा ।१।, अव ।१।, गोः ६।, दान्ते ७। ) ।

गोरिचः स्थाने अवः स्याद्वा अचि परे दान्ते ।

गवेशः, गवीशः । दान्ते किं गवे ।

---

अम्बकानि चक्षूंषि यस्य त्र्यम्बकः, लोचनं चक्षुरम्बकमिति शाश्वतः । विष्णुश्च ईशश्च तौ, धाता च अच्युतश्च तौ, ऌराकृतिर्यस्य इति वाक्यानि ।

३६ । वाव । अव इति लुप्तप्रोक्तं दं, पृथक् विधानादेकारान्तादेशः । दस्यान्तो दान्तस्तस्मिन् । गोरिच इति अन्येजभावादोत इति शेषः । गवेश इति गवामीशः से क्तेर्लुकि दान्तत्वादवः । चित्रगविह इत्यादौ लाक्षणिकत्वान्न स्यात्(१) ।

(१) लाक्षणिकत्वान गौणत्वादिति । एतेन गोरिच इत्यत्र मुख्यस्यैव गोशब्दस्येति तर्कवागीशव्याशयः ।

पूर्वत इजचावनुवर्त्तेते । इचः समुदायस्य प्रयोजनाभावेऽपि लाघवादनुवर्त्तनं वसोऽरस्येत्यत्र वस इम्-विधान-लाघववत् । ननु वात्र गोः से इति क्तेऽपीष्टसिद्धौ यत् दान्तग्रहणं तत् निमित्ताचोऽपि समासावयव-पदादित्वज्ञापनार्थं तेन गवेश इत्यादयः सिद्धाः । अन्यथा अजाश्वगावः परमगवः, इत्यादौ अवादेशापत्तेरिति । का-सि ।

वृत्तौ गोरिचो ग्रहणात गवाग्रादेरिति ह्रस्वे उकारस्याप्यवादेशे चित्रगवाग्र्यं इत्यादि सिद्धमित्येके इति दुर्गादासः । सिद्धान्तकौमुद्यान्तु सर्वत्र विभाषा गोः ( ६।१।१२२ ) इति सूत्रोदाहरणे चित्रग्वग्रमित्युदाहृतम् ।

गवीश इत्यत्र अयां य्वोरित्यादिना वकारलोपाभावस्तु तत्सूत्रीयवाशब्दस्य व्यवस्थावाचित्वादिति दुर्गादासः । कार्त्तिकेयसिद्धान्तस्तु अयां य्वोरित्यत्र त्रिया एति त्रिया उत्क इत्याद्युदाहरणेनासमास एव विषयस्य ज्ञापितत्वादित्याह ।

**३७ । गवेन्द्रगवाक्षौ । (१॥)।(१)**

नित्यम् ।

**३८ । अयां य्वोर्लुब्वा ।**

( अयां ६॥, य्वोः ६॥, लुप् ।१।, वा ।१। ) ।

दान्ते स्थितानामयादीनां यवयोर्लुप् स्याद्वा ।

हरएहि हरयेहि, प्रभइदं प्रभविदं, श्रियाएति श्रियायेति, विष्णाउत्कः विष्णावुत्कः ।

---

३७ । गवे । गवेन्द्रश्च गवाक्षश्च तौ । गवामिन्द्र इति वाक्यम् । गवामक्षीव गवाक्षः, वातायने एवाभिधानात् अन्यत्र प्राण्यङ्गे गवामक्षीव गोऽक्षं इति, असंज्ञायां नित्यमकारलोप इति भाष्यम् । गोऽक्षं गो अक्ष मित्यन्ये ।

३८ । अयां । य च व च तौ तयोः । अयामिति व्वनिर्देशो गणार्थः, तेन अय् अव् आय् आव् इत्येषां सामान्यतो ग्रहणं(२)तेन अव्ययमाचक्षाण आस्ते अव्य-आस्ते अव्ययास्ते, मूलवृक्षमाचक्षाण

---

(१) प्रचरत्सु मुद्रित-मुग्धबोध-पुस्तकेषु "गवेन्द्र-गवाक्षौ नित्य" मित्यंशो वक्तव्यत्वेन निर्दिष्टः । तन्न समीचीनं मन्यामहे, बहु-टीकाकार-मत-विरुद्धत्वात् । ततश्च "गवेन्द्र गवाक्षौ" इति सूत्रं, नित्यमिति वृत्तिः । अत्र प्रमाणानि—दुर्गादासेन गवेन्द्र इत्युद्धृत्य विभाषाद्वयमध्यवर्त्तित्वादस्य नित्यत्वमित्युक्तम् । कार्त्तिकेयसिद्धान्तेनापि तर्कवागीशवत् समासवाक्यं लिखित्वा "नित्यमिति वृत्तिः, वाद्वयमध्यवर्त्तित्वात् नित्य' मित्यभिहितम् । अतोऽत्र पुस्तके गवेन्द्रगवाक्षाविति पृथक् सूत्रत्वेन निर्दिष्टम् ।

(२) यथा कथमपि अकाराकाराभ्यां यवयोर्योगनिष्पन्ना अयवादयो ग्राह्या न तु पूर्व्वसूत्रादिष्टानामेवेत्यर्थः ।

३८। एङोऽतः। ( एङः ५।, अतः ६। )।

दान्ते स्थितादेङः परस्याकारस्य लुप् स्यात्। हरेऽव, विष्णोऽव।

---

आस्ते मूल आस्ते मूलवास्ते इत्यादि। वाशब्दस्य व्यवस्थावाचित्वात् हवे च नित्यं, तेन अव्यहसति मूलब्रूहि हवे किं अव्ययसु मूलवसु। आत् क्विवन्तयवोरेव नित्यमिति केचित्। क उ पश्यन्ति, द्वा उ पश्यत इत्यादौ नित्यं उञि य्वोर्लुवित्यन्ये। आद् यवोर्लुग्वेति सिद्धे अयामिति निर्देशात् अज्जय्वोरनाद्योर्हसि नित्यं लुप्। (१) तेन उं शिवं अधिकृत्य आस्ते, अध्यु आस्ते अध्वास्ते, साधोरीर्लक्ष्मीः तस्या उदयः, साध्वी उदयः साध्युदयः इत्यादि। अनाद्योरिति किं, इय उय तौ यू तयोरर्थः यवर्थः। अज्जय्वोरिति किं वाय्वर्थः। हसि किं हर्योः शम्भ्वोः। आद् यवावीषत्स्पृष्टतरौ वा। अवर्णात् दान्ते स्थितौ यकारवकारावीषत्स्पृष्टतरौ वा स्यातां अचि परे। तयार्य्याः त आर्य्याः पट एहि, पटवेहि इति रूपद्वयम्। ईषत्-स्पृष्टता हि उच्चारणस्थानशैथिल्यमिति (२)।

३८। एङः। एङ् प्रत्याहारः अत इति तपरकरणात् पटवा-गच्छ इत्यत्र न स्यात्। वाद्वयमध्यस्थत्वात् नित्यम्। विशेषविधा-नादयवावनेन बाध्येते।

---

(१) अचोजायेते अज्जौ। यश्च वश्च तौ य्वौ। अज्जौ च तौ य्वौ चेति तयोः। अचः स्थाने जातयोरनादिस्थयोर्यवयोर्नित्यं लुप् स्यात् हसि परे।

(२) अत्र स्थले अयादीनामेकपदीयत्व एव यवयोर्लोपस्तेन पुत्र पठ य् इति, पुत्र पठ व् इति पुत्र पठ मा य् इति, पुत्र पठ मा व् इत्यादौ माभूदिति दुर्गादासमतम्।

४० । **गोर्व्वा** । ( गोः ६।, वा ।१। ) ।

गोरति वाऽसन्धिः। गो-अग्रं गवाग्रं गोऽग्रं ।

४१ । **नाजोऽन्तोऽनाङ् निः प्लुश्च** ।

(न ।१।, अच् ।१।, ओऽन्तः १।, अनाङ् ।१।, निः १।, प्लुः १।, च ।१। ) ।

---

४० । गोः । पूर्व्वसूत्रादत इत्यनुवर्त्त्य क्ति-विपरिणामादाह अतीति । वाशब्दस्योभयपक्षाश्रितत्वाद्विधिपक्ष आश्रीयतेऽत्र (१) । तथाच दान्ते स्थितस्य गोशब्दस्य अति यत्कार्य्यं प्राप्तं तन्न भवति वेत्यर्थः। तेन गो अग्रमित्यत्र वा सन्धिनिषेधः। पक्षे वाव गोरित्यवादेशे गवाग्रमिति, उभयत्यक्तपक्षे गोऽग्रमिति। वा द्वयेन रूपत्रयम् ।

४१ । नाजो । अजिति लुप्तप्रथमैकं दं, ओ अन्तो यस्य स ओऽन्तः, न आङ् अनाङ्, अचो विशेषणं, निरित्यस्य उभयत्रान्वयः। मण्डूकगत्या अचीति अनुवर्त्तते, तथाच अच्मात्रनिः ओऽन्तनिश्च अचि सन्धिं नाप्नोतीत्यर्थः। तेन जानु उ, जानू-अत्र जान्वत्र, मधु उ, मधू-अत्र मध्वत्र इत्यादौ नेर्गुणीभूतत्वात् सन्धिः(२)। अजोऽन्तः इत्येकदत्वे सिद्धे विभिन्नदकरणमेवं

(१) गो अग्रमित्युदाहृतवताचार्य्येण अकारे परे गोशब्दस्य सन्धिनिषेधोऽपि स्यादिति सूचितम्। ततश्च गोरति वा सन्धिरिति वृत्तौ सन्धिर्विभाष्यते उत वा-सन्धिरित्यत्र अकारप्रश्लेषेण सन्धिनिषेधो विभाष्यते इत्याशङ्क्याह वा शब्दस्येति।

(२) एषामचि परे सन्धिनिषेधात् अतः परश्चेत् सन्धिर्भविष्यतीति ज्ञेय-मिति। का—षि।

अज्मात्र ओकारान्तश्च निराङ्वर्जः सन्धिं नाप्नोति प्लुश्च (१)।
अ-अनन्तः, इ ईश्वरः, उ-उमेशः, अहो ईशान, कृष्ण एहि।
अनाङ् किं —

मर्य्यादायामभिविधौ क्रियायोगेषदर्थयोः।
य आकारः सङित् प्रोक्तो, वाक्यस्मरणयोरङित्॥
आत्मबोधादेकदेशादालोक्योपरतेर्हरिः।
आ एवं तत्त्वमर्य्यादा, आ एवं तत् कृतं मया॥

ज्ञापयति ओऽन्तनिमधिकृत्य यः सन्धिः सोऽपि न स्यात्, तेन अहो अत्र, नो अत्र इत्यादौ नाकारस्य लुप्। प्लुरित्यत्र योग-

(१) (मूले ओऽन्त इत्यसन्धिकमङ्गीकृत्याह) ओअन्त इति पृथक्करणादच्पदेन तन्मात्रं प्रतीयते। अन्यथा व्रजवदरलजनिम इत्यादिवत् अजन्तस्यैव नाप्तिः स्यात्। किन्तु ओ इति पृथक् पाठेनापि ओदन्तप्राप्तौ अन्तग्रहणं ओदन्तस्य अन्तावयवीयसन्धेरेव निषेधो न तु सर्व्ववर्णानामिति ज्ञापनार्थम्। अन्तावयवीयसन्धिश्च अचि पर एव सम्भवतीति अचि पर एव निषेधः। तत्साहचर्य्यात् अज्मात्रप्लुतयोरपि अचि पर एव सन्धिनिषेध इति बोध्यम्। तेन अनन्त अ ईशान अहो इत्यादौ सन्धिः स्यादेव। न च अनन्त अ इत्यादिषु अकारादेः सन्धिस्थानित्वाभावादेव सन्धिनिषेधस्य न प्रसङ्ग इति वाच्यम्, यस्य यस्य सन्धिनिषेधस्तन्निमित्तकसन्धेरपि निषेध इत्यवश्यवक्तव्यत्वात्। अन्यथा गङ्गे अत्र इत्यादावपि अकारलोपः प्रसजेत्। अत एव अवगणित-मवमतावज्ञाते अवमानितञ्च परिभूते। मङ्गलानन्तरारम्भप्रश्नकार्त्स्न्येष्वथो अथ इत्यमरोक्तिः संगच्छते। ननु कृष्ण एहि इत्यादौ प्लुतात्परस्य सेर्लोपः कथमितिचेत् सत्यं, आदौ ह्रस्वात् सिलोपे पदसंज्ञायां पश्चाद्दूराह्वानादौ प्लुतत्वे सन्धिनिषेधः इति दुर्गादासः।

ओऽन्त इत्यत्र यद्यपि येन विधिस्तदन्तस्येति न्यायात् ओकारपदेन ओकारान्तो लभ्यते तथापि अन्तग्रहणं, अन्तावयवस्य सन्धिनिषेधार्थं नतु समुदायस्य, तेन ईशानाहो इत्यादौ सन्धिः स्यादेवेति का - सि।

विभागः कर्त्तव्यः (१)। पूर्व्वसूत्राद्वाशब्दं प्लावनुवर्त्य तस्य व्यवस्थया विकल्पयन्ति, तेन कृष्ण इति कृष्णेति इतावेवेति केचित्। चकारोऽनुक्तसमुच्चयार्थः (२) यथा परे—

दूराह्वाने तु वाक्यस्य धावन्त्याच् प्लुर्विभाषया। पर्य्यायेण तथान्तृदृर्हृदयोरन्त्ययोरपि। अनन्त्ययोरथादूरे भवेत् प्रत्यभिवादने। नाम्नो गोत्रस्य चैवान्त्याजस्त्रीशूद्रानसूयके। अथ पूजा-प्रतिक्षेपानुयोगेषु (३) च वाक्यतः। इवार्थेन चिता योगे, तथा प्रश्नोत्तरे तु हेः। अथान्त्याच् धेर्द्विरुक्तस्य पर्य्यायेणैव भर्त्सने। अथ पूर्व्वस्य निन्दायामसूया-सम्मति-क्रुधि। तथा विचार्य्यमाणानामथान्त्याजङ्गयोगतः। त्यादि-मापेक्षक-त्यादेराशिषि प्रेष्यनिन्दयोः। तथाथ सर्व्वदानाच्च प्रश्नाख्याने भवेदथ। पूजा-प्रश्न-विचारेषु तथा प्रत्यभिवादने। एचः प्लुशादिभागः स्यादन्त्यभागस्य युद्भवेत्। न तु हैच, इति प्राह लौकिके शाकटायनः।

वाक्यस्य मध्ये धौ अन्त्याच् प्लुःस्याद्वा दूराह्वाने सति, स्वाभाविक-प्रयत्नातिरिक्त-प्रयत्नोच्चरितत्वं दूराह्वानं तस्मिन् सति। कृष्ण३ एहि, एहि कृष्ण३, पक्षे कृष्णेहि। तथा (अन्तृदृरः) ऋङ्गिनो रुसंज्ञको धावच् पर्य्यायेण प्लुर्वा स्यात् दूराह्वाने सति। दे३वद३त्त३ एहि, एहि देवदत्त३, पक्षे देवदत्तेहि। रु इति किं एहि सु-

(१) प्लु तस्य नञा योगस्तस्य विभागश्च। सन्धिनिषेधः सन्धिश्च भवतीत्यर्थः।

(२) अनुक्तानां समुच्चयः सम्बन्धोऽर्थो यस्य सः। अत्र अपरेऽपि केचित् नियमाः सन्तीति चकारेण सूचितमित्यर्थः।

(३) प्रतिक्षेपस्तिरस्कारः, अनुयोगः पृच्छा।

रथ३ अत्र अन्त्याच् पूर्व्वेण (१), सुरथेहि च। अनृदितिकिं कृष्ण३ एहि। अन्त्ययोरनन्त्ययोश्च हैहयो(२)रच् प्लुःस्याद्वा दूराह्वाने सति। अम्ब है३ है३ अम्ब, अम्ब हे३ हे३ अम्ब, पक्षे अम्ब३है अम्ब३हे हायम्ब३ हेऽम्ब३। है हे शब्दौ सम्बोधनार्थद्योतकौ। स्त्रीशूद्रानसूयकभिन्नानां (३) प्रत्यभिवादन नाम्नो गोत्रस्य च धावन्त्याचः प्लुः स्याद्वा। अभिवादितेन गुरुणा प्रयुक्ताभिवादकस्याशीः प्रत्यभिवादनम्। आयुष्मान् भव वशिष्ठ३, आयुष्मान् भव गार्ग्य३। नामगोत्रयोरितिकिं आयुष्मान् भव वत्स। स्त्रीशूद्रादौ तु आयुष्मती भव गार्गि, आयुष्मान् भव नापित, आयुष्मान् भव जाल्म। अदूरार्थोऽयमारम्भः, दूरे तु पूर्व्वेणैव। पूजाद्यर्थेषु वाक्यानामन्त्याच् प्लुः स्याद्वा। पुनर्वाक्यग्रहणं ध्यधिसाधारणप्लुत्यर्थं (४) शोभनः खल्वसि मैत्र३, मैत्र भोः किमायर्थ्यं३, अयं आडमित्याय३, अयमप्यदूरार्थः। इवार्थचित्शब्दयोगे वाक्यानामन्त्याच् प्लुः स्याद्वा। राजाचिद्ब्रूते३ राजवद्वदतीत्यर्थः। प्रश्नोत्तरे हैरन्त्याच् प्लुः स्याद्वा। कटमकार्षं हि३ प्रश्नस्य प्रतिवचनं तत्र। भत्सनेऽर्थे धे द्विरुक्तस्यान्त्याच् पर्य्यायेण प्लुः स्याद्वा। कर्ण३ कर्ण३ अद्य क्व गम्यते, कर्ण३ अद्य क्व गम्यते। निन्दाद्यर्थेषु हेः पूर्व्वेदस्यान्त्याच् प्लुः स्याद्वा अर्ज्जुन३ अर्जुन धिक्

(१) पूर्व्वेण पूर्व्वनियमेन अन्त्याचः प्लवो स्यादित्यर्थः।

(२) हैहे इति शब्दयोः।

(३) अनसूयको मूढः।

(४) सम्बोधनासम्बोधनसाधारणम्।

त्वामित्यादि। इदमन्यत्राप्यूहनीयम् (१)। सन्दिग्धे वस्तुनि तत्त्व-परीक्षा विचारः, तद्विषयाणां वाक्यानां पूर्व्वदस्यान्त्याच् प्लुः स्याद्वा अहिः३ नु रज्जुः। अङ्गशब्दयोगे त्याद्यन्त-सापेक्ष-त्याद्यन्तस्यान्त्याच् प्लुः स्याद्वा। अङ्ग कौड़३ पुरा बुध्यसे जाल्म। अन्यत्र अङ्ग-कौड़ अङ्ग वृज। आशीर्व्वादाद्यर्थेषु चानङ्गयोगेऽपि त्याद्यन्त-सापेक्षत्याद्यन्तस्यान्त्याच् प्लुः स्याद्वा। रुद्रं भज३ चिरं जीव्याः। भृत्य धान्यं लुनीहि३ अजाश्च रक्ष। स्वयं दुग्धं भुङ्क्ते३ उपाध्यायं तक्रं पाययति।

प्रश्नाख्यानयोः सर्व्वेषां दानां अन्त्याच् प्लुः स्याद्वा। अगमः३ पूर्व्वा३न् ग्रामा३न् अग्निभूते३। अगम३ पूर्व्वा३न् ग्रामा३न् भोः। पूजाद्यर्थेषु एच आदिभागस्य प्लुः स्याद्वा, अन्त्यभागस्य युत्स्याद्वा न तु हनिष्पन्नस्य एचः। शोभनः खल्वसि अग्न३इ, पूजायाम् (१)। आगच्छ३इः शैल३इ अग्निभूत३इ, प्रश्ने। होतव्यं दीक्षितस्य गृह३इ, विचारे। आयुष्मन्तौ भवतं वत्स३उ, प्रत्यभिवादने। एषु किं शोभनः खल्वसि अग्ने। दूरे तु शोभनः खल्वसि अग्ने३। हस्य एचस्तु आयुष्मन्तौ भवतं कन्ये३ इति पूर्व्वेण प्लुः न अत् युतौ। यत्र यत्र प्लुस्तत्रैव विकल्पः, यत्र यत्राचि प्लुर्व्विहितः तत्र सन्ध्यभावः, यत्रानचि तत्र प्रसङ्गादुक्तः। प्लु-प्रकरणं छान्दसमिति परे। शाकटायनस्तु भाषायामपि अतएव लिखितमस्माभिः।

(१) अन्यत्रापि असूयाद्यर्थेष्वपि, इदं धिक् त्वामिति।

४२.। व्द्वेऽमीरवे ।

व्व-द्वे ७।, अमी ई उ-ए = एवे ।१। ) ।

व्वे निष्पन्नो ऽमी शब्दो, द्वे निष्पन्न ईदूदेदन्तश्च सन्धिं नाप्नोति।

अमी-ईशा:, हरी-एतौ, विष्णू-इमौ, गङ्गे-इमे ।

व्द्वे किं अम्ययं, बध्वर्थः ।

---

मर्य्यादायामित्यादि । मर्य्यादा सीमा, अभिविधिरभिव्याप्तिः, क्रियायोगो धातुना सह सम्बन्धः, ईषदर्थोऽल्पार्थः, क्रमेणोदाहरति आत्मबोधादिति । आ आत्मबोधात् आत्मज्ञानपर्य्यन्तं आ एकदेशात् एकदेशं व्याप्य हरिः आलोकि सम्यक्प्रकारेण दृष्टः । आ उपरतेरीषद्विरक्तैर्जनैरित्यर्थः । अङिदुदाहरति आ एवमिति । मर्य्यादा महिमा, आ इति वाक्यं, तत्त्वस्य तवान्तःकरणस्य एवं एतादृशी मर्य्यादा, अर्थात् मया यदुक्तं तत् त्वया न कृतं इति भावः ; तत्त्वं ब्रह्मणि तद्भावे वाक्यभेदे च चेतसीति धरणिः । आ एवं भवता एतादृक् कथमुच्यते त्वद्वाक्यान्मया यदङ्गीकृतं तत्कृतमेवेति पूर्व्ववाक्यानन्तरं स्मरणं, उभयत्र न सन्धिः ।

४२ । व्द्वे । व्वश्च द्वश्च तत् तस्मिन् । अमी इति लुप्तप्रोक्तान्तं टं, रवे इति लुप्तप्रोक्तं टं, ईश्च उश्च एश्च तं । भिन्नटाभ्यां व्द्वयोः क्रमेणोदाहरति अमी ईशा इत्यादि । गङ्गे इमे इति । द्व-निष्पन्नस्य एकारस्य निषेधात् पचेते इमौ इत्यादौ न स्यात् । पचेते अत्र इत्यादौ तन्निमित्तत्वान्नाकारलुप् । अचीत्यनुवर्त्तते, तेन कामवाचकात् इ शब्दात् औ ई, दधि ई दध्यौ इति स्यादेव,

४३। स्योदितौ।

( सि ओत् = स्योत् ।१।, वा ।१।, इतौ ।७। )।

सौ जात ओकारः सन्धिं वा नाप्नोति इतौ परे।

विष्णो इति विष्ण-इति विष्णविति।

एवं मधु ऊ मधू। नञा निर्द्दिष्टस्यानित्यत्वं तेन अमुकेऽत्र, अतएव अदसो मात् पर ईदूदेत् सन्धिर्न स्यात्, अके तु अत्र स्यादिति परे, हे सम्ब्येऽस्तमनोदये, मणीवादयश्च सिद्धाः। मणी आदीनामिवे एव नान्यत्र तेन मणी अत्र मणी इति। मणी आदयस्तु—मणी भार्य्यापती चैव जायापती च जम्पती। वाससी रोदसी चैव पेचुषी दम्पती तथा इति। यद्यपि कादम्ब-खण्डितदलानि व पङ्कजानि; प्रशस्तलिखितानि व केशिदन्त-क्षतानि, शातवं व यशः पपुरित्यादौ इवार्थोऽपि वशब्दोऽस्ति, तथापि इवे अनिष्टवारणार्थमिदम्। अम्ययमिति अमधोर्भावे घञ् स्वपक्षे (१) अमो रोगः अस्यास्ति असौ अमी। बध्वर्थं इति बध्वा अर्थं इति वाक्यम्।

४३। स्योत्। सौजात ओत् स्योत् शाकपार्थिवादि-त्वान्मध्यपदलोपः। विष्णो इति। सन्ध्यभावपक्षे ओरवादेशे अयामित्यादिना वा लुप्, लुवभावपक्षे विष्णविति। सौजात इत्युक्तेः गवित्यत्र अनुकरणे माभूत्।

(१) अनमध च इत्यादिना लुक्पक्षे।

४४। उञ् णपात्त्वचि व वा।

( उञ् ।१।, णपात् ५।, तु ।१।, अचि ७।, व ।१।, वा ।१। )।

उञ् सन्धिं वा नाप्नोति इतौ परे, णपात् परस्तु वो वा स्यादचि।

उ इति, विति। किम्वुक्तं किमु उक्तम्।

४५। वेक् स्वश्चार्णेऽसे।

( वा ।१।, इक् ।१।, स्वः १।, च ।१।, अर्णे ७।, असे ७। )।

इक् सन्धिं वा नाप्नोति, स्वश्च वा स्यादर्णे परे, नतु से, दान्ते।

शार्ङ्गी अत्र शार्ङ्गि अत्र शार्ङ्ग्यत्र। असे किं—हर्य्यर्चा।

---

४४। उञं। उञिति: प्रश्नार्थः। इतावित्यनुवर्त्तते अत आह इतौ परे इति। णप् प्रत्याहारः तस्मादुञो वोऽचि वेत्यर्थः। उ इतीति पूर्व्वेण नित्यं निषेधे प्राप्ते विकल्पः। पक्षे विति। किम्वुक्तमिति सन्निपातलक्षणस्य विधेरनिमित्तत्वान्नुः। रूपान्तरत्वात शुभंयुमाचक्षाणः शुभंय् उ, शुभंयु इति शुभंय्विति इति तु पूर्व्वभागे न। णपात्सानुनासिको व इत्यन्यः। किमु उक्तमिति व-विधानाभावपक्षे नाजोऽन्त इति सन्धिनिषेधः, उपदेशावस्थायां केवलाचो ग्रहणात्। वाशब्दव्यवस्थया इतौ उञः सानुनासिको घादेशः तेन ऊँ इति इत्यपि।

४५। वेक्। इक् प्रत्याहारः। न र्णः अर्णस्तस्मिन्। शार्ङ्गि अत्र इति स्वविधानसामर्थ्यान्न यः। वाशब्दस्य व्यवस्थावाचित्वात् अदान्तेऽपि क्वचित्, यथा—अरी अर्त्ति, अरि अर्त्ति,

४६। ऋत्यक्। (ऋति ७, अक् ।१।)।

अक् सन्धिं वा नाप्नोति ऋति परे ह्रस्वश्च वा स्यात्।

ब्रह्मा ऋषिः, ब्रह्म-ऋषिः, ब्रह्मर्षिः।

इति अच्-सन्धिपादः।

---

अर्य्यर्च्चि इत्यादि। हर्य्यर्च्चेति हरेरर्च्चा इति वाक्यं, इदन्तु (१) भाष्यमते। परे तु नित्यसवर्ज्जनात् नद्या अभ्र इत्यर्थे नदी अभ्रः, नदि अभ्रः, नद्यभ्र इति। नित्यसे तु नद्यर्थमिति स्यादेव।

४६। ऋति। ऋगकौ प्रत्याहारौ। अत्रास इति नानुवर्त्तते, तेन महांश्चासावृषिश्चेति महाऋषि, महऋषि, महर्षिरिति। तथाच उच्चारित-रुचिर-ऋचां चाननानां चतुर्णा मिति सूर्य्यशतके। अत्रापि नित्यसवर्ज्जनात् अश्वर्च्छी इत्यादि उदाहरन्ति केचित्। वा शब्दस्य व्यवस्थावाचित्वात् गैः परार्च्छतीत्यादौ न स्यात्। अत्र केचिदाहुः—"ऋतोरलावृद्लृ-तोर्व्वा लोपस्ताभ्याम् घेश्च"। ऋकारस्य ऋकारे परे रः लृकारे परे लः स्याद्वा, ऋतो लोपश्च वा ऋद्लृतोः परयोः, रलाभ्यां परयो ऋद्लृतोर्घश्च। पितॄणं, पितृणं, पितॄणं पक्षे पितृऋणं, पितॄणम्। होत्लृकारः, होत्लृकारः, होत्लृकारः पक्षे होतृ-लृकारः, होतृकारः इति। परे तु, ऋत ऋद्लृतावृद्लृद्भ्यां

---

(१) समासमात्रवर्जनन्तु।

वा ऋता तु लृट् लृतः। ऋकारस्य ऋकारेण सह रेफभाग-द्वययुक्ता ऋत्, ऋकारस्य लृकारेण सह लभागद्वययुक्ता लृत् वा स्यात्, लृकारस्य तु ऋकारेण सह लभागद्वययुक्त लृच्च वा। होतृ ऋकारः, होतृ लृकारः इत्यत्र होतृकारः, होतॢकारः। गम्लृ ऋकार इत्यत्र गम्लृकारः पक्षे यथा प्राप्तम्। अस्मन्मते तु वा शब्दस्य बाहुल्यात् ऋकि ऋको र्ध-सन्ध्यभाव-स्वाः प्रवर्त्तन्ते। तथाहि पितॄणं, पितृऋणं, पितृणम्। प्रागृको र्धाभावात् "सहर्णार्ध"इति र्घे कृतेऽपि न स्वः। स रेफभागद्वययुक्तः। ऋकारे त्रयोऽज्भागाः सन्ति तन्मध्यवर्त्ती तुरीयोरेफः। इकारभागः पूर्व्वार्द्धे उपर्य्यध उवर्णभाक्। पूर्व्वार्द्धभागवर्णांशो रेफस्तन्मध्य-संस्थित इति शिक्षाकारवचनात् ऋकारद्वयादेशे र्घस्य स्वत्वे रेफ-भागद्वयासिद्धेः तेन पितॄर्णं इति (१)। क्वचिदपवादविषयेप्युत्सर्गो-ऽपि निविशते इति न्यायात् यलायवायाव इति रलौ तेन पित्रृणं, पित्रृकारः, गम्ॢकारः।

इकोयलन् वार्णेऽचि। इकः क्रमात् यलन् वा स्यात् अर्णे अचि परे। अनावितौ। दधियत्र, मधुवत्र, कर्त्तृरत्र, शक्लृलत्र। एवं सेऽपि। त्रियम्बकः, भूवादय इत्यादि, पक्षे दधि अत्र दध्यत्र इत्यादि। अर्णे किं दधीदम्। अचि किं–दधि तिष्ठति।

---

(१) स रेफभागद्वययुक्त इत्यारभ्य तेन पितॄर्णमित्यन्तस्य टीकांशस्य टिप्पनी परिशिष्टे द्रष्टव्या।

### ४७।• स्तु श्चुभिः श्चुशात्।

( स्तु ।१।, श्चुभिः ३।।।, श्चु ।२।, अशात् ५। )।

सकारतवर्गौ शकारेण चवर्गेण वा योगे शकारचवर्गौ क्रमात् प्राप्नुतः, न तु शात् परौ। सच्चित्, शार्ङ्गिञ्जय। अशात् किं प्रश्नः।

### ४८। ष्टुभिः ष्टुष्यदान्तटोः।

( ष्टुभिः ३।।।, ष्टु ।२।, अपि ७।, अदान्तटोः ५। )।

---

४७। स्तु श्चुभिः। स च तुश्च तत्, श च चवश्च ते श्चवः तैः, अवयवापेक्षया त्वं, यथा—अचः. अचामिति, श् च चुश्च तत्। इविषये त्वनिर्देशात् (१) नञ् तत्पुरुषः, कञ् धातुः, अच् तकार इत्यादौ न स्यात्। एके तु अघ्यचताच्येप्पिरिति ज्ञापकात् दान्तचोः परस्य स्तोश्चुत्वं न स्यादित्याहुः। अच्शु नञ्शु इत्यादौ चञाभ्यां सस्य श इति केचित् (२)। सस्य शत्वं यथा कृष्णश्चिन्त्य इत्यादौ। दान्तादान्तसाधारणोऽस्य.विषयः, अतएवादान्ते प्रत्युदाहरति प्रश्न इति। प्रच्छ धोः स्वपरचेत्यादिना नङ्, न जिश्च, छ्वोः शूटाविति छस्य शः।

---

(१) श्चुभ्यामितिकर्त्तव्ये श्चुभिरितिकरणात्।

(२) "अत्र अचसन्धिरिति अघ्यचताच्येपपिरित्यादिज्ञापकात् विभक्त्यन्त चवर्गान्तात् परौ सकारतवर्गौ शकारचवर्गौ न स्यातामिति बोध्यम्, ज्ञापक ज्ञापितविधयो लक्षणमनुसरन्तीति न्यायात्। तेन नञ्समासः कञ्धातुरित्यादयः सिद्धाः। किन्तु अच्शु नञ्शु इत्यादौ सभयोः परयोश्चवर्गस्य दान्ततुल्यत्वेऽपि विभक्त्यन्तत्वाभावात् सुपः सस्य तालव्यशकारत्वम्"—इति दुर्गादासः।

सकारतवर्गौ षकारेण टवर्गेण वा योगे षकारटवर्गौ क्रमात् प्राप्नुतः, न तु षकारे परे, न च दान्तात् टवर्गात् परौ।

तट्टीका, चक्रिण्ढौकसे। अपि किं सत् षष्ठः। अदान्तटोः किं षट्-ते।

४९। षण्णां षण्णवति षण्णगर्य्यः। (१॥)।

एते निपात्यन्ते।

५०। ले लस्तोः। (ले ७, लः १, तोः ६।)।

ले परे तो लकारः स्यात्। तल्लयः, विद्वाँल्लिखति।

---

४८। ष्टुभिः। ष्टुभिरिति पूर्व्ववत्। ष च टुश्च तत्, न ष अष तस्मिन्, दस्यान्तो दान्तः स चासौ टुश्चेति सः, न सः अदान्तटु स्तस्मात्। तथाच दान्तटवर्गात् उच्चार्य्यमाणौ सकारतवर्गा वित्यर्थः। तेन षट्सन्त इत्यत्र तनि कृते अदान्तत्वेऽपि प्रागदान्त परत्वान्न ष्टुत्वमिति। द्वन्द्वनिर्द्देशान्न यथासङ्ख्यम्। स्तु इत्यनु वर्त्तयन्नाह सकारतवर्गाविति। अस्यापि दान्तादान्तयोर्व्विषयः।

४९। षण्णाम्। षण्णाञ्च षण्णवतिश्च षण्णगरी (१) च ताः। अनुकरणात् न क्लेर्लुक्। षण्णामिति नुमि डे प्राप्ते णो निपात्यते। नवतिनगर्य्योर्दान्तटोः परत्वादप्राप्ते णत्वं निपात्यते। नगरीति स्त्रीलिङ्गनिर्द्देशात् षड्नगरमित्यत्र न स्यात्।

५०। ले। तल्लय इति। लीयत इति भावे अल्; तस्य लय इति वाक्यम्। यद्वा लीयते अस्मिन् लयः, स लयो यस्येति

---

(१) षण्णां नगरीति दुर्गादासः, षण्णां नगराणां समाहार इति गोयीचन्द्रः।

यलो द्विधारो निरनुनासिकः सानुनासिकः ।

ञमोऽनुनासिक स्तेन तत्स्थाने सानुनासिकः ॥

## ५१ । म्नो नुं झस्यदान्ते ।

( म्नोः ६॥, नुः १।, झसि ७।, अदान्ते ७। ) ।

अदान्ते स्थितयो र्मनयो र्नुंः स्यात् झसि परे। रंस्यते, वृंहितं।

---

विग्रहः। ननु यलस्य सानुनासिकत्वं कुत इत्यत आह यलो द्विधेत्यादि। नास्ति रो यस्मिन् सोऽरः, यल इत्यस्य विशेषणं। तथाच रभिन्नयलो द्विधा द्विप्रकारः, एको निरनुनासिकः अनुनासिकत्वधर्म्मरहितः, (१) अपरः सानुनासिकः अनुनासिकत्वधर्म्मसहितः। तथाच शिक्षाकाराः—अन्तस्थ यरलवा ईषत्स्पृष्टा, रेफवर्ज्जिताः द्विप्रभेदाः सानुनासिका निरनुनासिकाश्च इत्याहुः। ञम इति, ञमः प्रत्याहारः। अनुनासिक इति अनु पश्चात् नासिकया उच्चार्य्यते यः सोऽनुनासिकः। ञमस्तु अनुनासिकएव तेन हेतुना तत्स्थाने य आदेशः सः सानुनासिकः स्यात्, न निरनुनासिक इत्यर्थः। विद्वाँल्लिखति इत्यादौ सानुनासिको लकारः। एवं यँय्यम्यते सँव्वत्सर इत्यादि।

५१। म्नोः। म च न च तौ तयोः। न दान्तोऽदान्तस्तस्मिन्। रंस्यते इति रम धोः स्यते। वृंहितमपि वृहि वृद्धौ क्त, इदित्त्वान्नुन्, अनेन नस्य नुः।

---

(१) निराकुल इतिवदत्र अनुनासिकशब्दस्य धर्म्मपरतया निर्द्देशः।

५२। ञपे ञम् नो ।: (ञपे ७, ञम् ।१।, नोः ६।)।

अदान्ते स्थितस्य नो ञपे परे ञम् स्यात्। शान्तः, अङ्कितः।

५३। वा त्वरयपेऽरयम्।

(वा ।१।, तु ।१।, अरयपे ७।, अरयम् ।१।)।

दान्ते अदान्ते वा स्थितस्य नो रेफवर्जयपे परे रेफवर्जयम् वा स्यात्। यमो ऽनुनासिकः। यँय्यम्यते यंयम्यते, हरिँभ्भज हरिंभज। कम्पते इति पूर्व्वेण नित्यम्। अरे किं—रंरम्यते।

५२। ञपे। ञप्ञमौ प्रत्याहारौ। शान्त इति शम् घोः क्ते ञमुञोभन्स्यणाविति घः, पश्चात् पूर्व्वेण नो क्ते अनेन नः। अङ्कित इति अकिक् लक्ष्मणि (१) क्त, इम्, नुण्, पश्चात् पूर्व्वेण नौ, क्ते अनेन ङः। अत्र पूर्व्वसूत्रात् म्नोरित्यनुवर्त्त्य तन्नोरेव ञम् तेन जंजप्यते इत्यादौ न नित्यं, किन्तु परसूत्रेण विकल्पः (२) भपीति कृते सिद्धे ञप इति करणात् इन्दांचकार इत्यादौ आमो नो न नित्यं ञम्, गौरवादर्थाधिक्यमिति।

५३। वा त्व। नास्ति रो यस्मिन् सोऽरः, अरश्चासौ यपश्चेति स तस्मिन्। एवं अरश्चासौ यम् चेति सः। यप्यमौ प्रत्याहारौ। अदान्त इत्यनुवर्त्तते, सिंहावलोकितन्यायेन दान्त इत्यपि; अत आह दान्तेऽदान्ते इति। यँय्यम्यते इति यमधो यँङ् ञमजपेत्यादिना नुण्। इह सामान्यनोर्ग्रहणात् यम्।

(१) लक्ष्म चिह्नयुक्तकरणमिति दुर्गादासः।

(२) जंजप्यते इत्यादौ ञमजपेत्यादिना अनुस्वारागमेन तस्य म्नोः स्थानजातत्वाभावान्न नित्यमित्यर्थः।

## ५४। दान्ते मो ऽसम्राजो हसे नुः।

( दान्ते॰७।, मः ६।, असम्राजः ६।, हसे ७।, नुः १। )।

दान्ते स्थितस्य मस्य हसे परे नुः स्यात्, न तु सम्राजः।

शिवंस्तौति। असम्राजः किं—सम्राड़िति।

---

एवं वँव्वम्यते वंवम्यते, लँल्लय्यते, लंलय्यते इत्यदान्ते। दान्ते तु सँय्यन्ता, संयन्ता:, सँव्वत्सरः, संवत्सरः, सँल्लयः, संलय इत्यादि। कम्पत इति कपि ङ चलने, ते, इदित्त्वान्नुण्, म्नो नुँरिति नौ क्रते अपे अम् इति। वाशब्दस्य व्यवस्थावाचित्वात् हकारस्य व्यवधानेऽप्यपेऽयम्, तेन किँय्ह्यः, किंह्यः, किँव्ह्वलयति किंह्वलयति, किँल्ह्लादयति किंह्लादयति, किन्ह्नुते, किंह्नुते, किम्ह्मलयति, किंह्मलयति (१)। मर इति किं—किं ह्रादयति।

५४। दान्ते। दस्यान्तोदान्तस्तस्मिन्। न सम्राट् असम्राट् तस्य। क्विबन्तनिर्देशात् संराजते इत्यादौ न स्यात् (२)। "वा विरामे" इत्यन्यः। रामं, रामम्। दान्ते किं गम्यते। हसे किं? अहमत।

---

(१) "नमयवलाः परभूता यस्मिन् तस्मिन् हकारे परे पदान्ते मकारस्य स्थाने यथाक्रमं नमयवला वा भवन्ति। यवलाः सानुनासिका निरनुनासिकाश्च भवन्ति, इह तु सानुनासिकानामेव विधानम्। ह्नुते इति ह्नुङ् अपनयने। ह्वल ह्मल सञ्चलने घटादिः। ह्य इत्यव्ययं गतदिनमभिधत्ते। ह्लादो सुखे च" इति गोयीचन्द्रः।

(२) इति शब्देन सम्राट् शब्दो यस्मिन्नर्थे रूढ़स्तत्रैव वर्ज्जनमिति बोध्यते। रूढ़िस्तु— येनेष्टं राजसूयेन मण्डलस्येश्वरश्च यः। शास्ति यश्चाज्ञया राज्ञः स सम्राड़ित्यमरोक्तेः। तेन सं शोभनं राजते संराट् चन्द्र इत्यत्र स्यादेवेति दुर्गादासः।

५५। पुंसः सन् खप्यम्परेऽख्ये।

( पुंसः ६।, सन् ।१।, खपि ७।, अम्परे ७।, अख्ये ७। )।

पुंसो मस्य सन् स्यात्, अम्परे खपि परे, न तु ख्ये।

पुंस्कोकिलः। अम्परे किं—पुंच्चौरम्। अख्ये किं—पुंख्यातः।

---

५५। पुंसः। अम् प्रत्याहारः। अम् परो यस्मात् स तस्मिन्। न ख्योऽख्यस्तस्मिन्, खपीत्यस्य विशेषणम्। पुंस्कोकिल इति पुमांश्चासौ कोकिलश्चेति इति वाक्यं। विधानसामर्थ्यात् न पुनः स्यात्सलुक्। एवं पुंस्करोति पुमितिपदं करोतीति वाक्यम्। पुंस्पानमित्यादि। पुंच्चौरमिति पुंसः चौरमिति वाक्यम्। पुं-ख्यात इति पुंसा ख्यात इति वाक्यम्। सन्यनुनासिको नोर्वा समस्तु सुमि सन्नपि। नो रनुनासिको वा स्यात् सनि, सुमि तु समः सन्च वा स्यात्।

सकतानां (१) क्रमाद्द्वित्वे सर्व्वेषाञ्च (२) द्वयोर्द्वयोः।
अनुस्वारे भवन्त्यष्टावष्ट स्युरनुनासिके।
मते षोड़श वा ज्ञेयाः कज्जट-श्रुतिपालयोः॥ (३)

संस्कर्ता संस्कर्ता संस्कर्त्ता संस्स्कर्ता संस्सकर्त्ता संस्क्कर्त्ता संस्कर्त्ता संस्स्कर्ता। सँस्स्कर्ता सँस्कर्ता सँस्कर्त्ता सँस्स्कर्ता सँस्सकर्त्ता सँस्क्कर्त्ता सँस्कर्त्ता सँस्स्कर्ता। कज्जटश्रुतिपालयो

---

(१) स क त एषां वर्णानां।

(२) सर्व्वेषां सकतानां।

(३) कज्जटश्रुतिपालयोस्तदाख्य-वैयाकरणविशेषयोः।

५६। नो ऽप्रशामश्छते।

( नः ६।, अप्रशामः ६।, छते ७। )।

दान्ते स्थितस्य नस्य सन् स्यात्, अम्परे छते परे, न तु प्रशामः। शार्ङ्गिंश्छिन्धि, चक्रिंस्त्राहि। अम्परे किं सन्त्सरुः। अप्रशामः किं—प्रशान्तनोति।

५७। कांस्कान् नॄंः पि वा।

( कांस्कान् ।१।, नॄंः ।१।, पि ७, वा ।१। )।

कांस्कान् कान्कान्, नॄंःपाहि नॄन्पाहि।

---

मतभेदात् षोड़शरूपाणि (१)। केचित् सनि मलोपे चत्वारि यथा—सस्कर्ता सत्स्कर्ता सत्स्कर्ता सस्कर्ता इत्याहुः।

५६। नो। न प्रशान् अप्रशान् तस्य। शार्ङ्गिंश्छिन्धि इति, छिदधोर्हि अण्, नणो न, हेर्धिः, सनि वानुनासिकः शार्ङ्गिँ-श्छिन्धि इत्यपि। चक्रिंस्त्राहि इति त्रायते इति त्राः, त्रा इव आचरेति क्विः, हिः, त्राहि। अन्ये तु त्राधुरदादिरप्यस्ति इत्याहुः। सानुनासिके चक्रिँस्त्राहि इत्यपि॥

५७। कां। कानिति द्वीत्वान्तस्य कानिति द्वीत्वान्ते, नॄन् इत्यस्य पकारे सन् वा स्यात्। कांस्कानिति। सानुनासिके काँस्कान्। सनभावपक्षे कान् कान् वीप्सार्थे द्विः। नॄनित्यस्य

---

(१) "द्वि-सकारमेक-सकारं त्रि-सकारं रूपत्रयं सानुस्वार-सानुनासिकभेदात् षट्प्रकारं, तदेव द्विककारभेदात् द्वादशप्रकारमेतदेव भाष्ये दर्शितम्" इति गोयी-चन्द्रः।

५८। न ण टन ङ श्चकान् श शस् स शसि वा।

(न ण टन ङः ६।, चकान् ।१।, श शस् स शसि ७।, वा ।१।)।

दान्ते स्थितस्य नस्य चन् शे, णस्य टन् शसि, टनयो स्तन् से, ङस्य कन् शसि, स्याद्वा। सञ्छम्भुः सञ्श्शम्भुः सञ्शम्भुः, सुगण्ट्षष्ठः सुगण्षष्ठः, षट्त्सन्तः षट्सन्तः, सन्त्सः सन्सः, प्राङ्क्षष्ठः प्राङ्षष्ठः।

५९। चपोऽवे जब्। (चपः ६।, अवे ७।, जब् ।१।)।

दान्ते स्थितस्य चपस्य जब् स्यात् अवे परे। वागीशः, चिद्रूपः।

---

पकारे पञ्चधा—नॄः पाहि नॄँः पाहि नॄंस्साहि। सर्व्वत्र निपातनात् सन् विश्व। पक्षे नॄन् पाहि नॄँस्साहि इति परे॥

५८। टश्च नश्च तत्, नश्च णश्च टनश्च ङश्च तत्, तस्य। एष्वकार उच्चारणार्थः। चकः प्रत्याहारस्तथात्वमितं करोति, तेन चकान्, तथाच चकोपस्थितचतुर्णां न इत्यर्थः, अतएव यथाक्रमं दर्शयति दान्ते स्थितस्येति। सञ्छम्भुरित्यादि—नस्य चनि कृते आगमो यद्गुण स्तद्ग्रहणेन गृह्यते (१) इति न्यायात् नस्यादान्तत्वे ञ्णोर्नुरिति नुः, पश्चात् जपे जम्, शहोश्छपादिति वा छ। चनभावपक्षे सञ् शम्भुः। सुगण्ट्षष्ठ इति शसः प्रत्याहारत्वज्ञापनार्थं मूर्द्धन्येनोदाहृतम्। एवं टनि वा छत्वे सुगण्ट्छम्भुः सुगण्ट्शम्भुरिति, एवं सुगण्ट्साधुरिति। प्राङ्क्षष्ठ इत्यादि॥

---

(१) यद्गुणो यस्य स्थानजातः। तद्ग्रहणेन गृह्यते तद्वत् ज्ञायते इत्यर्थः। अत्र दुर्गादासः—न ण ट न ङ इत्यस्य पञ्चम्यन्तत्वे चकि कृतेऽपीष्टसिद्धौ षष्ठ्यन्तस्य चकान् विधानं तद्गुणत्वेन चनादीनां पदान्तत्वार्थमित्याह।

६० । **जमे जम् वा ।** (जमे ७।, जम् ।१।, वा ।१।) ।

दान्ते स्थितस्य चपस्य जमे परे जम् वा स्यात् । एतन्मुकुन्दः एतद्मुकुन्दः ।

६१ । **त्ये ।** ( ७। ) ।

त्ये मे परे दान्ते स्थितस्य चपस्य जम् स्यान्नित्यम् । चिन्मयं, वाङ्मयम् ।

---

५८ । चपो । चप्जबौ प्रत्याहारौ । परबकारेणाबप्रत्याहारं ज्ञापयन्नाह चिद्रूप इति ।

६० । जमे । पूर्व्वसूत्राच्चप इत्यनुवर्त्तते । अत्र यद्यपि अन्ते चप्जबाविति विधानात् (१) वाकारं विनैव एतद्मुकुन्द इति सिध्यति (२) तथापि वाशब्द एवं ज्ञापयति, विरामाभावे दान्ते झपश्चप् एव, विरामे चप्जबाविति, तेन (३) परसूत्रस्य सार्थकत्वमिति । एतन्मुकुन्द इति ।

६१ । त्ये । दान्तस्थितस्य चपस्य नित्यं जम् स्यादित्यर्थः । त्ये जणनङाभावादाह त्ये म इति । चिदात्मकमित्यर्थे मयट् ।

---

(१) चप्जबाविति विधानात् वक्ष्यमाण-झप्झषोरिति सूत्रे इति शेषः ।

(२) इति सिध्यति---एतद्मुकुन्द इत्यत्र एष चासौ मुकुन्दश्चेति समासे लुप्तविभक्तिकत्वेन दान्तत्वे सिद्धे विरामपरतया झषो जबि कृते दकारो भवत्येवेत्याशङ्क्याह तथापीति । एतद्मुकुन्द इत्यत्र तु दान्तत्वेऽपि विरामाभावात् न झप्झषोरित्यनेन जब् ।

(३) तेन अत्र सूत्रे विकल्पविधानेन । अन्यथा चिद्मयमित्यनिष्टं स्यात् ।

### ६२ । शहोश्चपात् वामि छझभौ ।

('शहोः ६॥, चपात् ५।, वा ।१।, अमि ७।, छ-झभौ १॥ ) ।

दान्ते स्थितात् चपात् परयोः श-हकारयोः क्रमेणामि परे छ-झभौ वा स्तः । तच्छिवः तच्शिवः वाग्घरिः वाग्हरिः । अमि किं—वाक्श्चोतति ।

### ६३ । स्वाम्णङोऽचि द्विः ।

( स्वात् ५।, णङः १।, अचि ७।, द्विः १। ) ।

स्वात् परो दान्ते स्थितौ णङो द्विः स्यादचि परे ।

सुगण्णीशः सन्नच्युतः प्रत्यङ्ङात्मा ।

---

६२ । शहोः । शच हच तौ तयोः, छच झभ् च तौ, अम् प्रत्याहारस्तस्मिन् । तच्छिव इति स चासौ शिवश्चेति वाक्यं, पक्षे तच्शिवः । एवं वाक्‌क्ष्णुः वाक्श्लक्ष्णुः वाक्‌छ्मशानं वाक् श्मशानं ; अनयोः परयोः शस्य नेच्छन्ति चान्द्राः (१) । वाग्घरि-रिति, एषां यो येन इति नियमात् प्राक् समो झभ् पश्चात् चपो जब् । त्रिष्टुब्भसति त्रिष्टुब्हसति इत्यादि ।

६३ । स्वात् । णङ प्रत्याहारः । सुगण्णीश इति सुगणयति इति क्विप्, पश्चादनेन द्विः । स्वादिति किं—महानयं, प्राङास्ते । सनयङन्तो द्विरिति निर्द्देशात् त्य-णङो द्विर्न स्यात्, तेन सनन्तान्न सनिष्यते इति भट्टवार्त्तिकम् । सन्निच्छायामिति निर्द्देशाच्च सूत्र-

---

(१) अनयोः लकारमकारयोः शस्य छत्वमिति शेषः तथाच "लम्परस्य नेति कातन्त्रम्" इति संक्षिप्तसारसूत्रम्

६४। छोऽचः। (छः ११, अचः ५।)।

अचः परश्छकारो द्विः स्यात्।

---

छत्रं विकल्पयति। नञोऽनाविति निर्द्देशात् अनो न द्विः तेनानन्तः अनेक इत्यादि (१)।

६४। छो। अच् प्रत्याहारस्तस्मात्। दान्त इति नानुवर्त्तते। मण्डूकगत्या शद्दोश्चपादित्यादिना वानुवर्त्त्यं तस्य व्यवस्थावाचित्वात्—

परस्परानपेक्षायां दान्तात् सदीर्घ वा भवेत् (२)।
अमाङ्ऽस्मात्तथा विश्वजनादेश्चेति कीर्त्तितम्॥

यथा—तिष्ठतु कुमारी च्छत्रं न्हर देवदत्तेत्यादि (३) नित्यम्। माङ्वर्ज्जिताभ्यां घंपुभ्यां विकल्पः। गौरीच्छाया गौरीछाया, कृष्ण३च्छिन्धि कृष्ण३छिन्धि। माङस्तु माच्छादयति। दान्तादिति किं म्लेच्छयति, पूर्व्वेण नित्यम्। विश्वजनच्छत्रं विश्वजनछत्रं, दधिच्छाया दधिछाया इत्यादि छान्दसमित्यन्ये (४)।

---

(१) "अत्र अनडुन्नतरोऽणाणौ धिष्ण्योरिति, पञ्चनन्दिपचादे र्णिननात् घे इति, सनृयङन्तोद्विरित्यादिज्ञापकादसमासेऽस्य र्विषयो बोध्यः। तेन सनन्त यङन्त तिङन्ताः सिद्धाः। सविङ्गशास्त्रैः सचादि इत्यादौ तु ज्ञापकसिद्धस्यानित्यत्वात्"—का सि।

(२) परस्परापेक्षा यत्र नास्ति तत्रापि पदान्तदीर्घादुत्तरश्छो नित्यं द्विर्भवति इत्येके। अत्रानेकाचार्य्याणामसम्मतिरेव—इति गोयीचन्द्रः। यत्र अजन्तपदस्य छादिपदस्य च परस्परमन्वयो न स्यात् तत्रेत्यर्थः।

(३) नात्र परस्परापेक्षा, वाक्ययो र्भिन्नत्वात्—इति गोयीचन्द्रः।

(४) अस्य सूत्रस्य वृत्तौ अचीति पाठः बहुषु पुस्तकेषु दृश्यते। संक्षिप्तसारेऽपि "छोऽचः" इत्यस्य वृत्तौ "अच उत्तरश्छकारः स्वरे परे द्विर्भवती"त्युक्तम्।

अचो ह्राभ्यामरो यपः। अचः पराभ्यां हकाररेफाभ्यां रभिन्नयपो द्विः स्याद्वा। प्रह्नुते प्रह्नुते, लेह्मि लेह्मि, सूर्य्यः सूर्यः, शूर्प्पः शूर्पः इत्यादि। अचः किं-संह्नुते। यपः किं-वर्षा। अरग्रहणमुत्तरार्थम्।

स्वादनचि। स्वात् परोऽरो यपो द्विर्वा स्यात् अनचि। सँय्यन्ता सँयन्ता, क्लृप्प्यते क्लृप्यते। स्वात् किं-वाय्वोः। अरः किं-धर्म्मः। अनचीति किं-दधि। विरामेऽपि-नक् नक्, अज्भिन्नत्वात् (१)। घोदपीति केचित्-वाक्क् वाक् वाग् इत्यादि।

रात् शस्। रेफात् परः शस् वा द्विः स्यात् अनचि। मर्ष्ष्यते मर्ष्यते। अनचि किं मर्षणम्।

यल-गप-खप-शसिभ्यो णप यल-शस-खपाः। एभ्यः एते क्रमात् द्वयाः स्युर्वा। उल्क्का उल्का, शुल्क्कः शुल्कः, क्षौरं क्षौरं, स्कन्धः स्कन्ध इत्यादि।

पुत्रादि-पुत्रपुत्रादिनोस्तोऽनाक्रोशे। पुत्रादिन् इति शब्दस्य पुत्रपुत्रादिन् इति शब्दस्य च तकारस्य द्विर्वा स्यान्नत्वाक्रोशे। पुत्रान् पुत्रपुत्रान् वा अत्तुं शीलमस्याः सा पुत्त्रादिनी पुत्रादिनी पुत्त्रपुत्त्रादिनी पुत्रपुत्रादिनी, व्याघ्री मत्सी वा। केचित्

---

अत्र गोयीचन्द्रेण "स्वरे परे इति वृत्तौ प्रमादपाठः, यतो नैतत् पाणिनि सर्व-वर्म्मचन्द्रादिसम्मतम्। एवं सति ह्नोच्छ्यते इत्यादौ द्वित्वं न स्यात्" इत्युक्त्वा स्वरे परे इति निराकृतम्। ह्नोच्छ्यते इति ह्नीङ लज्जे इत्यस्माद्भावे ते।

कातन्त्रेऽपि 'द्विर्भावं स्वरपरश्छकारः" इति सूत्रे टीकाकारेण "स्वरात् पर इति तत्पुरुषः न पुनः स्वरः परो यस्मादिति बहुव्रीहिः, तेन उञ्छतीति न द्विर्भावः, विच्छ्यते इति द्विर्भाव एवे"त्युक्तम्।

(१) अजभिन्नत्वात विरामस्येति शेषः।

६५। झप्‌झसोः खस्‌झवो श्चप्‌जबावन्ते च।

(झप्‌झसोः ६॥, खस्‌झवोः ७॥, चप्‌जबौ १॥, अन्ते ७।, च ।१।)।

झप-झसयोः स्थाने खस-झबयोः परयोः क्रमात् चप-जबौ स्तः, विरामे च। शिवच्छाया, अच्छा।

---

पुत्रहती पुत्रजग्धी इत्यपि आहुः। अनाक्रोशे किं-पुत्रादिनी पुत्रपुत्रादिनी वृषलि भूयाः।

मू-नी-वयः। एते द्वयाः स्युर्व्वा। उर + + केण उर*mm*पेण उरः: केण पक्षे उर + केणेत्यादि। परस्परानपेक्षायामित्यादि शाकटायनमते, ग्रन्थकृता तु उपेक्षितं श्रुतिं प्रति भेदाभावात्।

लोपो वा य-समझसे हसादय-झसस्य। हसात् परस्य यस्य ये झसस्य समझसे लोपः स्यात् वा। आस्ये भवं आस्यं आस्यं, हर्य्यते (१) हर्य्यते जर्गायति जर्ग्गायति पिण्ढि पिण्ड्ढीत्यादि। हसात् किं, शय्यते भेत्तां। झसस्येति किं, शार्ङ्गम्। समेति किं तर्प्ता।

अभ्र-वभ्र-मभ्रां रो ये। एषां रस्य लोपो वा स्यात् ये। अभ्यते वभ्यते मभ्यते, पक्षे अभ्रयते इत्यादि।

६५। झप्। झपादयः प्रत्याहाराः। क्रमादिति—

झपः खसे चपादेशो जबादेशो झसो झवे।
विरामे तौ तयोः स्यातामित्यस्यार्थः प्रकीर्त्तितः॥

शिवच्छाया इति शिवस्य छाया इति वाक्यं, छस्य छोऽच

---

(१) हर्य्य क्लमे गतौ इत्यस्य भावे रूपम्।

## वि-सन्धिः ।

६६ । वेः सोऽशसन्ते कृते ।

(वेः ६।, सः १।, अ शसन्ते ७।, कृते ७।) ।

वेः सकारः स्यात् अ-शसन्ते कृते परे। कृष्णश्चिन्त्यः, हरिष्टीकते, विष्णुस्त्राता। शसन्ते तु—कः त्सरुः ।

६७। से तु क-ख-प-फे वा ।

( से ७।, तु ।१।, क-ख प-फे ७', वा ।१।) ।

---

इति द्विलेऽनेन पूर्व्वस्य चः। न च्छ्यतीति अच्छा (१) निर्म्मला।
चपः खय् वा शसि। चपस्य खय् स्याद्वा शसि। दृखश्यामा दृक्-श्यामा अफ्सराः अप्सराः पठ्सन्तः षट्सन्तः तथ् षष्ठः तत्षष्ठः।
शसि किं वाग्हरिः।

इति हस्-सन्धिपादः।

---

६६। वेः। शस् अन्ते यस्य सः, न शसन्तः अशसन्तस्तस्मिन्। कृत् प्रत्याहारः तस्य विशेषणं तेन शसन्तभिन्ने कृते इत्यर्थः। कृष्णश्चिन्त्यः इति, अनेन से कृते चवर्गयोगात् शः। एवं हरिष्टीकते इत्यत्र टवर्गयोगात् षः।

६७। सेतु। सः समासस्तस्मिन्। भास्कर इत्यादि, भासं करोति, भासा खरस्तीक्ष्णः, भासां पतिः, भासा फेरुरिति वाक्यम्। परे तु भाःकर इति नेच्छन्ति। अत्राहुः—

---

(१) नञ्पूर्व्वात् छो य लूनौ इत्यस्मात् धातो र्डप्रत्यये स्त्रियां रूपम्।

वेः सकारो वा स्यात् क-ख-प-फेषु परेषु, से सति। भास्करः भाःकरः, भास्खरः भाःखरः, भास्पतिः भाःपतिः, भास्फेरुः भाःफेरुः।

---

सदा ऽयस्तमसोः काण्डे वास्तोर्व्वाचो दिवःपतौ।
भ्रातुः पुत्रे शुनः कर्णे पिण्डे तु मेदसो मतः।
नमः पुरः क्रियायोगे तिरोऽन्तर्द्धौ पराभवे।
निर्दुराविर्व्वहिः-प्रादुश्चतुरान्तु कखे पफे।
अव्यासो ऽपरदस्यस्य पाश-कर्णी-कुशा-कञि।
कामि-कंस-कुम्भ-पात्रे, पदे तु स्याच्छिरोऽधसोः।
इसुसः क-ख-प-फेऽथा सेऽपि वा स्यात् क्रियाश्रये।
द्विश्चतुस्त्रिश्चकृत्वोर्थेऽथाव्यस्य सश्च वेरपि।
क-काम्य-कल्प-पाशेषु, रस्वकाम्येषु वेः सदा।
इकः सः षः कं ख प फे वाशब्दस्य व्यवस्थया।

अथ आदे वेः सः स्यात् काण्डादौ से सति। अयस्काण्डः तमस्काण्डः वास्तोष्पतिः, वर्हिष्ठादित्वात् षः, वाचस्पतिः दिवस्पतिः भ्रातुष्पुत्रः, इकः सः षः क ख प फ इति षः, शुनस्कर्णः, पञ्चम्यः ष्या अलुक्। मेदस्पिण्डः। क्रियया सह से नमःपुरसो वेः सः। नमस्कृत्य नमस्कारः, नमःशब्दस्य साचादादित्वात् वा सविधानात् नमः कृत्वेति च।

अन्तर्धानपराभवयोस्तिरसो वेः सः। तिरस्करोति तिरस्कारः तिरस्कृत्य, वा स-विधानात् तिरःकृत्वेति च।

निरादीनां क ख प फे परे वेः सः। निष्कर्षः दुष्करः आवि-

ष्कार: बहिष्कृतं प्रादुष्कृत्य चतुष्कपालमित्यादि। सर्व्वत्र इक: स: ष: क ख प फ इति स:।

पाशादौ से अनुत्तरदस्यस्य अवर्ज्जस्याऽसन्तस्य वे: स:। अयो लौह: पाशो रज्जु: अयस्पाश:, अय इव कर्णावस्या-अयस्कर्णी, स्त्रीलिङ्गनिर्द्देशात् अय:कर्ण: अयस्कुशा, आवन्त-निर्द्देशात् अय:-कुशीति। अय:-करोतीति अयस्कारो जाति-विशेष:। तेज: कामयते तेजस्काम: अयस्काम:। आन्तस्यैव कमो ग्रहणात् अआन्ते माभूत्, तेज: काम:। अयस्कंस: (१) चतु:षष्टिपलात्मकपरिमाणार्थग्रहणात्, अन्यत्र अय:कंस:। अय-स्कुम्भ:, प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणं इत्युक्ते: अयस्कुम्भीति। एवं अयस्पात्रं अयस्पात्रीति। अव्येति किं स्व: काम:। अपरदस्येति किं, धर्म्मांशासु कामार्थयश:करीषु इति भट्टि:।

पदशब्दे परे शिरोऽधसो र्वे: स: से। शिरस्पदं अधस्पदं। से किं शिर:पदे करोति, अध:पदे करोति। अपरदस्यस्यानुवृत्ते: परम-शिर:-पदं परमाध:-पदम्।

इसन्तोसन्तयो: से सति क ख प फे परे वे: स:। सर्पिष्कुण्डं यजुष्पाठ:। से किं तिष्ठतु सर्पि: पिबोदकम्। अपरदस्यस्यानु-वृत्ते: परमसर्पि:-कुण्डम्।

अथ क्रियया परस्परापेक्षायां इसन्तोसन्तयोरसेऽपि क ख पफेषु वे: सो वा। सर्पिष्कुरु यजुष्पठ, पक्षे सर्पि: कुरु यजु:-

(१) अयस: कंस इति षष्ठीसमास:।

९८ । शसि शस् । ( शसि ७, शस् ।१। ) ।

वेः शस् वा स्यात् शसि परे । हरिश्शेते हरिःशेते, सन्तष्षट् सन्तःषट्, शिवस्सेव्यः शिवःसेव्यः ।

---

पठ, अथशब्दात् परस्यस्येति निवृत्तं, तेन परमसर्पिष्कुण्ड परमयजुष्पठ इत्यपि । क्रियान्वये किं, परमसर्पिः कुण्डम् ।

द्वित्रिचतुरित्येषां कखपफेषु वेः सो वा स्यात् वारेऽर्थे । द्विष्करोति त्रिष्खादति चतुष्पठति । पक्षे द्विः करोति इत्यादि । चक्रत्वोऽर्थे किं, चतुष्कपालमिति पूर्व्वेण नित्यम् ।

अथानन्तरं व्यवर्जस्य सस्य वेः कादौ नित्यं सः स्यात् । कस्येदमयः अयस्कं, आत्मनः पयइच्छति पयस्काम्यति, पयस्कल्पं, धनुष्पाश इत्यादि । अव्यस्येति किं, अधःकं, स्वःपाशः ।

रेफस्य वेः काम्यभिन्ने कादौ सः स्यात् । गीष्कं, गीष्कल्पः, धूष्पाश इत्यादि । काम्येतु गीःकाम्यति । अव्येति किं स्वःकल्पं । अयस्काण्डादेराकृतिगणत्वात्—

आभीचण्ये कः कः इत्यर्थे कस्कः, एवं कुतः कुत आगतः कौतस्कुतः । क्विवन्तः सद्यःक्रीस्तत्र भवः क्रतुः साद्यस्क्रः, सद्यस्कारः, मुहुस्कार इत्यन्यः । अयस्काण्डो लौहभेद इत्यादि ।

इकः परस्य वेः सस्य षः स्यात् । प्रयोगा यथास्थाने दर्शिताः । (१)

९८ । शसि । शस् प्रत्याहारः । हरिश्शेते इति से कृते सिद्धे

---

(१) क्वचित् पुस्तके अत्र "चतुष्कपालमित्यादौ वेः से द्वान्तत्वात् षत्वाभावे इकः सः ष इत्युक्त"मित्यधिकः पाठः ।

६९। कख-पफयो र्मून्यौ।

( कख-पफयोः ७॥, मून्यौ १॥ )।

वेर्मून्यौ क्रमात् वा स्यातां कख-पफयोः परयोः।

हरि+काम्यः हरिः काम्यः, मणि+खनिः मणिः खनिः, कृष्ण॥पाता कृष्णः पाता, भक्ति॥फलति भक्तिः फलति।

७०। अतोऽहव्युः। (अतः ५।, अत्-हवि ७।, उः १।)।

अकारात् परस्य वेरुकारः स्यात् अकारे हवि च परे।

शिवोऽर्च्यः, शिवोवन्द्यः।

---

सन्तष्षट् इत्यादौ अषीतिवर्ज्जनात् षत्वार्थं शम्विधानमिति, तेन श-ष से श-ष-साः स्युरित्यर्थः। खपान्ते शसि लुब्वा। खपान्ते शसि परे वे र्लुप् वा स्यात्। कश्चोतति कष्ठीवति कस्तौति। पक्षे कः श्चोतति इत्यादि।

६९। कख। कश्च खश्च तत्, पश्च फश्च तत्, पश्चात् कखश्च पफश्च ते तयोः। मण्डूकगत्या अशसन्त इत्यनुवर्त्तते, तेन वासः क्षौमं, कः प्साति इत्यादौ मून्यौ न स्यातां। वाशब्दस्य व्यवस्था-वाचित्वात् ख्याधौ न स्यात्, तेन शिवःख्यात इत्यादि।

७०। अतः। हव् प्रत्याहारः परवकारेण। अपोऽक् समो र्णौ ऋक्चेति ज्ञापकात् सूत्रनिर्द्देशाच्च (१) शिवोऽर्च्य इति वेरुत्वे अता सहादौ णुः, पश्चादकारलोपः; अन्यथा उकारस्य वः स्यात् (२)।

(१) सूत्रनिर्द्देशात् अतोऽहव्युरिति सूत्रे अतोऽत् इति निर्द्देशात्।

(२) अत्र अशसन्त इत्यस्यानुवृत्ति र्नास्ति, अनिष्टत्वात्, तेन रामोऽश्नातीति स्यादेवेति दुर्गादासः।

७१। अ-भो-भगोऽघोभ्योऽवे लुप्।

( अ भो भगोऽघोभ्यः ५।।।, अवे ७।, लुप् ।१।) ।

अवर्णात् भो भगो अघोभ्यश्च परस्य वेर्लुप् स्यात् अवे परे। रुद्रा नमस्याः, भो हरे, भगो रक्ष, अघो यज।

७२। य वाचि। (य ।१।, वा ।१।, अचि ७।)।

अवर्णात् भो भगो अघोभ्यश्च परस्य वे र्यो वा स्यादचि परे। शिवयुग्रः शिवउग्रः भोयच्युत भो अच्युत।

---

७१। अभो। भो भगो अघो इति सम्बोधनस्यैकदेशानुकरणम् (१)। परसूत्रसापेक्षत्वात् इहाचि नोदाहृतम्। अव-प्रत्याहारः परबकारेण इत्याह रुद्रा नमस्या इति। नमस्या इति नमःशब्दात् नमस्तपोवरिव इत्यादिना क्यः, नमस्यः, तस्य धुसंज्ञा, ततस्तव्यानीयया इति ढे यः, पश्चाद्‌सालोप इत्यकार-लोपे, लोपो वा य-समभसे हसात् य-समभसस्येति वा यलोपः, ततो लिङ्गसंज्ञायां स्याद्युत्पत्तिः।

७२। यवा। शिव उग्रइति वेर्लुपि न सन्धिः। यइत्यस्य ईषत्स्पृष्टता सिद्धैव, ईषत्स्पृष्टतरो योऽनेन विधीयते। वाशब्दस्य व्यवस्थावाचित्वात् अवर्णादचि य्वौ दान्तौ वा लघुप्रयत्नतरावपि स्यातां, तेन तयाय्याः तयाय्याः, लुप्पक्षे त आय्याः। पटवेहि पटवेहि पटएहि। लघुप्रयत्नता हि उच्चारणस्थानशैथिल्यम् (२)।

---

(१) भोः भगोः अघोरित्येषां विसर्गं विहायेत्यर्थः।

(२) शैथिल्यं मन्दप्रयत्नता।

७३। रिचो ऽबे। (र।१।, इचः ५।, अबे ७।)।

इचः परस्य वे रेफः स्यादबे परे। हरिरयं, चतुर्भुजः।

७४। रोऽचः। (रः ६।, अचः ५।)।

अचः परस्य रेफस्य वे रेफः स्यादबे परे। भ्रातरव, धातर्गच्छ।

७५। खपि वा। (खपि ७।, वा।१।)।

अचः परस्य रेफस्य वे रेफः स्याद्वा खपि परे। गीर्पतिः गीष्पतिः गीःपतिः।

---

एवं उञि आत् न यः (१) तेन देवदत्ता उ एकविंशतिः, देवदत्त उ एकः, अत्र नित्यं वेर्लुप्।

७३। रिचः। र इति लुप्तप्रोक्तं दं। स्वरूपभङ्गनिरासाय अनुकरणत्वाद् वा न विः, इच् प्रत्याहारस्तस्मात्। अत्रापि अब-प्रत्याहारः परत्रकारेण इत्याह चतुर्भुज इति, चत्वारो भुजा यस्य इति वाक्यम्। (२)

७४। रो। र इति प्रोक्तान्तं दं। आद्र इति कृते सिद्धे अज् ग्रहणं परार्थम्। (३)

७५। खपि। खप् प्रत्याहारः। मण्डूकगत्या से तु कखपफे वेत्यतः स इत्यनुवर्त्तते, तेन इयं गीः पतिरसावित्यादौ न स्यात्।

---

(१) उञि परे अवर्णात् परस्य वेर्यो न स्यात्।

(२) चतुर्भुज इति सामान्यविशेषन्यायेन परसूत्रस्योदाहरणं भवितुमुचितमिति नाशङ्कनीयं, कार्य्यिगतविशेषापेक्षया तत्पूर्व्वनिमित्तगतविशेषस्यान्तरङ्गतया बलवत्त्वादिति केचित्।

(३) परसूत्रे अचोऽनुवृत्तिं विना अहर्पतिरित्याद्यसिद्धेरित्यर्थः।

गीर्पतिरिति गिरां पतिरिति वाक्यम्। गीष्पतिरिति अय-स्काण्डादेराकृतिगणत्वात् से तु कखपफे वेति वेः से, इकः सः षः इति षः। उभयत्वाप्राप्तिपक्षे (१) गीःपतिः गीर्व्वाण इत्यादि। एवं अहर्पति अहस्पतिः अह ᳲपतिः अहःपतिः, धूर्पतिः धूष्पतिः धू ᳲपतिः धूःपति। यद्यपि सामान्येनोक्तं तथाप्यभिधानात् ज्ञेयम् (२)।

एकाधिकरणे प्रचेतसो राज्ञसे। प्रचेतसो वेः रेफः स्यात् वा एकाधिकरणे राजन्निति शब्दे परे न तु से। हे प्रचेता राजन् हे प्रचेतो राजन्। एकाधिकरणे किं जुहुधि प्रचेतो राजन् गच्छ। से तु प्रचेतोराजन् भोः (३)। नान्तग्रहणात् शत्रन्ते (४) प्रचेतो राजन् गच्छ।

---

(१) खपि वेति से तु कखेत्युभयोरप्राप्तिपक्षे इत्यर्थः।

(२) एतेन गिर् धुर् अहन् एषामेव विसर्गस्य पतिशब्दे परे एव स्यादिति ज्ञापितम्। अतएव आशीःपतिः गीःपाठ इत्यादौ न स्यादिति दुर्गादासः। गीष्पतिरित्यत्र "इदं निपात्यमित्यन्ये" इत्यधिकः पाठः। संक्षिप्तसारे तु सन्धिपादे १६५ संख्यक सूत्रे गीष्पतिरित्यसाधुरित्युक्तम्।

अमरटीकायां गीष्पतिशब्दे तु "गिरां पतिः षत्वे च कस्कादित्वात साधु"रिति रघुनाथः। भरतस्तु "गिरां पतिः गीष्पतिः सेतु कखपफेवेति स., मनीषादित्वात् षत्वं; साभावपक्षे कखपफयोर्मूर्न्याविति उपाध्मानीये गी ᳲपतिरिति; तदभाव-पक्षे खपि वेति रेफे गीर्पतिः; तदभावपक्षे विसर्गस्य स्थितिरेव, गीःपतिरिति। एवं चातूरूप्यं चन्द्र-क्षीरस्वामि-वोपदेव-सुभूत्यादीनां सम्मतमेव। अतएव गीष्पति-रित्यसाधुरिति कस्यचिद्वचनं न हृद्य"मित्याह।

(३) प्रचेता राजा यस्येति विग्रहः।

(४) शतृप्रत्ययान्ते राजधातौ परे न इत्यर्थः।

७६ । **नाह्नो रक्लौ** । (न ।१।, अह्नः ६।, रक्लौ ७।)

अह्नो रेफस्य वे रेफो न स्यात् रेफे के लौ च परे ।

अहोरात्रः अहस्करः, अहोभिः ।

७७ । **हस्येतत्तदोऽनञकः से लोपः** ।

( हसि ७।, एतत्तदः ५।, अनञकः ५।, सेः ६।, लोपः १। )।

नञक्वर्जादेतदस्तदश्च परस्य से र्वें लोपः स्यात् हसि परे ।

एष कृष्णः, स विष्णुः । अनञकः किम्–असः शिवः, एषकोरुद्रः ।

---

७६ । नाह्नः । रश्च कश्च लश्च तत्तस्मिन्, सौत्रत्वान्नलुक् । अत्र सामान्यशब्दस्य विशेषपरत्वात् रात्रिरूपरथन्तराणां (१) रेफेष्वेव, तेनाह्नारजनीत्यादौ निषेधो न स्यात् । अहोरात्र इति एकदेशविकृतमनन्यवद्भवतीति न्यायादिति परे । चन्द्रस्तु रेफमात्रे निषेधात् अहोरजनी अहोरमणीयमित्याह, अत उक्तं रेफ-इति (२) । हे सिलोपे च । अह्नः सिलोपे वेः रेफो न हे । दीर्घाहो ग्रीष्मः कृस्वाहो हेमन्त इत्यादि । हे किं अत्यह-र्हेमन्तः । लोपग्रहणात् लुकि माभूत्—दीर्घाहर्वनम् ।

७७ । एष च स च तत्तस्मात्, नञ् च अक् च तौ, तौ न विद्येते यस्य तत्तस्मात् । सेः किं एतैस्ते गम्यते ।

---

(१) रथन्तरं साम ।

(२) सत्यह्नोरात्र इति ज्ञापकादाचार्येण चन्द्रमतमेवावलम्बितमिति युक्तमुत्पश्याम इति ।

७८। ढ्रोढ्रि र्घश्चानुः।

( ढ्रः ६।, ढ्रि ७।, र्घः १।, च।१।, (अन्-ऋट्) = अनुः ६। )।

ढकारस्य ढकारे परे, रेफस्य रेफे परे, लोपः स्यात्, पूर्व्वस्य च ऋवर्जस्य र्घः। रूढ़ः, ह्वरीरम्यः। अनुः किं—वृढ़ः।

इति वि-सन्धिपादः।

इति सन्ध्यध्यायः।

---

एषे च पादपूरणे। आभ्यां सेर्लोपः स्यात् पादपूरणे कर्त्तव्ये, एष इति प्रोक्तान्ते परे। यथा—

सैष दाशरथी रामः सैष राजा युधिष्ठिरः।

एषैष (१) रथमारुह्य मथुरां याति माधवः॥

पादपूरण इति किं, स एष चिणोति, स एष पृथिवीपालः पालयामास मेदिनीमिति। एषेति किं, स एव श्रीहरिः पाया-द्देवक्यानन्दवर्द्धनः।

७८। ढ्रो। ढच रच तत्तस्य, न ऋट् अनृ तस्य। रूढ़ इति रुहौ जन्यां क्त, होढ़, ढभात्तस्य धः, ष्टुभिरिति धस्य ढः, अनेन लोपर्घौ। वृढ़ इति वृहधू हिंसे, क्त, ऊदित्त्वादिमो-ऽभावे साधनं पूर्व्ववत्। वि-सन्धिपादः (२)। सन्ध्यध्याय इति—एकार्थावच्छिन्नः पादसमूहोऽध्यायः॥

---

(१) एषैष इति माधवविशेषणम्, सम्भ्रमे द्वित्वम्।

(२) अत्र कश्चित् पुस्तके श्लोकोऽयं दृश्यते—

२य: । अजन्ताध्याय: ।

## संज्ञा ।

**७९ । लेः—सि औ जस्, अम् औ शस्, टा भ्याम् भिस्, ङे भ्याम् भ्यस्, ङसि भ्याम् भ्यस्, ङस् ओस् आम्, ङि ओस् सुप् ।** (लेः ५।, सि—सुप् ।१।।। ) ।

स्यादीन्येकविंशतिर्लेः पराणि प्रयुज्यन्ते । ज श ट ङ पाः सि ङस्योरिकारश्चेतः ।

**८० । त्रिशः प्री द्वी त्री ची पी षी स्रा: ।**

( त्रिशः ।१।।।, प्री—स्रः १।।। ) ।

स्यादीनि त्रीणि त्रीणि क्रमात् प्री द्वी त्री ची पी षी स्री-संज्ञानि स्युः ।

---

७९ । लेः । स्यादीनामेकविंशतिः प्रत्येकं दं, सौत्रत्वात् सेर्लुक् । ज श ट ङ पानां सि ङस्योरिकारस्य चेत्त्वं चिह्नार्थम् । अनिर्दिष्टार्थत्वात् स्वार्थे भवन्ति स्यादय इति । त्वर्थसम्बुद्धप्रार्थे प्रीत्यादिना अर्थनियमः कार्य्यः, अनेन तु स्यादीन्येव विधीयन्ते, अतो नायं व्यर्थः ।

८० । त्रिशः । त्रीणि त्रीणि त्रिशः वीप्सार्थे चशस् । प्रश-

---

श्रीमद्बोपदेववचसा सर्व्वार्थसम्पादिना
सम्व्यध्याय एव विदितस्तस्यामला टिप्पनी ।
संसार्य्यात्मजातहृद्ध्यान्धान्तसन्तापिनी
श्रीरामेण पाणिनिमते ज्ञानाय सन्तन्यते ॥

८१। सम्बुद्धौ सि घिः।

( सम्बुद्धौ ७।, सिः १।, घिः १। )।

सम्बोधने विहितः सि घिसंज्ञः स्यात्।

८२। स्यमौजस् घिः।

( सि अम् औ जस्।१।।।, घिः १। )

सि अम् औ जस् एते घिसंज्ञाः स्युः।

---

दीनां च-सः प्रीचेत्यादि। परे तु प्रथमा, द्वितीया, तृतीया, चतुर्थी, पञ्चमी, षष्ठी, सप्तमीत्याहुः। ग्रन्थकृन्मते प्राप्तादेर्नदादिपाठादीप्। अतएवाग्रे सदाऽनूक्तेऽसादिप्राः, क्रियान्तःकालाध्वनोश्च पीच इति स्त्रीलिङ्गनिर्द्देशः कृतः।

८१। सम्बुद्धौ। सम्बुद्धिः सम्बोधनं, चेतनाचेतनयोः स्थितयोराभिमुख्येऽभिधानं, तत्र विहितस्य सेरेव घिसंज्ञेत्यर्थः। एके तु वैकल्यादिना अचेतनस्यापीत्याहुः। सम्बुद्धिरिति परे।

८२। स्यमौ। सिश्च अम्च औश्च जश्च तत्। प्रामौघिरितिकृते सिद्धे स्यमौजस् इति कृतं, मुख्यलाक्षणिकयोर्मध्ये मुख्ये कार्य्यसंप्रत्यय इति परिभाषाज्ञापनार्थम्, तेन सख्यावित्यत्र घौत्रिरिति न त्रिः स्यात् (१)। अम्जसोर्मध्ये पाठात् औकारद्वयस्य ग्रहणम्, अन्यथा व्युत्क्रमनिर्द्देशो व्यर्थः स्यात्। सर्व्वनामस्थानमिति परे।

---

(१) स्यादिपठितस्यैव औकारस्य घिसंज्ञा, तस्य मुख्यत्वात्; न तु यस्य कस्यचित् स्थाने जातस्य, तस्य लाक्षणिकत्वात् इत्याशयः।

८३। **शिः क्लीबे।** (शिः १।, क्लीबे ७।)।

नपुंसके शिरेव घि-संज्ञः स्यात्।

८४। **दान्तवत् सभि।** (दान्तवत् ।१।, सभि ७।)।

सभयोः परयो र्दान्तवत् कार्य्यं स्यात्।

८५। **भौ लिध्वो र्हसभसोरन्ते च।**

(भौ ७।, लिध्वोः ६॥, हसभसोः ७॥, अन्ते ७।, च ।१।)।

भौ परे यत् कार्य्यं वक्ष्यते तल्लेर्हसे धोर्भसे स्यात्, अन्ते चतयोः।

---

८३। शिः क्ली। शिरेवेति एवकारेण शिभिन्ना व्यवच्छिद्यन्ते, तेन वारिणी इत्यादौ नमत्रमन्तत्र इति न घः।

८४। दान्तवत्। अधिकारात् स्यादेरेव सभयोर्दान्तत्वातिदेशः, तेन पुम्भ्यां पुंभ्यामित्यादौ वा यम्, न तु गंस्यते संस्यते इत्यादौ मनो नुंनिषेधः।

८५। भौलिध्वोः। लेर्हमन्तं धोर्भमन्तं भिरित्यर्थः। लिधुभ्यां भमन्तं भिरिति कृते सिद्धे एतत्करणं, लेर्दान्ते धोर्दान्तादान्तयोर्भिकार्य्यज्ञापनार्थं, तेन कम्राता शक्स्याता इत्यादौ न स्यादेरिति तकयोर्लोपः। अभ्राक्षीत्, आक्षीत्, अवोढ़ अवट्, अवक्, अधीक् इत्यादौ मकलोप-ढ-षङ्-कङ्-घाः स्युः। (१)

---

(१) कम्राता इत्यत्र म त र इति त्रिभि र्हसैः संयोगः, तेषु रेफो भिः, तस्मिन् परे स्त् इति संयोगस्य दान्तत्वाभावात् स्यादेः सोलोप इति न सलोपः। एवं शक्स्याता इत्यत्रापि न कलोपः। अभ्राक्षीत्, आक्षीत्, अवोढ़ एषु अदान्तत्वेऽपि

८६। हसोऽन्तः फः। (हसः ११, अन्तः ११, फः ११)।

हसो विरामश्च फसंज्ञः स्यात्।

८७। सर्व्व विश्व उभ उभय भवत् त्वत् त्वैक सम सिम नेमाः, अन्यान्यतरेतर डतर डतमाः, त्यद् तद् यद् एतदिदमदः किम् इस्माद् युष्मदः, पूर्व्वपरावर दक्षिणोत्तरापराधरान्तरस्वाः स्निः।

(सर्व्व—नेमाः १।।।, अन्य—डतमाः १।।।, त्यद्—युष्मदः १।।।, पूर्व्व—स्वाः १।।।, स्निः ११)।

---

८६। हसो। अन्तः परे वर्णाभावः। स च त्रिविधः—प्रागभावः प्रध्वंसाऽत्यन्ताभावश्च। इह तु प्रध्वंसात्यन्ताभावयोर्ग्रहणम्। तेन अरुणः पयः रामः इत्यादौ स्नोर्विः। हस इति दभेदः स्यादिहस-ज्ञापनार्थः, तेन अम्लीत्यादौ न विः, वष्टि इत्यादौ न डः (१)। नोऽन्तः फः इति कृते दान्तातिदेशात् (२) पयोभ्यां राजभ्यां पुंभ्यां पञ्चानां इति सिद्धे हस्ग्रहणं, मुख्यलाक्षणिकयोर्मध्ये मुख्ये कार्य्यसंप्रत्यय इत्यस्यानित्यत्व-ज्ञापनार्थं, तेन राजतः।

---

यथाक्रमं सकलोपः हस्य ढश्च। अवट्, अवक्, अधोक् एषु दान्तत्वेऽपि भौ परे षड् कड घाः भवन्तीति।

(१) "हस इह स्यादेरेव, धोर्मो नः फश्चीत्यत्र फग्रहणेनैवेष्टसिद्धौ मवयोः पृथग्ग्रहणा"दिति दुर्गादासः।

(२) सभयोः परयोरिति शेषः।

दभेदो गणभेदार्थः। एते पञ्चविंशत् शब्दाः स्विसंज्ञाः स्युः।

समो ऽतुल्ये, व्यवस्थायां पूर्व्वाद्यो ऽवान्तरो ऽपुरि।
वहिर्योगोपसंव्याने, स्वस्वज्ञातिधनाभिधः॥

---

८७। सर्व्व। सर्व्वश्च विश्वश्चेति च-सः (१)। त्वत्-त्वौ अन्यार्थ-वाचकौ। परे तु त्वच्छब्दं नाहुः (२)। डतर-डतमौ त्यौ, येन विधिस्तदन्तस्येति न्यायात् तदन्तानां ग्रहणम्। पृथगन्यतरस्य ग्रहणात् अन्यतमस्य न स्विसंज्ञा, तेन अन्यतमाः अन्यतमायेत्यादि। भाष्ये तु अन्यतमस्यापि स्विसंज्ञाविधानात् अन्यतमे अन्यतमस्मिन्निति। उभ भवत्वतां स्विसंज्ञाफलं(३)--उभयोः स्त्रियोर्धनं उभधनं, भवत्या धनं भवद्धनं, त्वतेत्यादि।

समोऽतुल्ये इत्यादि। समं सर्व्वसमानयोरित्यमरः। सम-

---

(१) सिद्धान्तकौमुद्यां "आमि सर्व्वनाम्न सुट्" (७।१।५२) इति सूत्रस्य वृत्तौ उभयशब्दस्य द्विवचनं नास्तीति कैयटः, अस्तीति हरदत्त इत्युक्तम्। गोयीचन्द्रोऽपि सुबन्तपादे १९३ संख्यक-सूत्रटीकायाम् "एकवचनबहुवचनविषयस्तु उभयशब्द" इत्याह। क्रमदीश्वरेण सुबन्तपादे "पूर्व्वाद्युभयौ जसि वा" (१९७) इति सूत्रयित्वा उभयशब्दस्य जसि वा स्विसंज्ञेत्युक्तम्। "उभया अमित्रा इति तु छान्दसत्वाद्बोध्य"मिति तत्त्वबोधिनी। सिम सर्व्वार्थः, नेम इत्यर्द्धे।

(२) तत्त्वबोधिन्यान्तु "जयदेवोऽपि प्रायुङ्क्त—त्वदधरमधुरमधूनि पिबन्तमिति, त्वत्तोऽन्यस्या अधर इति विग्रहो न तु तवाधर इति * * * पूर्व्ववाक्येन सहानन्वयापत्ते"रित्युक्तम।

(३) स्वेस्तु सर्व्वा इत्यनेन उभशब्दात् सर्व्वा विभक्तय स्युरित्यपि फलम्। तथाच "उभौ हेतू उभाभ्यां हेतुभ्याम् उभयोर्हेत्वोरिति अन्यथा षष्ठी हेतुप्रयोगे इति षष्ठ्येव स्या"दिति कातन्त्रे चतुष्टयवृत्ति २६ संख्यकसूत्रे पञ्जीकारः।

शब्दस्य सकलार्थे वर्त्तमानस्य स्विसंज्ञा न तु समानार्थे। अग्रे प्रयोगं वक्ष्यति नमः समस्मादिति ।

व्यवस्थायां पूर्व्वाद्य इति । "दिग्देशकालवाचिता व्यवस्था, तस्यां पूर्व्वादयो नव स्विसंज्ञकाः, यदुक्तं—

पूर्व्वादयो व्यवस्थायां स्युः सर्व्वनामसंज्ञकाः ।
व्यवस्था कथिता लोके दिग्देशकालवाचिता ॥ इति ।

अन्यत्र दक्षिणाः प्रगाथकाः प्रवीणा इत्यर्थः । उत्तराः कुरवः, पराः लोकाः श्रेष्ठा इत्यर्थः, अवराः कनिष्ठा इत्यादौ न गौण्याख्या चेति न निषेधः (१)। एके तु स्वाभिधेयापेक्ष्यावधिनियमो व्यवस्था ; अवधिर्मर्य्यादा सीमेति यावत् ; तथाच स्वाभिधेयानां दिग्देशकालानां अपेक्ष्यः कारणत्वेनापेक्षणीयो'योऽवधिनियमः स एव इत्याहुः ।

अन्तरान्तर इति । अत्र पूर्व्वादौ, न पूरपूस्तस्यां, वहिर्योगो वहिःसम्बन्धः वाह्य इति यावत्, उपसंवीयते अपिधीयते यत् तत् उपसंव्यानम्, ढऽनट्, वहिर्योगिभिन्नं वस्तु केनचिदाच्छादित-मेवोच्यते (२)। तथाच वहिर्योगोपसंव्यानयोर्वर्त्तमानोऽन्तरशब्दः पूर्भिन्नविषयः स्विसंज्ञ इत्यर्थः । अन्यत्र ब्रह्मशिवयोरन्तरे विष्णुः मध्ये इत्यर्थः ।

---

(१) किन्तु व्यवस्थावाचित्वाभावान्निषेध इत्यर्थः ।

(२) केनचित्—वस्त्रान्तरेणेत्यर्थः । वस्त्रान्तरेणाच्छादितमधोवास उपसंव्यान-मिति यावत् । उक्तञ्च संक्षिप्तसारे सुबन्तपादे २८६ संख्यकसूत्रे "अन्तरे शाटका शुभ्रपरिधानीया इत्यर्थः" इति ।

## ८८। न गौण्याख्याचत्रीसासे।

( न ।१।, गौण्याख्याचत्रीसासे ७।, )।

गौणत्वे, संज्ञायां, चे, त्राः'से असे च, ते स्त्रिसंज्ञा न स्युः।

## ८९। चे जसि वा। ( चे ७।, जसि ७।, वा ।१। )।

चे ते स्त्रिसंज्ञा वा स्यु र्जसि परे।

स्वस्त्वित्यादि—ज्ञातिश्च धनञ्च ते, ते अभिधे यस्य सः, न सः अज्ञातिधनाभिधः, तथाच ज्ञातिधनवाचिस्वशब्दस्य न स्त्रिसंज्ञा इत्यर्थः। यथा—स्वाय धनं ददाति, स्वाय यतते दरिद्रः। स्वस्मै ज्ञातये, स्वस्माद्धनादित्यत्र ज्ञातिधनयोः सामानाधिकरण्ये वर्त्तमानः स्वशब्दस्ते (१) नाभिधत्ते इति (२)।

८८। नगौ। सश्च असश्च तत् सासं, त्राः सासं त्रीसासं, गुणस्य भावो गौण्यं, गौण्यञ्च आख्या च 'चश्च त्रीसासञ्च तत् तस्मिन्। गौण्यमप्राधान्यं, त्रासः तृतीयासमासयोग्यवाक्यं, ते पञ्चत्रिंशच्छब्दाः। प्रयोगा अग्रे वक्ष्यन्ते--अतिसर्व्वायेत्यादयः।

८९। 'चे। पूर्व्वेण नित्यनिषेधे प्राप्ते विकल्पार्थमिदम्।

(१) ते ज्ञातिधने इत्यर्थः।

(२) "तथा परेषां युधि चेति पार्थिव" इति प्रयोगदर्शनात् "तथा समुद्रादपरे परे नृपा" इति दर्शनाच्च शत्रुवाचकस्य श्रेष्ठवाचकस्यापि परशब्दस्य सर्व्वनामत्वम्। "इथा ह्येषामपि मेदिनीभृताम्" इति माघदर्शनात् हयशब्दोऽप्यत्र गणे पठनीयः। तथाच श्रीपतिः—कृतिना ह्ययमप्यत्र गणे पठ्यते, अपिशब्दात् प्रथमपश्चिमावपि। शरणदेवस्त्वाह—व्यवस्थितविभाषया ऽन्यत्रापि स्वागम इति। पश्चिमप्रथमावपि पठन्त्यन्ये, तेन पश्चिमस्यां दिशि, प्रथमस्मात् इति च प्रयोगः—इत्याह कातन्त्र-चतुष्टयवृत्ति २५ संख्यकसूत्रे कविराजः।

९०। पूर्व्वाद्यल्प प्रथम चरम तयायार्द्धकतिपय-नमाः (१।॥)।

एते सप्तदश शब्दाः स्विसंज्ञा वा सु जसि परे।

९१। तीयो ङिति। (तीयः १।, ङिति ७।)।

तीयान्तः शब्दः स्विसंज्ञः स्याद्वा ङिति परे।

९२। पूर्व्वोऽन्त्यादुङ्।

(पूर्व्वः १।, अन्त्यात्, ५।, उङ् ।१।)

अन्त्यात् वर्णात् पूर्व्वो वर्ण उङ्संज्ञः स्यात्।

९३। अन्त्याजादिष्टिः।

(अन्त्याजादिः १।, टिः १।)

अन्त्यो योऽच् तदादिवर्णष्टि-संज्ञः स्यात्।

वा दिग्द्वे। दिग्वाचकानां द्वे स्थितानां स्विसंज्ञा स्याद्वा। उत्तर-पूर्व्वयोर्दिशोरन्तरालं या दिक् सा तस्यै उत्तरपूर्व्वस्यै, उत्तर-पूर्व्वायै दिशे इत्यादौ दिग्वाचकानां वा स्विसंज्ञेति।

९०। पूर्व्वा। सप्तदशेति पूर्व्वादयो नव, तयायौ त्यौ द्वौ, अन्ये षट्।

९१। तीयः। त्यस्य त्यस्वरूपेणानवस्थानादाह तीयान्त इति।

९२। पूर्व्व। अन्ते भवोऽन्त्यस्तस्मात्, दिगादित्वाद्यः। उङ्, उपधा इति परे।

९३। अन्त्या। अन्त्योऽच् आदिर्यस्य सः। अचां सन्नि-विष्टानां अन्त्यो योऽच् तदादिरित्यर्थः। यत्र तु अचः परो नास्ति

**९४। लुकि न तत्र।** ( लुकि ७।, न ।१।, तत्र ७। )।

लुगिति लोपे कृते यो लुप्तस्तस्मिन् परे यत् कार्य्यं तन्न स्यात्।

**९५। स्वरादि-नि-चित्त्वं व्यम्।**

स्वरादि-नि-चित्त्वं १।, व्यं १। )।

स्वरादिर्गणो निश्चकारेतस्त्याश्च व्यसंज्ञाः स्युः।

---

तत्रैकस्यैवान्त्याद्यो व्यपदेशिवदेकस्मिन् इति न्यायात् (१) व्यपदेशिवद्भावेन टित्वं, तेन हरी शम्भौ इत्यादौ इकारादेर्लोपः।

९४। लुकि। लुञ्चधोः क्विप्, न्यङ्क्वादित्वात् (२) काङ्, लुक् पुंलिङ्गः। तत्रेति निमित्तसप्तमी, तथाच—लुक् शब्देन यस्य लोपः क्रियते तन्निमित्तकपूर्व्वकार्य्यं न स्यादित्यर्थः।

९५। स्वरादि। स्वरादिर्यस्य सः, च इट् यस्य चित्, चिश्चासौ त्यश्चेति चित्त्यः पश्चात् चसः। स्वरादिर्यथा—

स्वर्नक्तं समया हृथा वं निकषा सामि स्वयं निःषमं
स्वस्ति प्रादुरतीव भोरिव सना प्रायः शनैर्दुःषमम्।
कं कामं ननु शं दिवा किल तिरोमिथ्या मिथः ख्वः पुनः,
सायं नाम चिरं चिरेण सहसा दोषा विनोषा वहिः॥

---

(१) अस्य व्याख्या ७८ श पत्रे (४) संख्यक टिप्पन्यां द्रष्टव्या।

(२) न्यङ्करित्यत्र निपूर्व्वादञ्चधातोरप्रत्यये यथा चस्य क तथात्रापीत्यर्थः। तथाच पाणिनीये 'न्यङ्क्वादीनाञ्च" (७।३।२८) कुत्वं स्यादित्युक्तम्। तर्कवागीशेनापि चजोः कगौरिति सूत्रटीकायां "न्यङ्क्वादीनाञ्च। एषां चजोः कगौ स्त" इति वार्त्तिकसूत्रं कृतम्। गायीचन्द्रेण तु सुबन्तपादे प्रथमसूत्रटीकायां "लुगित्यव्युत्पन्नं नाम न तु लुञ्चतेः क्विबन्तस्य रूपमि"त्युक्तम्।

अस्त्याहो अड़ वत्चिराय अकडोम् जोषं चिरं कु प्रगे,
साचि द्राक् परमं मृषा खलु वरं ह्यः सुष्ठु दिष्ट्या चिरात्।
नीचैरीषदये विहा यदि मनागर्व्वागभीक्ष्णं पृथक्
तूष्णीमा सपदि प्रसह्य झटिति प्याड़ङ्ग सद्यः ऋते ॥
अञ्जसा ननु च प्राध्वं युगपद्वत सम्प्रति।
उच्चैरस्तं सनात्प्रातः समन्ताद् बलवन्मुहुः॥
प्रागन्तः साम्प्रतं स्थाने विष्वक् प्रभृति किञ्चिल।
चिररात्राय धिङ्मङ्क्षु चिरस्य हो ऋते शुभम्॥
अद्धा ऋधुगमाञ्जाय हिरुक् स्युः कुत-आदयः।
तसन्ताद्यास्तथा प्रोक्ताः शेषं ज्ञेयं प्रयोगतः॥ (१)

कुत-आदयः कुतः-क्व-कुहेत्यादि सूत्रे ये निपातितास्ते। तसन्ताद्याः तस् त्र दा र्हि दानीं एद्युस् स्तात् एन श्च आहि आत् अस् एतदन्ताः। स्वरादिपठितानां वाचकत्वं,

---

(१) कारिकोक्ता अव्ययशब्दाः—

स्वर्, नक्तम्, समया, हठा, व, निकषा, सामि, स्वयम्, निःषमम्, स्वस्ति, प्रादुस्, अतीव, भोम्, इव, सना, प्रायस्, शनैस्, दुःषमम्, कम्, कामम्, ननु, शम्, दिवा, किल, तिरस्, मिथ्या, मिथस्, अस्, पुनर्, सायम्, नाम, चिरम्, चिरेण, सहसा, दोषा, विना, उषा, वहिस्, अस्ति, आहो, अट्, अ, वत्, चिराय, अकट्, ओम्, जोषम्, चिरम्, कु, प्रगे, साचि द्राक्, परमम्, मृषा, खलु, वरम्, ह्यस्, सुष्ठु, दिष्ट्या, चिरात्, नीचैस्, ईषत्, अये, विहा, यदि, मनाक् अर्व्वाक्, अभीक्ष्णम्, पृथक्, तूष्णीम्, आ, सपदि, प्रसह्य, झटिति, प्याट् अङ्ग, सद्यस्, ऋते, अञ्जसा, ननु, च, प्राध्वम्, युगपत्, वत, सम्प्रति, उच्चैस्, अस्तम्, सनात्, प्रातर्, समन्तात्, बलवत्, मुहुस्, प्राक्, अन्तर्, साम्प्रतम्, स्थाने, विष्वक्, प्रभृति, किञ्चिल, चिररात्राय, धिक्, मङ्क्षु, चिरस्य, हो, ऋते, शुभम्, अद्धा, ऋधुक्, अमा, अञ्जाय, हिरुक्, कुत-आदय, तसन्ताद्याः।

**९६। हसोऽनन्तरः स्यः।**

( हसः ११, अनन्तरः ११,स्यः ११ )।

अचानन्तरितो हसः स्यसंज्ञः स्यात्।

**९७। यूत् स्त्रीव दी।**

( यूत् ।११, स्त्री ।११, एव ।११, दी ।११ )।

ईदूदन्तो नित्यस्त्रीलिङ्गो दीसंज्ञः स्यात्।

चादीनां द्योतकत्वम्, अतएव चादि-स्वरादोः पृथगुक्तिः। स्वरादि-राकृतिगणः। व्यं अव्ययमिति परे।

९६। हसः। नास्त्यन्तरं यस्य सः। अचानन्तरित इति-अर्थादचेति लभ्यते, अनन्तरितः अव्यवहित इत्यर्थः। स्यः, संयोग इति परे।

९७। यूत्। ईश्च ऊश्च तौ, ताभ्यां तमित करोति, तेन ईदूच लभ्यते। येन विधिस्तदन्तस्येति न्यायादाह ईदूदन्त इति। एव शब्देनास्त्रीलिङ्गं व्यवच्छिद्यते (१) तेन (२) सेनान्ये स्त्रियै इत्यादौ न स्यात्। बहुप्रेयस्यै कृष्णाय अतिलक्ष्म्यां राज्ञि इति अवयवस्त्रीत्वात् (३) सिद्धमिति भाष्यम्। ग्रन्थकृन्मते तु बहु-प्रेयस्ये अतिलक्ष्मी इति। दी, नदीति परे।

(१) अस्त्रीलिङ्गं नित्यस्त्रीलिङ्गभिन्नं व्यवच्छिद्यते निराक्रियते। नित्यस्त्री लिङ्गशब्दस्तु "यस्मिन्नर्थे यद्रूपेण स्त्रीलिङ्गशब्दस्तस्मिन्नेवार्थे तद्रूपेणैव यदि लिङ्गा-न्तरं न भजति तदा नित्यस्त्रीलिङ्गः तेन गौरशब्दस्य पुंस्त्वेऽपि गौरीशब्दस्य नित्यस्त्रीलिङ्गत्वमिति दुर्गादासः।

(२) तेन सेनानीशब्दस्य नित्यस्त्रीलिङ्गभिन्नत्वेन।

(३) अवयवस्त्रीत्वात् अवयवस्य प्रेयसीशब्दस्य लक्ष्मीशब्दस्य च नित्यस्त्रीलिङ्ग-

९८ । **नास्त्रीयुवः ।** (न ।१।, अस्त्री ।१।, इयुवः ६।) ।

इयुवस्थानावीदूतौ दीसंज्ञौ न स्तः, नतु स्त्री ।

९९ । **वामि ।** (वा ।१।, आमि ७ ) ।

इयुव ईदूच्च दीसंज्ञो वा स्यादामि परे, नतु स्त्री ।

१०० । **स्त्री युच्च ङिति ।**

( स्त्री ।१।, युत् ।१।, च ।१।, ङिति ७। ) ।

स्त्रीलिङ्ग इदुदन्तो नित्यस्त्रीलिङ्ग इयुव ईदूच्च दीसंज्ञः स्याद्वा ङिति परे, न तु स्त्री ।

---

९८ । नास्त्री । यूदित्यनुवर्त्तते । न स्त्री अस्त्री । इयुवस्थानाविति,—स्थानमस्ति ययोस्तौ, अर्श-आदित्वादः, स्थानौ ; इयुवोः स्थानौ इयुवस्थानौ, ईदूतावित्यस्य विशेषणम् । एतेन दीसंज्ञानिषेधात् हे श्रीः श्रियम् श्रिय इत्यादौ ध्यम्शसादेर्लोपो न स्यात् । अस्त्रीति किं—हे स्त्रि स्त्रीम् स्त्रीरित्यादि ।

९९ । वामि । इयुव ईदूदन्तोऽस्त्री चेत्यनुवर्त्तते । अस्त्रीत्युक्तेः स्त्रीणामिति नित्यम् ।

१०० । स्त्री । चकारान्नित्यस्त्रीलिङ्ग इयुव ईदूदन्तोऽस्त्री चेत्यनुवर्त्तते, इह पुनः स्त्रीग्रहणं पाक्षिकस्त्रीलिङ्गस्य इदुदन्तस्यापि प्राप्त्यर्थम् । तेन मत्यै मतये धेन्वै धेनवे सुमत्यै सुमतये

---

त्वात् । अत्र दुर्गादासः—'भाष्यकार-क्रमदीश्वरौ तु प्राक्प्राप्ता नदीसंज्ञा पश्चात् पुंस्त्वयोगेऽपि न निवर्त्तत इति मन्यमानौ हे अतिलक्ष्मि विप्र, हे बहुश्रेयसि कृष्ण, अतिलक्ष्म्यै विप्राय धनं देहि, अतिलक्ष्म्यै राज्ञे स्वस्तीत्युदाहरत' इति ।

१०१ । अघ्यच्ताच्चेप् पिः ।

( अघ्यच्ताच्चेप् ।१।, पिः १। ) ।

घिवर्जस्यादेरच् तसंज्ञावच्चयकारावीप् च एते पि-संज्ञाः स्युः ।

१०२ । संख्यावड्डत्यतु-बहु-गणा नेपि ।

( संख्यावत् ।१।, डति अतु-बहु-गणाः १॥।, न ।१।, ईपि ७। ) ।

डत्यतु-बहु-गणानां सङ्ख्यावत् कार्य्यं स्यात् नत्वीपि ।

सुधेन्वै सुधेनवे इत्यादि । इयुवस्थानयोरीदूतोस्तु नित्यस्त्रीलिङ्ग-योरेव, तेन सुश्रिये स्त्रियै इत्यादौ न स्यात् । इयुव ईदूतोरपि पुं-भिन्नान्यदार्थं भूरिश्रियै भूरिश्रिये भूरिभ्रुवै भूरिभ्रुवे स्त्रियै, भूरि-श्रीणां भूरिश्रियां भूरिभ्रूणां भूरिभ्रुवां स्त्रीणामित्यादौ दीसंज्ञेति केचित् । वाशब्दस्य व्यवस्थया विगत इर्य्याभ्यस्ता वीः पश्य इत्यादौ शसि दीसंज्ञा, न तु ङिति, तेन विगत इयस्यास्तस्यै व्ये ।

१०१ । अघ्यच् । नघि रघिस्तस्याच् अघ्यच्, अश्च यश्च तौ अचौ, तौ च तौ अचौ चेति ताचौ, अघ्यच्च ताचौ च ईप् च तत् । नञ्युक्तवन्न्यायादाह (१) घिवर्जस्यादेरिति ।

१०२ । संख्या । संख्या इव संख्यावत्, डतीति त-त्यान्तस्य (२) ग्रहणं, तेन पतिरित्यस्य न ग्रहणम् (३) । अतुशब्देनात्व-न्तस्य ग्रहणम् । बहुगणौ प्रचुरार्थौ । एतेषां संख्यातिदेशः कतिशः

(१) नञ्युक्तवन्न्यायात् निषेधो यज्जातीयस्य विधिरपि तज्जातीयस्येति न्यायादित्यर्थः ।

(२) तत्यान्तस्य तद्धित डतिप्रत्ययान्तस्य ।

(३) पतिशब्दस्य औणादिक डडतिप्रत्ययनिष्पन्नत्वात् ।

## अजन्तपुंलिङ्ग-शब्दः।

राम-स् इति स्थिते—

१०३। स्रोर्विः फे। (स्रोः ६॥, विः १।, फे ७।)।

सकाररेफयोर्विः स्यात् फे परे। रामः।

औजसोः सन्धिः। रामौ रामाः।

---

यतिशः यावच्छः तावच्छः बहुशः गणशः इत्यादिसिद्धार्थः। ईपीति विषयन्ती, तत्र निषेधात् यावती बह्वीत्यादि।

इति श्रीरामतर्कवागीशकृता संज्ञापादटिप्पनी समाप्ता।

---

१०३। स्रोः। स च र च तत् स्र, सयुक्तोर स्र, स्रच स्रच तौ तयोः स्रोः; तथाच सकारस्य रेफस्य सकाररेफस्य च विरि त्यर्थः। तेन रामः गीः चतुरो वारान् भुङ्क्ते चतुरित्यादि अतएव ग्रन्थकृता रात्सस्येति सूत्रं न कृतम् (१)। औजसोः सन्धिरिति त्रिधाविल्यर्थः।

---

(१) रात्सस्य—(८।२।२४) रेफात् संयोगान्तस्य सस्यैव लोपो नान्यस्ये पाणिनीये। सुप्यतुर्हिवोरित्यस्य टीकायां "चतुरिति चतुर शब्दात् सुच उत्पावितं चतुर्स् इति स्थिते स्रोर्व्विः फे इति द्विवचननिर्द्देशात् एकशेषाद्वा रेफसकारयो स्थाने एकस्य विरित्युक्तं तर्कवागीशेन।

अत्र दुर्गादासस्तु चतुरोवारान् इत्यर्थे चतुर्शब्दात् सुचि कृते रेफस्य विस यसि यस् इत्यत्र वाशब्दस्य व्यवस्थावाचित्वात् सुचि परे नित्यं विसर्गस्य सका स्यादेः सोलोप इति सस्य लोपे सुचः सस्य विसर्गे चतुरित्याह।

१०४। स्वदीभ्यां ध्यम्शसादेर्लोपः।

( स्वदीभ्यां ५॥, धि-अम्-शसादेः ६।, लोपः १। )।

स्वात् दीसंज्ञकाच्च परस्य धेरम्शसादेश्च लोपः स्यात्।

हे राम रामं रामौ।

---

१०४। स्वदी। स्वश्च दी च ते ताभ्यां, अम्च शम्च तौ, तयोरादिः अम्शसादिः, धिश्च अम्शसादिश्च तत्तस्य, पुंस्त्वं सौत्रत्वात्। धातारं पितरमित्यादौ तु विप्रतिषेधे परं कार्य्यमिति(१) न्यायादादौ त्रिणू। ननु अम्च शम्च तौ, तयोरः अम्शसः, धिश्च अम्शसश्च तयोर्लोपः ध्यम्शसलोपः इति कृते सिद्धे आदिशब्दस्य ग्रहणं, क्वचिदन्यतोऽपि धिलोपार्थं, तेन गन्धर्व्ववाचि-त-शब्दस्य धौ हे ते, तथा महान् इः कामो यस्य स तस्य धौ हे महे, वेञधोः क्विप् ऊः महानूर्यस्य स तस्य धौ हे महा इत्यादौ एङोऽपि धेर्लोपः। हे भोः हे भगोः हे अघोः इत्यत्र कथं न धिलोप इति, अभोभगोऽघोभ्य इत्यादिज्ञापकात् (२)।

मातृकस्य मातः पुत्रे मातृस्तुतौ धौ।

महाकुलसम्भूताया मातुस्तुत्यापत्यस्यापि स्तुतिर्मातृस्तुतिस्तस्यां गम्यमानायां मातृकस्य मातः स्याद्धौ परे पुत्रे वाच्ये। हे गार्गीमात हे वात्सीमात पुत्र धन्योऽसि। पुत्रे किं—गार्गीमातृके कन्ये

---

(१) तुल्यबलविरोधे परं कार्य्यं स्यादित्येतत्पाणिनिसूत्रस्य वृत्तिः (१।४।२)

(२) अभोभगोऽघोभ्य इत्यत्र विसर्गलोपविधानात्।

१०५। शस्नामि घः। (शस्नामि ७।, घः १।)।

शसि नामि च परे स्वस्य घः स्यात्।

---

धन्यामि। स्तुतौ किं—दासीमातृक पुत्र। माताशब्दद्वारैव सिद्धे गार्गीमातृक इत्यनिष्टनिवारणार्थमिदम्।

१०५। शस्। नुमो नयुक्त आम् नाम्, गमकत्वात्(१) सः। शस् च नाम् च तत्तस्मिन्। दीसञ्ज्ञस्य स्वभावघत्वे स्वमनुवर्त्तयन्नाह स्वस्येति। नुस्विको ऽच्यनामि इति ज्ञापकात् नुम्सहितामो ग्रहणात् शार्ङ्गिणामित्यादौ न स्यात्। न चामि कृते सिध्यतीति वाच्यं, रामाणामित्यादौ घे स्वाभावान्नुमोऽभावप्रसङ्गात्। नापि नुमाम इति स्वग्रहणात् भविष्यतीति वाच्यं, तिसृणां नृणामित्यत्र चरितार्थत्वात्। न च स्वस्थानजत्वात् भविष्यतीति वाच्यं, सह एन वर्त्तमानाः, विगत इ येषां ते, तेषां सां व्यां इत्यादौ नुम्प्रसङ्गात्(२)। बहुः लृ यत्र तान् बहॢलृन्। परे तु लृकारे घत्वाभात् सवर्णदीर्घे ऋकारस्तेन बहॄन् इत्याहुः। अन्ये तु लकारभागद्वययुक्त लृकारस्तेन बहॢल्लृन् इत्याहुः।

लृत ओजसङ्ग्रां पुंसि घः। लृकारस्य ओकारेण जसोऽकारेण च सह घः स्यात् पुंलिङ्गे। बहुर्लृर्ययोर्येषां वा तौ बहॢल्लृ ते बहॢल्लृः। परे तु बहॄ बहॄरित्यादि।

---

(१) तदर्थबोधकत्वात्। नाम् इत्युक्तौ नुमो नयुक्त आम् इत्यर्थप्रतीतेरित्यर्थः।

(२) अत्र दुर्गादासः—किञ्च आम् ग्रहणेनैवेष्टसिद्धौ नामीति कृतं आगमादेशयोरागमविधिर्बलवानिति न्यायस्वीकारार्थम्। तेन क्रोष्टूनामित्यत्र आदौ नुमि तृनादेशो नस्यात्। एवं प्रकृते अकारदीर्घे दीर्घस्य स्थानिवत्त्वेन ह्रस्वपरत्वात् यथा

१०६ । पुंसि तु शस् न ।

( पुंसि ७।, तु ।१।, शस् ।१।, न । १। ) ।

स्वात् परः शस् न स्यात् पुंलिङ्गे । रामान् ।

१०७ । टा-भिस्-ङे-ङसि-ङसोसा-मिनैसयात्-स्य-यीसोऽतः । (टा-ओसाम् ६।।।, इन-योसः १।।।, अतः ५।)

अकारात् परेषामेषां स्थाने एते क्रमात् स्युः ।

१०६ । पुंसि । पुंस्त्वमिह शब्दानां शिष्टकृतपरिभाषाविषयत्वं, न तु स्तनादिमत्त्वम्, दारकलत्रादौ तदभावात् । एवं स्त्रीत्वनपुंसकत्वे अपि । यदुक्तं—

शब्दसंस्कारसिद्ध्यर्थमुपायाः परिकल्पिताः ।
सर्व्ववस्तुगता धर्म्माः शास्त्रे पुंस्त्वादयस्त्रयः ॥
ये तु लिङ्गादिसम्बन्धाः प्राणिजातीयगोचराः ।
न तेऽप्युपायाः संस्कारे दारादिषु तटादिषु ॥

रामान् इति—अनेन ने कृते पूर्व्वेण षः (१) । कथं सान् वीन् इति ? उच्यते, भूतपूर्व्वस्त्वमाश्रित्य शसो नादेशः ।

१०७ । टा । स्वसंत्वात् पुंसीति नानुवर्त्तते, अतः क्लीबेऽपि, तेन ज्ञानेनेत्यादि । ऐस् भात् करणं निर्जरसैः निर्जरसादिति

शसो नकारविधानं तथा आमो नुमागमो नस्यादिति ज्ञापनार्थञ्च नामीति कृतम् । अतएव सः विष्णुः, सह एन वर्त्तते यः स साः, विगत इर्यस्मात् स वीः तेषां, सां व्यामिति ।

(१) दुर्गादासस्तु बहिरङ्गविधेरन्तरङ्गस्य बलवत्त्वादादौ दीर्घे कृते पश्चाद् नत्वमाह । वयन्तु सूत्रद्वयस्य पौर्व्वापर्य्येणाचार्य्यस्यापि मतमेतदिति मन्यामहे ।

१०८। ष्णुर्णोऽदान्ते नोऽवकुप्वन्तरेऽप्यतद्धात्त्व-पक्वयुवाङ्कः ससेप्स्यादे नैकाच्कोस्तु वा।

( ष्णुः ५।, णः १।, अदान्ते ७।, नः ६।, अवकुप्वन्तरे ७।, अपि।१।, अतद्धात् ५।, तु।१।, अपक्वयुवाङ्कः ६, ससेप्स्यादेः ६।, नैकाच्कोः ६।, तु।१।, वा।१।)।

---

सिद्धार्थम्। व्येस्म्येरित्यत्र व्यस्म्योस्ये रिति कृते सिद्धे अत्वीसग्रहणं, अदृग्रहणेन लाक्षणिकस्याप्यतो ग्रहणमिति ज्ञापनार्थम्। तेन, येन तेन यैः तैरित्यादि। एवमन्यत्रापि क्वचिदनतोऽपि ङसः स्य-विधानार्थमिति। तथाच—

नवं नवं परिक्षिप्य पुराणमपकर्षतः।
अतिजरस्य भिक्षुस्य कन्था वर्षशतं गता॥

इति•वृद्धतिङन्तः (१)।

उदधिस्योत्तरे तीरे मृतः किमनुशुच्यते इति उदधिमिच्छति, क्ये सन्, पचाद्यनि उदधिस्या गङ्गा, तस्या उत्तरे उदधिस्योत्तरे इति (२)।

---

(१) कातन्त्रेऽपि ङसस्य इति चतुष्टयवृत्ति २२ग सूत्रे नवं नवमिति श्लोक-मुद्धृत्य ऋषिप्रयोगादिति चिन्त्यमित्याह कविराजः।

(२) अतःपरं बहुषु पुस्तकेषु 'मा मा सखे वदन्तस्य सुप्तोऽहं विजने वने इत्यत्र वदन्निति क्रिया असंहितत्वात् नस्य न सन्' इत्यधिकः पाठः। अस्य तु प्रकृते कीदृगुपयोगित्वं तत् सुधीभिश्चिन्त्यम्।

कातन्त्रीय-व्याख्यासारे तु—"उदधिस्योत्तरे तीरे जम्भला नाम राक्षसी। तस्याः स्मरणमात्रेण मुक्ता भवति गुर्व्विणी" त्युद्धृत्य अत्र अनकारान्तादपि ङसःस्य इत्युक्तम्।

षकारात् रेफात् ऋवर्णाच्च परस्य अदान्ते स्थितस्य नस्य णः स्यात्, अव-कवर्ग पवर्ग-व्यवधानेऽपि।

यत्र दे न स्ततोऽन्यत्र गतात्तु निमित्तात् परस्य, साद्दि-र्हितेनेपा स्यादिना च सहितस्य, पक्कादिवर्जितस्य, स्यात्, तस्यै-वैकाचः सकवर्गाच्चान्यस्य, वा स्यात्। गमेण।

१०८। षृ। ष च र च ऋश्च, तत्तस्मात्, पुंस्त्वं सौत्रत्वात्। दस्यान्तो दान्तः, न दान्तः अदान्तस्तस्मिन्। अव् च कुश्च पुश्च ते अवकुपवः, तैरन्तरं व्यवधानम् अवकुप्वन्तरं तस्मिन्। तच्च तत् दश्चेति तद्दं, न तद्दम् अतद्दं तस्मात्। पक्कश्च युवा च अद्दश्च तत्, न तत् अतत् तस्य अपक्कयुवाद्दः। ईप् च स्यादिश्च तौ ईप्स्यादौ, माङीप्स्यादौ मीप्स्यादौ, ताभ्यां सह वर्त्तमानः समीप्स्यादिस्तस्य। एकोऽच् यस्य स एकाच्, एकाच्च कुश्च तत्, न तत् नेकाच् कुः तस्य, पुंस्त्वं सौत्रत्वात्। परभागे अतद्दादित्युक्तेः पूर्व्वभागे समानदस्थ-निमित्तादित्यर्थः। यद्यपि कृणाति पृणाति इत्यादौ ष्टुभिष्टु इत्यादिना सिध्यति, तथापि अर्पेण इत्यादिसिद्धार्थं षग्रहणम्। यत्रेत्यादि—यस्मिन् दे नकारः तद्भिन्नदस्थात् षकार-रेफ ऋवर्णात् परस्य नकारस्य मात् क्तताभ्यामीप्स्यादिभ्यां युक्तस्य पक्कादिभि-न्नस्य णः स्यादित्यर्थः। तस्यैव नकारस्य एकाच् कवर्गयुक्त द-भिन्न-सम्बन्धिनो वा स्यादित्यर्थः। एतेन एकाच् कवर्गयुक्त-द-सम्बन्धिनो नकारस्य णो नित्यं स्यादित्यर्थः। पक्कादेरुभयत्रापि निषेधः। एकाच्च कोर्य्यथा—हृतहृणौ वस्त्रयुगाणीत्यादि। एकाच्कु-भिन्नस्य—हरिभाविणी हरिभाविनी, व्रीहिवापिणी व्रीहिवापिनी। पक्कवर्ज्ज-

नात् स्यादेर्नकारस्यापि णत्वं, तेन रम्यविणा, श्रीकामिणा, श्रीभाविणा श्रीभाविना इत्यादि। पक्वादेस्तु-रम्यपक्वेन रम्ययूना दीर्घाह्नेत्यादि। अदान्त इति किं—रामान्, व्रीहिवापिन्। अवकुप्यन्तर इत्येव, चुटुतुलशस-व्यवाये माभूत्। यथा—महाराजानां, वराटिकानाम्, ऋतूनाम्, अरालानां, राशीनां, रसानामित्यादि। साहि-ह्नितेति किं-वीरस्य भगिनी वीरभगिनी इत्यादि (१)। वाशब्दस्य व्यवस्थावाचित्वात् क्वचिदन्यत्रापि। तथाहि--

सदर्गयनभिन्नस्य सिध्रकादेर्वनस्य च।
नाम्न्यनाम्नि तु कार्ष्यादेः सिध्रकाद्याम् सिध्रका।

(१) अत्र स्थले एवं सुधी पूर्व्वेण सम्बद्धौ स्तन्यौ तु परगामिणौ। चत्वारोऽयोगवाहाख्या णत्व-कर्म्मण्यघो मताः इत्युक्तं दुर्गादासेन। तर्कवागीशेन तु क×पौ॥कुन्स्वविति सूत्रस्य टीकायां "एषां सामान्येनोपदेशः स्वरता णत्वविधौ व्यञ्जनता परगमनार्थमित्युक्तत्वाच्चात्र पुनरुक्तम।

क्रुञ्चति हम्पयति हम्फयति रञ्जयति रम्भयति इत्यादौ झसपरत्वाद् बलवता म्नोर्नुरित्यनेन आदौ नस्यानुस्वारे जपे जम्नोरित्यनेन पुनरनुस्वारस्य अकारादिः स्यात्। कर्त्तति मन्यते क्रन्दति कुर्व्वन्ति इत्यादौ तु तघदधेषु परेषु नस्यानुस्वारे पुनरनुस्वारस्य नकारे सत्यप्यगतो विप्रतिषेधो यद्बाधितं तद्बाधितमेवेति न्यायात्त्वं न स्यात् इति। किन्तु ल्टजिदा क्त क्लिसः, जघौ क्लुद क्लुसः, अर्द्द समर्णौ इत्यादौ नकारे परेऽनुस्वाराभावात् पूर्व्वनकारस्य णत्वे ष्टुभिरित्यादिना परनकारस्यापि णत्वमिति। किन्तु भिदिर् निर्भिन्नः भिदा प्रभिन्नः इत्यादौ पूर्व्वपदस्थनिमित्तात्तु व्यस्य ग्यनुकारेति समासे इपसाद्योरेकतरेण नकारस्य सम्बन्धाभावात्त्वं न स्यादेव। अत्रापि णत्वमित्येके। इत्यपि दुर्गादासः। तर्कवागीशमते क्रुञ्चत्यादीनि क्षुभ्नादौ द्रष्टव्यानि। उक्तञ्च काशिकायां "अविहितलक्षणो णत्वप्रतिषेधः क्षुभ्नादिषु द्रष्टव्यः" इति (८। ४। ३९.)।

मिश्रका शारिकाग्रे च पुरगा कोटरा इमे ।
कार्थ्यंसु-प्लच-पीयूच्चाः खदिरान्तः-प्र निः-शराः ।
आम्रश्चाथ नसः प्रादेर्वाह्यात्तु वाहनस्य च ।
त्रिचतुर्भ्यां वयस्येव हायनस्याथ चान्तरः ।
हनोऽदेशेऽयनस्याथ देशे पानस्य च स्मृतः ।
वा नद्यादेश्च गिर्य्यादेः पानस्य तु ध-भावयोः ।
द्वित्र्यज्वङ्गां वनस्पत्योषधिभ्यां हि वनस्य च ।
क्षुभ्रादीनां न णो नित्यं तिमिरादेर्वनस्य च ।
अनाङ्-द-ल व्यवाये च दान्तषादपि मन्यते ।
क्षुभ्रादौ अश्व नांथाग्ता रींस्तथा परिवर्त्तनम् । (१)
दुर्न्नामा परमानन्दः पर्य्यग्निर्नरवाहनः ।
नरनारायणो वारिनिधि र्वार्न्निधिरित्यपि ।
तृप्नोत्याचार्य्यभोगीन(२)स्त्रिनेत्रः सर्व्वनाम च ।
हरिनन्दो सुरानन्दः स्वर्भानुः परनन्दनः ।
ग्रीघनः शास्त्रवाक्यानि चित्रभानुः पुनर्न्नवा ।
दुर्न्नङो नृनमनः सूत्रनड् दुन्दुभिषेवनम् ।
आचार्य्यानी-त्रिनयनौ दुर्न्नङि-हरिनन्दनौ ।
परिगहनं परिनगरं परिनदनं शरनिवेश-शरनिवासाः ।
हरिनगर-सुमन्त्रनेत्र-दर्भानूपास्तु इत्यादि ॥

(१) परिवर्त्तनं रीनस्थानजातौ रिन्-रनावपीत्यर्थः ।

(२) मात्रभोगीण इत्यत्र तु मातृभोगाय हितः इत्यर्थे ईने कृते एकपदत्वात् णत्वं स्यादेव ।

अतद्धादित्यनुवर्त्तते। संज्ञायाम् ऋगयनभिन्नस्य, उत्तरदस्थस्य नस्य नित्यं णः स्यात्, सिध्रकादेः परस्य वनस्य नस्य च। शूर्पा इव नखा यस्याः सा शूर्पणखा रावणभगिनी ; शूर्पनख्या इत्यार्षः। नारा आपोऽयनमस्य नारायणः। तथाच—

आपो नारा इति प्रोक्ता आपो वै नरसूनवः।
अयनं तस्य ताः पूर्व्वं तेन नारायणः स्मृतः॥

वर्द्ध चर्म्म, तस्य विकारे ष्णः, संज्ञापूर्व्वको विधिरनित्य इति न्यायात् वृद्ध्यभावः, वर्द्ध्री चर्म्मरज्जुः, वर्द्धस्य वार्द्ध्री, वार्द्ध्रीव नासिका यस्य स वार्द्ध्रीणसः, द्रुरिव नासिका यस्य द्रुणसः, एवं खरणाः खरणसः (१) ग्रामणीः अग्रहायणी, अर्च्चीर्हिणीत्यादि।

सिध्रकादेर्वनस्य चेति। सिध्रकावणं मिश्रकावणं शारिकावणं वनस्याग्रे अग्रेवणं, राजदन्तादित्वात् परनिपातः। पुरगावणं कोटरावणम्(१)। संज्ञायामिति किं—चर्म्मनासिकः। सिध्रकादेरिति किम्—इन्द्रवनमित्यादि।

असंज्ञायां कार्ष्यादेर्वनस्य नो णः। कार्ष्यस्य वनं कार्ष्यवणम् इक्षुवणं प्लक्षवणं पीयूक्षावणं खदिरवणम् अम्रवणं प्रैवणं निर्वणं शरवणम् आम्रवणम्।

अथ प्रादेः परस्य नसस्य नो णः। प्रगता नासिका यस्य प्रणसं मुखम्, एवं दुर्णसं परिणसमित्यादि।

(१) भाक्षेतुरिति सूत्रे अस्थलाद्यान्मीत्यादिवार्त्तिकसूत्रं द्रष्टव्यम्।

(२) रूपनाम गोत्रेति सूत्रस्य तर्कवागीशटीकायां "कोटर किंशुलुकाद्योवेनगिर्य्योर्नाम्नी"ति धृतं।

वाह्यात्तु वाहनस्य नो णः। उह्यते यत् तद्वाह्यं, ढे घ्यण, उह्यते येन तद्वाहनं घेऽनट्। यथा—दर्भस्य वाहनं दर्भवाहणम् इक्षुवाहणं शकटम्, एवं शरवाहणं धनुः। वाह्यात् किं—दाक्षि-वाहनो गार्ग्यवाहनो रथः, (१) यदा तु दाक्षिर्गार्ग्यश्च वोढव्यस्तदा दाक्षिवाहणः गार्ग्यवाहणश्च भवत्येव।

वयसि गम्ये त्रिचतुर्शब्दाभ्यां परस्य हायनस्य नो णः। त्रीणि हायनानि यस्य त्रिहायणो वत्सः, एवं चतुर्हायणः। वयसि किं—त्रिहायना चतुर्हायना शाला।

अथ चेति चकारस्य व्यवहितेनान्वयः। अदेशे गम्ये अन्तरः परस्य हनो अयनस्य च नो णः। अन्तर्हन्यते अन्तर्हणनम्, एवम् अन्तरयणम्। अदेशे किम् अन्तर्हननो देशः, अन्तर-यनो देशः।

अथ देशे वाच्येऽतद्धस्यात् षुः पानस्य नो णः। पीयते यत् तत् पानं, ढेऽनट्. सुरा पानं येषां ते सुरापाणाः प्राच्याः, क्षीरपाणाः उशीनराः, सौवीरपाणाः (२) वाह्लीकाः, कषायपाणाः गान्धारा इत्यादि। यद्यपि प्राच्यादिशब्दा देशविशेषभूता न, मनुष्ये वर्त्तन्ते, तथापि देशसम्बन्धद्वारेणैव मनुष्ये प्रवृत्ता, अतो देशपदेनाभिधीयन्ते। यद्वा सुरा पानं यस्मिन् देशे इति हेन देशो वाच्यः। देशे किं सुरापानाः शूद्रा इत्यादि।

वेत्यादि। गिर्य्यादेः परस्य नद्यादेर्नो वा णः। गिरिणदी

(१) रथोऽत्र तदुभयस्वामिक इत्यर्थः।

(२) सौवीरं काञ्जिकं काँजि इति भाषा।

गिरिनदी, गिरिणदं गिरिनदं, वक्रणदी वक्रनदी, वक्रणितम्बा वक्रनितम्बा । स्त्रीलिङ्गगणे पाठात् पुंसि न स्यात्, तेन वक्रनितम्बः गिरिनद इत्यादि । आकृतिगणोऽयम् । वेति सर्व्वत्रान्वयः ।

पूर्व्वदस्मात् ष्ठ्धभावविहितस्य पानस्य नो वा णः । क्षीरं पीयते अनया क्षीरपाणी क्षीरपानी, क्षीरस्य पानं क्षीरपाणं क्षीरपानं । ध-भावयोः किम्—उष्ट्रेण पीयते अस्याम् उष्ट्रपानी पात्री ।

द्वौ च त्रयश्च, द्वित्रयोऽचः सन्ति ययोः तौ ताभ्यां, वनस्पतिश्च ओषधिश्च तौ ताभ्याम् । वनस्पत्योषध्योर्द्वित्रज्वतोः ष्ठ्वनस्य नो वा णः । व्रीहिवणं व्रीहिवनं, शिग्रुवणं शिग्रुवनं (१), नीवारवणं नीवारवनं, शिरीषवणं शिरीषवनम् । द्वित्रज्वतोरिति किं—राजमाषवनं पारिभद्रवनम् । वनस्पत्योषध्योरिति किं—विदारीवनम् (२) ।

फली वनस्पतिर्ज्ञेयो वृक्षाश्च फलपुष्पगाः (३) ।

ओषध्यः फलपाकान्ता लता गुल्माश्च वीरुधः ॥ इति कस्यचिन्मतम् । त्रिकाण्डे तु—

महीरुहः कुजो वृक्षो वनस्पतिर्वनेरुहः ।

अगो नगाऽगमश्चैव शाखी द्रुमस्तरुः स्मृतः ॥

पुष्पं विना फलवान् फली वनस्पतिरुडुम्बरादिः । फलपुष्पे उपगच्छन्ति ये ते वृक्षशब्देनोच्यन्ते । पाणिनीयस्वरसाङ्ककार समु-

---

(१) शिग्रुः शोभाञ्जनः सजिना इति भाषा ।

(२) विदारी शुक्लभूमिकुष्माण्डः ।

(३) वृक्षाः पुष्पफलोपगा इत्यन्यत्र पाठः ।

श्चयनीयः (१)। केचित्तु दूर्व्वावनमिति प्रत्युदाहरन्ति, तन्नादृत-मस्माभिः, दूर्व्वाशब्दस्यौषधिपर्य्यायत्वात् ।

क्षुभ्नादीनां नस्य णो नित्यं न स्यात् । क्षुभ्नाति क्षुभ्नीतः क्षुभ्नन्ती-त्यादि । एवं विष्कभ्नाति हरिनाथः रमानाथ इत्यादि । रीन्-नरीनरीति नरीनर्त्ति इत्यादि । रीन्स्थानित्वात् रिवनोर्ग्रहणं, तेन नरिनर्त्ति नरिनर्त्तीत्यादि । आदिशब्दादन्यन्त्वोरपि ग्रहणं, तेन कुर्वन्ति कुर्व्वन्तु इत्यादि । आकृतिगणोऽयम् ॥

तथा तिमिरादेः परस्य वनस्य नो णो नित्यं न स्यात् । तिमिरवनम् इरिकावनं भद्रिकावनम् ।

अनाङित्यादि । न आङ् अनाङ्, अनाङ्च तत् दश्चेति अनाङदम्, अनाङदश्च ल्यश्च, तेन व्यवायस्तस्मिन् । अनाङ्-दल-व्यवाये उत्तरदस्थस्य नस्य णो नित्यं न स्यात् । दान्तषादपि । यथा—माषकुम्भवापिनौ चतुरङ्गयोगेन पर्य्यवनद्धं प्रक्षुप्यमानं दुष्पानमित्यादि । अनाङ् क्रिं-पर्य्याणद्धम् ।

(१) चकारेण वनस्पतेः समुच्चयः, वनस्पतयोऽपि वृक्षा इत्यर्थः । अतोऽत्र चकारात् वनस्पतिशब्देन वृक्षा अपृच्यन्ते इति निष्कर्षः । अतएव "सत्यपि भेदे वृक्षवनस्पत्यो-रिहाभेदेन ग्रहणं द्रष्टव्य"मिति काशिका । फलमात्रं यस्यास्ति न तु पुष्पं स फली वनस्पतिर्ज्ञेय', ते उडुम्बरादयः । वृक्षा इत्यादि ये पुष्पमुपगच्छन्ति फलमुप-गच्छन्ति उभयमुपगच्छन्तीति ते पुष्पफलोपगाः । एवं यो वनस्पतिः सोऽपि वृक्षो भवति, न तु यो वृक्षः सोऽवश्यं वनस्पतिरिति विशेषः । ओषध्य इत्यादि—ओषधि-शब्दादिदन्तादकृद्यर्थादिति ई । फलपाके अन्तो विनाशो यासां ताः फलपाकान्ता ओषध्यः ताड़ीदूर्व्वादयः । लता इत्यादि लता विततिमत्यो जातीमालत्यादयः । गुल्माश्च ह्रस्वस्कन्धशाखा बहुपत्राः शाखोटादयः (शाखोटः सेओड़ा इति भाषा) इति गोयीचन्द्रः ।

१०९। आ क्ति-भम्वि (१)।

( आ ।१।, क्ति-भम्वि ७। )।

अकार आकारः स्यात् क्तौ भं-म-वेषु परेषु।

रामाभ्यां रामैः, रामाय रामाभ्याम्।

११०। व्वे सभ्येः। ( व्वे ७, स्भि ७।, एः १। )।

अकार एकारः स्यात् क्तौ व्वे सभयोः परयोः।

रामेभ्यः, रामात् रामाभ्यां रामेभ्यः, रामस्य रामयोः।

१०९। आक्ति। मच वच म्व भश्च म्वच भम्व क्तौभम्व तस्मिन्। मण्डूकगत्या क्तिविपरिणामेन अत इत्यनुवर्त्तयन्नाह अकार इति। क्तौभमवेष्विति स्यादेर्भे त्यादेर्मवयोरित्यर्थः, तेन रामं ज्ञानमित्यादौ न घः (२)।

११०। व्वे। सच भच तत्तस्मिन्। अदित्यनुवर्त्तते, तेन उमाभ्य इत्यादौ न स्यात्। त्यादेः सकार भकारयोरभावात् स्यादावस्य विषयः। व्युत्क्रमनिर्देशात् क्वचिद्बाधक ऐस् वाध्यते, तेन मान्यवरेभिः गन्धर्व्ववरेभिः (३) इति वौद्धप्रयोगः।

(१) आक्तिमभवीति बहुषु पुस्तकेषु पाठः। किन्तु तर्कवागीशटीकायां भ म व एषां व्यासवाक्यानुसारेणास्य मते भम्वीत्येव पाठः। आदौ स्यादिप्रकरणे भस्य पश्चात्त्यादिप्रकरणे मवयोः सार्थकत्वात् समीचीनोऽप्येष इति मन्यामहे।

(२) ननु रामामित्यादौ कथमाकारो न स्यात् अकारलोपस्य सार्थकत्वादिति चेन्न। हरिं विष्णुमित्यादौ तस्य सार्थकत्वात्। वस्तुतस्तु भवयोः साहचर्य्यात् विभक्तेराद्यवयवमकारे परे इत्यर्थः। अतएव त्वां मामित्यादिसाधनाय ङेभ्यो-र्मकारे क्तेऽपि समभ्योष्वाङ इत्याकारं विधास्यति।

(३) माल्यवरेभिः गन्धर्वरेभिरिति पाठान्तरम्।

११११ नुमामः स्वद्याप्-सङ्ख्यार्णाः ।

*( नुम् ।१।, आमः ६।, स्वद्याप् सङ्ख्यार्णः ५। ) ।*

*स्वात् द्या आपो रषनान्त-सङ्ख्यायाश्च परस्याम आदौ नुम्* स्यात् । ष-णत्वे । रामाणाम्, रामे रामयोः ।

११२ । क्विलात् क्नतो ऽसात् सः षो ऽदान्ते नुव्यन्तरे ऽपि शास-वस-घस-साढाञ्च ।

(क्विलात् ५।, क्नतः १।, असात् ।१।, सः १।, षः १।, अदान्ते ७।, नुव्यन्तरे ७।, अपि ।१।, शास-वस-घस साढां ६॥, च ।१। )

कवर्गादिलाञ्च परः क्नतः साढर्जो दमध्यगः सकारः शासादेश्च षः स्यात्, नु-वि व्यवधानेऽपि । एत्व-षत्वे । रामेषु ।

एवं मुकुन्दानन्दगोविन्दादयः ।

१११ । नुमामः । रच षच न च तत् र्णो, संख्या च तत् र्णो चेति तत, स्वश्च द्यौ च आप् च संख्यार्णो च तत्तस्मात् । येन विधिस्तदन्तस्येति न्यायादाह रषनान्तेति । मुख्यलाक्षणिकयो-र्मुख्यस्यैव ग्रहणं न तु लाक्षणिकस्येति न्यायात् प्रियचतुरां प्रियपञ्चामित्यादौ न स्यात् । बहुप्रेयसीनामित्यत्र अवयवस्त्री-त्वेन नुमिति भाष्यम् ।

११२ । क्विलात् । कुश्च इलश्च तत्तस्मात् । न सात् असात्, न दान्तोऽदान्तस्तस्मिन्, नुश्च विश्च तौ, ताभ्याम् अन्तरं नुव्यन्तरं तस्मिन् । शासश्च वसश्च घसश्च साढ़ च ते तेषाम् । अन्तशब्दः प्रान्तार्थ इत्याह दमध्यग इति, तेन दधि सिञ्चति हरिरित्यादौ न

स्यात् । अकृतसत्वात् शासवसघसां ग्रहणम् । साढ़ः कृतसत्वेऽपि किलभिन्नादपि षत्वार्थं नियमार्थञ्च ग्रहणं, तेन तुराषाट् ऋतीषाट् इत्यादौ स्यात्, न तु तुरासाहौ ऋतीसाहावित्यादौ । शासादेस्तु किलादेव, तेन अशिषत् उषितः जक्षतुरित्यादौ स्यात्, न तु शास्तीत्यादौ । कवर्गग्रहणात् वाक्षु प्राङ्क्षु इत्यादि । नुव्यन्तरेऽपीति-सर्पींषि धनूंषित्यादि । नुणो नु-ग्रहणात् पुंसु इत्यत्र न षः । सर्पिष्षु धनुष्षु इत्यादि शसि वा शस्विधानात् । कृत इति किं—विसं (१) मृणालमित्यादि ।

सेऽग्नेर्ङ्यःसोमस्य ॥ अग्निशब्दात् ङ्यवयवात् सोमस्य सः षः स्यात् से सति । अग्नीषोमौ, देवता-चे ङी । तस्मादिति किं-ज्योतिरग्निः सोमो लता तयोर्ये अग्निसोमौ, अग्निश्च इश्च सोमश्च ते अग्नीसोमाः ।

मातापितृभ्यां स्वसुर्वा तु ष्यन्ताभ्याम् । आभ्यां परस्य स्वसुः सः षः स्यात्, ष्यन्ताभ्यान्तु वा से सति । मातृष्वसा पितृष्वसा मातुःष्वसा मातुःस्वसा पितुःष्वसा पितुःस्वसा इत्यत्र से ष्या लुक्वा ।

निनदीभ्यां स्नः कौशले ॥ नेर्नद्याश्च स्नः सः षः स्यात् कौशलेऽर्थे से सति । निष्णातः कुशलः, तथाचातिथ्यनिष्णा वन-वासिमुख्या इति भट्टिः । नदीष्णः, तथाच ततो नदीष्णान् पथिकानिति भट्टिः ।

(१) विस इर् क्षेपे इत्यस्मात् कः ।

दिवि द्युभ्यां सदो देवे। आभ्यां सदः सः षः स्यात् से सति देवे वाच्ये। दिविषदः द्युषदो देवाः, अन्यत्र द्युसत्।

कपिप्रतिभ्यां स्थलस्नातयोर्गोत्रसूत्रयोः। आभ्यामनयोः क्रमात् सः षः स्यादनयोरर्थयोः से सति। कपिष्ठलः ऋषिः, *स्वभावात् पुंलिङ्गः। प्रतिष्णातं* सूत्रं पाणिनेः, सुविशुद्ध मित्यर्थः।

वैस्तरस्य वृक्षासनयोः। वैस्तरस्य सः षः स्यात् अनयो रर्थयोः से सति। विष्टरो वृक्षः कुशमुष्टिश्च, विष्टरो विटपी दर्भमुष्टिः पीठाद्यमासनमित्यमरः। अन्यत्र विस्तरः।

नृगोभ्यां सनो नाम्नि। आभ्यां सनोति नाम्नि सः षः स्यात् से सति। नरं सनोति नृषाः गां सनोति गोषाः।

अभिनिरः स्तानस्य शब्दनाम्नि। अस्मात् स्तानस्य सः षः स्यात् शब्दनाम्नि से सति।. अभिनिष्टानो विसर्गः। तथाच—वचः स्पष्टाभिनिःष्टानमिति माघः। वैकल्पिकमिदमित्यन्ये। शब्द-भिन्ने अभिनिस्तानो मृदङ्गः।

इलादेति नाम्नि वा तु भात्। इलात् परः स एकारे परे षः स्यात् नाम्नि से सति, भात्तु वा। सुषेणः, हरिषेणः। भात्तु-भरणिषेणः भरणिसेन इत्यादि। नाम्नि किं—पृथ्वीसेनः। एति किं—त्रिस्रोता गङ्गा। इलादिति किं—विषुमञ्चतीति क्विप्, स्त्रियामीप्, अचोऽल्लोपोघः, विषूची सेना अस्य, पुंवद्भावः, विष्वक्सेनः शतभिषक्सेनः।

प्रात स्थोऽग्रे। प्रात् परस्य स्थस्य सः षः स्यात् से

सति अग्रगे वाच्ये। प्रष्ठोऽग्रगामी, एवं प्रष्ठा अग्रगामिणी। तथाच सर्व्वनारीगणप्रष्ठामिति भट्टिः। अन्यत्र प्रस्थः।

अवात् स्तम्भेराश्रयनिकटयोः। अवादाश्रये निकटे च स्तम्भे; सः षः स्यात् से सुति। ग्राममवष्टभ्यास्ते, अवाष्टभत्सेना (१) और्ज्जित्येऽपि(२)—अहो मल्लस्याऽवष्टम्भ इति चन्द्रः। अन्यत्र शीतेनावस्तब्धो जड़ीकृत इत्यर्थः।

निरस्तप्येकसेवने। (३) निष्टपतिवह्निं राजा, सकृत्सेवते इत्यर्थः।

वह्निष्ठादीनाञ्च।

वह्निष्ठः सुषमं विषूति-विषमं नैःषेचिका कुष्ठलं
निःषूति निःषितः सुषाम-विषितं निःषाम नैःषेचनम्।
दुःषामा निषयः सुषूति-विषयः दुःषेध-निःषन्धि च
द्विष्ठो दुन्दुभिषेवनं परिषित स्विष्ठः सुषेधो मतः।
अग्निष्टोम-सुषन्धि-विष्ठलमपष्ठाग्निष्ठ-गोष्ठं तथा-
ऽम्बष्ठाम्बष्ठ-दिविष्ठ-कुष्ठ-परमेष्ठाङ्गुष्ठ-दुःषन्धयः।
निःषेधोऽङ्गुरिषङ्ग-सुष्ठु-पृतनाषाहं जलाषाहम-
ग्निष्टुद्दुष्टु-प्रतिष्णिकाः परिषयः शङ्कुष्ठ-सव्येष्टरौ
गौरिषक्थश्च निष्णातो निष्णातिश्च परिष्ठलम्।
भीरुष्ठानञ्च भूमिष्ठो ज्योतिष्टोम-शमिष्ठलं
रथ्याच ऋतीषाहं निःषमं दुःषमं विषु।

(१) निकटीभूतेत्यर्थः।

(२) और्ज्जित्यं प्राधान्यं बलञ्चेति गोयीचन्द्रः।

(३) निरः सकारस्य तपतौ परे षः स्यात् सकृत् सेवनेऽर्थे से सुति।

आयुष्टोमश्च विष्टारो गविष्ठिर-युधिष्ठिरौ
परमेष्ठी उपष्टम्भः शेकुष्ठ स्त्रिष्टुबित्यपि।
पुञ्जिष्ठोऽङ्गुलिषङ्गश्च निष्टुब्धोऽनुष्टुभा सह।
सव्येष्ठोऽपष्ठु सव्येष्ठा दुःषूतिश्च मनीषिभिः।
षट्सप्ततिरिह प्रोक्ताः शेषं शिष्टप्रयोगतः।

बर्हिषि तिष्ठतीति बर्हिष्ठः। सुपूर्व्व षम वैक्लव्ये पचाद्यन् सुषमम्। विपूर्व्व षूधोः क्तिः विषूतिः। विषमं पूर्व्ववत्। षिच-धोर्णकः नोषेचिकेति चान्द्राः। स्थल ज स्थाने पचाद्यन्, पश्चात् कोर्भूमिः कुत्सितं वा स्थलं कुष्ठलम्। निषूतिः पूर्व्ववत्। निपूर्व्वात् षि ञ न ग बन्धे, षो य नाशे, आभ्यां क्तः, निषितः। सुपूर्व्व-षो य नाशे मन् सुषामा। विषितं निषितवत्। निःषामा सुषामवत्। षिचधोरनट् नोषेचनमिति जयादित्यः। दुःषामा सुषामवत्। षि न् ग ञ बन्धे अल् निषयः। सुषूतिर्विषूतिवत्। विषयो निषय-वत्। षिध्यौ मिङ्गो घञ् दुःषेधः। डु धाञ् धारणे पुष्टौ क्तिः सन्धिः, ह सः, निःषन्धिः। द्वयो स्तिष्ठति द्विष्ठः। दुन्दुभेः सेवनं दुन्दुभिषेवनं नुभ्रादित्वान्न णः। परिषितो निषितवत्। त्रिषु तिष्ठतीति त्रिष्ठः। सुषेधो दुःषेधवत्। स्तुधोर्म्मः स्तोमः, अग्नेः स्तोमः अग्निष्टोमः। सुषन्धिर्निःषन्धिवत्। वेः पक्षिणः स्थलं विगतं स्थलं वा विष्ठलम्। अपतिष्ठतीति अपष्ठ इति न्यासः। अग्नौ तिष्ठतीति अग्निष्ठः। गावस्तिष्ठन्त्यत्र गोष्ठः। अम्बायां तिष्ठति अम्बष्ठः मनोषादित्वात् स्वः। आम्बष्ठ इति क्वचिदन्यत्रा-पीति घः। दिवि तिष्ठतीति दिविष्ठः, स्या न लुक्। कौ भूमौ

कुत्सितं वा तिष्ठति कुष्ठः। परमे तिष्ठतीति परमेष्ठः, स्था न लुक्। अग्नौ तिष्ठतीति अग्नुष्ठः। दुःषन्धिर्निःषन्धिवत्। निःषेधो दुःषेधवत्। अङ्गरिषु सङ्गो यस्य सोऽङ्गरिषङ्गः। शोभनं तिष्ठति सुष्ठु, बाहुल्यात् डुः, स्वरादित्वात् व्यम्। पृतनां सहते पृतनाषाट्, तं पृतनाषाहम्, एवं जलाषाहं ; अषाढ़न्तत्वेऽपि षः। गणपाठसामर्थ्यात् पृतनासाहौ जलासाहौ इत्यादौ न स्यात्। ष्टु अल स्तुतौ अग्निष्टुत्। दुष्टु सुष्टुवत्। प्रतिपूर्व्वस्नातेराडन्ताड्डः, ततोऽल्पार्थे कः, कापि परे अकारस्य इकारः, प्रतिष्णिका। परिषयो निषयवत्। अङ्गुष्ठोऽङ्गष्ठवत्। सव्ये तिष्ठति स्था-धोः रौणादित्वात् ऋक्, कित् आलोपश्च, सव्येष्ठा सव्येष्ठरौ सव्येष्ठरः सव्येष्टृभ्यामित्यादि। अन्ये तु अनृदन्तस्थानादन्तस्य षत्वं नेच्छन्ति, तन्मते हे सव्येस्थ इत्यादि। गौरीव सक्थि यस्य गौरिषक्थः, गणपाठात् स्वः। निपूर्व्वे स्ना धोः क्तः क्तिश्च निष्णातः निष्णातिश्च। परिष्ठलं कुष्ठलवत्। भीरोः स्थानं भीरुष्ठानम्। भूमिष्ठोऽग्निष्ठवत्। ज्योतिष्टोमोऽग्निष्टोमवत् ; खपान्तशसि लुप् वा। शम्या स्थलं शमिष्ठलं गणपाठात् स्वः। अत्र स्वाभावस्तत्र न स्यात्तेन शमीस्थलमिति। रथेन पाति रथष्पा नदी, मनीषादित्वात् सुमि अत्र पाठात् षत्वम्। ऋतीषाहं पृतनाषाहमिव। निःषम-दुःषमौ सुषमवत्। विपूर्व्वे सुधोः प्रादिसे विषु व्यम्। आयुष्टोमो ज्योतिष्टोमवत्। विपूर्व्वस्तृधोर्घञ् विष्टारः पङ्क्तिच्छन्दः, अन्यत्र विस्तारः पटस्य। गवि स्थिरः गविष्ठिरः, स्था न लुक्। एवं युधिष्ठिरः। परमे उपपदे स्थाधोरिन्नौणादिकः

परमेष्ठी स्था न लुक्। उपपूर्व्वं स्तम्भधोर्घञ् उपष्टम्भः। ग्रेकुष्ठोऽङ्गुष्ठवत्। त्रिपूर्व्वे ष्टुभधोः क्विप्, त्रिष्टुप्। पुञ्जिष्ठोऽग्निष्ठवत्। अङ्गुलिषङ्गोऽङ्गुरिषङ्गवत्। ईवन्तादपि—अङ्गुलीषङ्गः अङ्गुरीषङ्गः। ष्टुभधोःक्तः निष्टुब्धः। अनुष्टुप् त्रिष्टुप्वत्। सव्ये तिष्ठति सव्येष्ठः स्था न लुक्। अपष्ठु सुष्ठुवत्। सव्ये तिष्ठति इति क्विप् सव्येष्ठाः स्था न लुक्। दुःषूतिः निःषूतिवत्। आकृतिगणोऽयम्।

न सुस्थादि-बहुप्रकृतेः। सुस्थादेर्ब्बहुप्रकृतेश्च सः षो न स्यात् से सति।

> सुस्थः परिस्थितिर्दुस्थो दुस्थितश्च परिस्थितः।
> निस्तब्धश्च (१) प्रतिस्तब्धः कुसरा-कुसरौ तथा।
> धूसरो हरिसेतुश्च धूसरा गिरिसेतु च।
> कपिसेतुः परिस्कन्दोऽभिसुसूश्च (२) प्रयोगतः।

बहु-त्य-पूर्व्व-सकाराः सर्व्वे, यथा बहुसेतुरित्यादि। आकृतिगणोऽयम्।

(१) "निस्तब्ध इति नि उपसर्गः। निरस्तु निष्टब्ध" इति गोयीचन्द्रः।

(२) अभिपूर्व्वात् सुनोतेः सनन्तात् क्विप्, हसात्लोप इत्यकारलोपः, सघेसु-सिति रङ्, व्यनच्तयोरिति घः अभिसुसूः।

"अभिसुसूरिति सनन्तात् क्विप् सुलुप्ते पदान्तत्वात् षत्वाभावे स्तौतेरेवेति नियमाभावे प्रकृतौ प्राप्तं षत्वं निषिध्यते" इति सन्धिपादे २८६ सूत्रे गोयीचन्द्रः। "सनि तु अभिसुसूः। सनन्तादस्मात् क्विपतो लोपे रुत्वे दीर्घः"—इति तत्त्व-बोधिनी। पाणिनि—८।३।११७ काशिका द्रष्टव्या।

११३ । स्नेर्जस्-ङे-ङसि-ङीनामि-स्मै-स्मात्-स्मिनोऽतः ।

(स्नेः ५।, जस्-ङे-ङसि-ङीनां ६।।।, इ-स्मै-स्मात्-स्मिनः १।।।, अतः ५।)।

अकारान्तात् स्नेः परेषामेषां स्थाने एते क्रमात् स्युः ।

सर्व्वे सर्व्वस्मै सर्व्वस्मात् सर्व्वस्मिन् ।

११४ । आत् सुमामः । (आत् ५।, सुम् ।१।, आमः ६। )।

अवर्णान्तात् स्नेः परस्यामः आदौ सुम् स्यात् । एत्व-षत्वे । सर्व्वेषाम् । शेषं रामवत् । एवं विश्वादयोऽकारान्ताः ।

उभशब्दो द्वान्तः । उभौ उभौ उभाभ्याम् उभाभ्याम् उभाभ्याम् उभयोः उभयोः । जसि—नेमे नेमाः । शेषं सर्व्ववत् ।

---

११३ । स्नेः । सर्व्वतो जयमिच्छन्ति पुत्रादेकात् पराजयमिति क्वचिदपवादविषयेऽप्युत्सर्गोऽभिनिविशत इति न्यायात् ।

११४ । आत् । पुनरादुग्रहणात् सर्व्वासामित्यादि । सर्व्वस्मिन्निति पूर्व्वेण स्मिन् । विश्वादय इति । उभशब्दो द्वान्त इति नित्यमिति शेषः । अस्य स्निसंज्ञाफलं त्वादयोऽर्थार्थेति अर्थार्थप्रयोगे सर्व्वा क्तिः स्यात् । यथा—उभौ हेतू उभाभ्यां हेतुभ्यां उभयोर्हेत्वोरित्यादि । उभय इति तु उभशब्दादवयवार्थेऽयट्-त्येन साधितादुभयशब्दात् क्वचित् स्तो, न तु द्वमित्यनभिधानात् । तेन उभयस्मात् उभयेषामित्यादि । एकशब्दात् एकत्वसंख्यावाचित्वात् क्वचित्न । आ दशभ्यः (१) संख्या संख्येय-

---

(१) अष्टादशपर्य्यन्तम्, ऊनविंशतेः प्रागित्यर्थः । संक्षिप्तसारे सुबन्तपादे २८२ संख्यकसूत्रस्य द्वे स्त्रियौ विंशतिः स्त्रियः स्त्रीणां वा इत्युदाहरणानि सन्ति ।

## ११५। पूर्व्वादेः स्मात्-स्मिनौ वा।

(पूर्व्वादेः ५।, स्मात्-स्मिनौ १॥, वा ।१। )।

तौ। पूर्व्वस्मात् पूर्व्वात्, पूर्व्वस्मिन् पूर्व्वे। शेषं नेमवत्। एवं परादयः।

समोऽतुल्ये इत्याद्युक्तेः—

नमः समस्मात् पूर्व्वस्मा अन्तरस्मा अमेधसाम्।
सुमेधसामन्तरस्मै मतां स्वस्मै स्वयम्भुवे॥

---

वृत्तिरेव, नतु संख्यावृत्तिः, तेन घटस्यैकः ब्राह्मणानामष्टादश इत्यादि न स्यात्। मुख्यान्यार्थैकशब्दात्तु द्वित्वे स्त एव, तेन एकौ एकेषामित्यादि॥

११५। पूर्व्वा। तावित्युक्तेरकारादेव, (१) तेन पूर्व्वस्याः पूर्व्वस्यामित्यत्र न स्यात्। अतएवात् सुमामः इत्यत्र आदित्यस्य नानुवृत्तिः। शेषं नेमवदिति। पूर्व्वे पूर्व्वाः इत्यादि।

---

तथोक्तं गोयीचन्द्रेण "द्वे स्त्रियौ विंशतिः स्त्रिय इति संख्येयार्थोऽत्र संख्याशब्दः, अतएव विशेषणविशेष्यभावः। स्त्रीणां वेति विंशतिरिति पदमत्रानुषञ्जनीयम् अत्र संख्यामात्रार्थता। अतएव गुणगुणिनोः सम्बन्धे षष्ठी। विंशतिशब्दस्य संख्येयार्थतां संख्यामात्रार्थताञ्च दर्शयितुमुदाहरणद्वयमुपन्यस्तता वृत्तिकारेणैवं सूचितं विंशत्यादिशब्दाः सर्व्व एव संख्येयार्थाः संख्यामात्रार्था वेति। इतःपूर्व्वं ये संख्याशब्दास्ते संख्येयार्थाः, अतएव द्विशब्दस्य संख्येयार्थता दर्शिता। यत्त्वा दशभ्यः संख्याशब्दाः संख्येये वर्त्तन्ते, ततःपरं विंशत्यादयः संख्याने संख्येये चेत्याहुः। एतदपि व्यभिचरतीति सूचयितुं वार्त्ताकुरेषा गुणसम्प्रयुक्तेत्युदाहृतमिति"।

(१) तौ ङसिङी, यौ ङेजस् इत्यनेन अकारात् परौ सन्तौ स्मात्-स्मिनौ भवत इत्यर्थः। एतेन पूर्वादेरिति सूत्रस्य पुंसि क्लीवे च विषयो न तु स्त्रियामिति ज्ञापितम्।

समायैषु परायैषां मुक्तयेऽर्थान्तराय च।
यदुस्वाय नमः स्वाय मल्लैर्जुष्टाय शार्ङ्गिणे॥
अतिसर्व्वाय सर्व्वाय साध्वन्यानां सखिद्विषे।
कालावराय कालेन पूर्व्वाय जगतो नमः॥

जसि--साध्वन्ये साध्वन्याः। जसि--अल्पे अल्पाः।

शेषं रामवत्। एवं प्रथमादयः। द्वितीयस्मै द्वितीयाय, द्वितीयस्मात् द्वितीयात्, द्वितीयस्मिन् द्वितीये। एवं तृतीयः। निर्जरः।

---

नमः समस्मात् इत्यादि—स्वयम्भुवे नम इत्यन्वयः। तस्मै कीदृशाय? समस्मात् पूर्व्वस्मै, सकलात् पूर्व्वकालवर्त्तिने। पुनः कीदृशाय? अमेधसां अन्तरस्मै, मूढ़ानां वाह्याय। पुनः कीदृशाय? सुमेधसां अन्तरस्मै, ज्ञानिनां हृदिस्थाय। पुनः कीदृशाय? सतां स्वस्मै, साधूनामात्मीयाय इत्यर्थः। क्रमेण प्रत्युदाहरति समायेत्यादि—शार्ङ्गिणे नम इत्यन्वयः। तस्मै कीदृशाय? एषां गोपालानां समाय तुल्याय। पुनः कीदृशाय? एषु जगत्सु पराय श्रेष्ठाय। (१) किमर्थं नमस्यते इत्यत आह-मुक्तये मुक्त्यर्थं, अर्थान्तराय प्रयोजनान्तराय धर्म्मार्थकामाय च इत्यर्थः। पुनः कीदृशाय? यदुस्वाय, यदूनां स्वाय ज्ञातये। पुनः कीदृशाय? स्वाय धनस्वरूपाय (२)। पुनः कीदृशाय? मल्लैर्जुष्टाय सेविताय इत्यर्थः।

---

(१) "एषु जगत्सु समाय तुल्याय जगन्मयत्वादित्यर्थः। एषां जगतां मध्ये पराय श्रेष्ठाय नित्यत्वादित्यर्थः" इति दुर्गादासः।

(२) यदूनामिति शेषः।

न गौण्याख्येत्यस्योदाहरणमाह–अतिसर्व्वाय इत्यादि। सर्व्वाय सर्व्वनाम्ने शिवाय नम इत्यन्वयः। तस्मै कीदृशाय? अतिसर्व्वाय सर्व्वमतिक्रान्ताय। पुनः कीदृशाय? साध्वन्यानां सखिद्विषे, साधवश्च अन्ये च तेषां, यथाक्रमेण साधूनां सख्ये, अन्येषाम् असाधूनां द्विषे शत्रवे इत्यर्थः। अत्र सान्तविधेर-नित्यत्वात् नाकारस्थः(१)। पुनः कीदृशाय? जगतः कालावराय, कालेन कनिष्ठाय। पुनः कीदृशाय? जगतः कालेन पूर्व्वाय, पूर्व्वकालवर्त्तिने ज्येष्ठाय इत्यर्थः।

चे जसि वेत्यस्योदाहरणमाह–जसि साध्वन्ये साध्वन्या इति।

पूर्व्वादल्पेत्यस्योदाहरणमाह—अल्पे अल्पा इति। एवं प्रथमे प्रथमाः, चरमे चरमाः, द्वितये द्वितयाः, उभये उभयाः, द्वये द्वयाः। माघे-वृथा द्वयेषामपि मेदिनीभृतामिति तु द्वयं द्वैतम् इच्छन्ति इष सर्पणे क्विप्, द्वयेषस्तेषां, वाशब्दस्य व्यवस्थयेति परे। अर्द्धे अर्द्धाः, कतिपये कतिपयाः इति।

तीयोङिति इत्यस्योदाहरणमाह–द्वितीयस्मै द्वितीयाय इत्यादि।

इतरेतरान्योन्यपरस्परेऽस्रां कर्म्मव्यतीहारे स्त्रियामादेराम् वा स्त्रीक्लीवयोः॥ स्रोवर्जित-क्तौ परे कर्म्मव्यतीहारे एते निपात्याः स्त्रियां, एभ्यः परस्या अमादिक्तेः स्त्रीनपुंसकविषये आम् वा स्यात्। इतरेतराम् इतरेतरं स्त्रियः कुलानि वा पश्यन्ति। इतरे-तराम् इतरेतरेण स्त्रीभिः कुलैर्वा भोज्यन्ते। इतरेतराम् इतरेतरस्मै

(१) चैकाच्च्दषहोऽरित्यनेन समासान्तो नेति।

११६। जरस् जराचि तु।

( जरस् ।१।, जरा ।१।, अचि ७।, तु ।१। )।

जराशब्दो जरस् वा स्यादचि परे।

निर्जरसौ निर्जरसः निर्जरसं निर्जरसौ निर्जरसः निर्जरसा।

केचिदादाविनाताविच्छन्ति, निर्जरसिन निर्जरसैः निर्जरसे निर्जरसः निर्जरसादित्यादि। पक्षे हसे च रामवत्।

---

स्त्रियः कुलानि वा स्पृहयन्ति। इतरेतराम् इतरेतरस्मात् स्त्रियः कुलानि वा विरमन्ति। इतरेतराम् इतरेतरस्य स्त्रियः कुलानि वा स्मरन्ति। इतरेतराम् इतरेतरस्मिन् स्त्रियः कुलानि वा अनुरज्यन्ते। एवम् अन्योन्याम्, अन्योन्यम्। परस्पराम् परस्परम् इत्यादि। इतरेतरादीनां क्रियाविशेषणत्वेऽपि पुंस्त्वैकत्वे स्वभावात् स्तः। अन्यथा अन्यर्धदित्वात् इतरेतरान्योन्याभ्यां परस्य मस्य तादेशः स्यात्। केचित्तु तादेशमपि, तेन इतरेतरत् इतरेतराम् इतरेतरं कुलानि। एवम् अन्योन्यत् अन्योन्याम् अन्योन्यमित्याहुः। स्त्रीक्लीवयोरिति किम्—इतरेतरं पुरुषाः पश्यन्ति। अन्योन्यमिमौ विघटयतः। क्रियाविशेषणत्वे तु इतरेतरं पुरुषाः पश्यन्ति।

११६। जरस्। पूर्व्वसूत्राद्वानुवर्त्तते। प्रकरणात् त्तोरच्येव, तेन जरा अत्र इत्यादौ न स्यात्। परत्वादादौ त्तौ जरसादेशः न तु त्ति-कार्य्यं, तेन निर्ज्जरसं निर्ज्जरसः निर्ज्जरसोः निर्ज्जरसामित्यादि। तु-शब्दोऽनुक्तसमुच्चयार्थः, तेन अतिजररस्य भिक्षुस्य

११७। पाद दन्त यूष निशा पृतना मासासन सानु नासिकोदक हृदयासृक् यकृत् शकृत् शीर्ष दोषः-पद्दद् यूषन्निश् पृन्मासासन् स्नु नसुदन् हृदसन् यकन् शकन् शीर्षन् दोषणः शसादि-पौ ।

( पाद--दोषः १॥, पद्--दोषणः १॥, शसादि-पौ ७। ) ।

एषां स्थाने एते क्रमात् स्यु र्वा शसादौ पौच परे ।

पदः पदा पद्भ्यामित्यादि । दतः दता दद्भ्यामित्यादि ।

---

कन्या वर्षशतं गता इत्यत्रानच्यपि जरसादेश इति कश्चित् । निर्ज्जरसिन निर्ज्जरसादिति तु परमतमित्याह केचिदित्यादि । निर्ज्जरैरिति ऐस्करणाव निमित्तापाये नैमित्तिकस्याप्यपायः । भाष्ये तु अतिजरैरित्येव ।

११७। पाद । पादश्च दन्तश्च यूषश्च निशा च पृतना च मासश्च आसनञ्च सानु च नासिका च उदकञ्च हृदयञ्च असृक् च यकृच्च शकृच्च शीर्षञ्च दोष् च ते, ष्यर्थे व्यत्ययात् प्री । पच्च दच्च यूषंश्च निट् च पृच्च माम् च आसंश्च स्नुश्च नश्च उदंश्च हृच्च असंश्च यकंश्च शकंश्च शीर्षंश्च दोषंश्च ते । शस् आदिर्यस्य सः, शसादिश्च पिश्च तत् तस्मिन्, पुंस्त्वं सौत्रत्वात् । पौ शीर्षे भवः शीर्षण्यः केशः, यूषण्यं हृद्यमित्यादि । ङौ शसादिष्वेवेति परे (१) । सुपदी, व्याघ्रपदी कुले इति तु ङ-से पादादेशे पात् पत्

(१) उक्तञ्च दुर्गादासेन "शसादिग्रहणेन तत्पूर्वविभक्तेर्निराशात् क्लीबे औकारस्य प्रित्वेऽपि तत्र न स्या"दिति ।

पाविति पदादेशः। केचित्तु दीर्घपदी दीर्घदोषणी दीर्घदोष्णी इत्याहुः। घिभिन्नस्यादेरचः पित्वात् (१)। वा शब्दस्य व्यवस्थया क्वचिन्न स्यात्, क्वचिदन्यत्रापि, तेन--

पादस्य पदतदर्थय-हति-काषि-हिमाज्यातिगे वा तु शब्द-घोषमिश्रनिष्के। पादस्य पत् स्यात् अतदर्थये इत्यादौ च, शब्दादौ तु वा। पादाय हितः पद्यः पन्थाः, पद्धतिः, पत्काषी, पद्धिमं, पदाजिः, पदातिः, पद्गः। पच्छब्दः, पद्घोषः, पन्मिश्रं, पन्निष्कम्। पक्षे पादशब्द इत्यादि। अतदर्थय इति किं—पाद्यं पादाय वारिणि।

ऋचः शसि। ऋक् सम्बन्धिनः पादस्य पत् स्यात् शसि (२) परे। पच्छो गायत्रीं जपति। ऋचः किं—पादशः कार्षापणं ददाति।

गोपहतयोः पदः। पादस्य पदः स्याद् गोपहतयोः (३)। पदगः, पदोपहतः।

दन्तशीर्षयोर्दच्छीर्षणौ न तयाचोः। अनयोरेतौ नस्तः क्रमादनयोः। दन्ते भवो दन्त्यः, स्थूलशीर्ष्णोऽपत्यं स्थौलशीर्षिः, मृगशीर्ष्णा युक्ता मार्गशीर्षी तिथिः। अचि किं—शीर्षण्याः केशाः।

नाम्नि दादिस्थस्योदकस्योदन् धि-वास-पेष-वाहने च वा तु

(१) अत्रायमाशयः—केचित् पण्डिताः शसादिष्वेवेति नाङ्गीकुर्वन्ति, तेषां मते क्लीबे औकारस्यापि पित्वात् तत्रादेशः स्यादिति।

(२) शसि प्रत्यये इत्यर्थः।

(३) गे उपहते च इत्यर्थः।

भारादौ। दादिस्थस्योदकस्य उदन् स्यात् नाम्नि, ध्यादौ च, भारादौ तु वा। उदकस्य मेघः उदमेघो नाम कश्चित्, तस्यापत्यम् औदमेघिः। उदवाहः, उदपानः कूपः, अनपेक्षितावयवार्थो संज्ञेयम्। उदकं धीयते यत्र उदधिः समुद्रः, असंज्ञायामप्युदधिः कुम्भः, उदवासः, उदपेषं शुण्ठीं पिनष्टि चूमन्तः, उदवाहनः। उदभारः, उदकभारः। भारादिर्यथा—

भारहारौ च वाहश्च विन्दु-वीवध-शक्तवः।
ओदनो वज्रविषयौ (१) गाहो मन्थः प्रकीर्त्तितः।

अस्थहसादेः पूरयितव्ये वा। अस्थहसादेरुदकस्य उदन् स्याद्वा पूरयितव्ये। उदकस्य कुम्भः उदकुम्भः, उदककुम्भः। स्थहसादेस्तु उदकस्थाली। पूरयितव्ये किं उदकगिरिः।

परदस्योदो नाम्नि। परदस्योदकस्य उदः स्यान्नाम्नि। लोहितोदः चीरोदः लवणोदः। नाम्नि किं लवणोदकः कुम्भः।

नासिकाया नस् तस्-चुद्रावर्ण-नगरये। नासिकाया नस् स्यात् तसि चुद्रे वर्णनगरभिन्ने ये च। नस्तः, नःचुद्रः, नस्यः। वर्णनगरये तु-नासिक्यो वर्णः, नासिक्यं नगरम्।

हृदयस्य हृल्लासलेखयोः ष्णा-शोक-रोग-शल्ये तु वा। हृदयस्य हृत् स्यात् लासलेखयोः परयोः, वा तु ष्णादौ। हृल्लासः हृल्लेखः। सौहृद्यं हृच्छोकः हृद्रोगः हृच्छल्यम्। पक्षे सौहृदय्यमित्यादि।

पाददन्तेति सूत्रं छान्दसमिति परे। अप्रशस्तं निशि स्नानम्। पञ्चाशमुद्वर्त्तितस्य च। हृदि विनिहितरूपः। दोष्णां बलात्

(१) विषय इत्यत्र विरस इति पाठान्तरम्।

११८। सदानोऽल्लोपोऽम्वस्यात् पौ वा त्वीङ्योः।

( सदा ।१।, अनः ६।, अत्-लोपः १।, अ-म्व-स्यात् ५।, पौ ७।, वा ।१।, तु ।१।, ईङ्योः ७॥ )।

अनोऽकारस्य नित्यं लोपः स्यात् पौ परे, ईङ्योस्तु वा, नतु मस्यात् वस्याच्च परस्य। यूष्णः यूष्णा।

११९। नो लुप् फेऽधौ।

( नः ६। लुप् ।१।, फे ७।, अधौ ७। )।

नस्य लुप् स्यात् अधौ फे परे। यूषभ्यामित्यादि।

ङौ—यूष्णि यूषणि यूषे। मासः मासा माभ्यामित्यादि।

पक्षे घौ च रामवत्। पदादयः पृथक्शब्दा इत्येके।

---

मन्त्रबलं गरीयः। निस्तुषस्यास्य मुद्गस्य पीतं यूष्णि निरामय इत्यादिप्रयोगदर्शनात् भाषायां ग्रन्थकृता कृतम्।

११८। सदा। अतो लोपोऽल्लोपः, म च व च म्व, म्व च तत् स्यश्चेति म्वस्यः, न म्वस्यः अम्वस्यस्तस्मात्, ई च ङिश्च तौ तयोः। औक्ष्णः पौष्णः धार्त्तराज्ञ इत्याद्यनेनैव सिद्धे हनषनधृतराज्ञामिति सूत्रमेवं ज्ञापयति, ताच्चे सर्व्वत्र अनो नाकारलोप इति, तेन राजन्यः मूर्द्धन्य इत्यादि सिध्यति। पूर्व्व वाधिकारनिवृत्त्यर्थं सदेति, (१) अन्यथा जरसादेशः पदाद्यादेशाश्च नित्य स्युरित्यर्थः।

११९। नो। न इति प्रकृतिनान्तस्य नः। लेरधिकारात् लेरेव। तथाच प्रकृतिनान्तस्य ले नस्य लुप् इत्यर्थः, तेन राजा

---

(१) "केचित्तु सदेति मुख्यत्वे गौणत्वे चेत्यर्थः, तेन पूजितपूष्णः पीतयूष्ण इत्यादि इत्याहुः"—का-वि।

## १२० । सङ्ख्या वि-सायाद्वाङ्कोऽह्न् ङौ ।

(सङ्ख्या वि-सायात् ५।, वा, ।१।, अङ्क: १।, अह्न् ।१।, ङौ७।) ।

सङ्ख्या-वि-सायेभ्य: परस्याङ्क इत्यस्य अह्न् वा स्यात् ङौ ।

द्व्यह्नि द्व्यहनि द्व्यह्ने, व्यह्नि व्यहनि व्यह्ने, सायाह्नि साया-हनि सायाह्ने ।

विश्वपा: विश्वपौ विश्वपा:, विश्वपां विश्वपौ ।

## १२१ । धोरा लोपोऽच्यधौ ।

( धो: ६।, आ ।६।, लोप: १।, अचि ७, अधौ ७। ) ।

धोराकारस्य लोप: स्यात् अघावचि परे । विश्वप:, विश्वपा विश्वपाभ्यामित्यादि । एवं शङ्खादय: । धो: किं—हाहा: हाहा हाहाभ्यामित्यादि । शेषं विश्वपावत् । हरि: ।

---

ज्ञानौ युषभ्यामित्यादौ स्यादेव । न तु प्रशान् भवान् भवन् अहन्नित्यादौ । कथं सुतनमाचक्षाण: सुवन्नित्यादौ लुप् न स्यादिति, उच्यते, अकारस्थानिवद्भावात् । परैकदेशिन: (१) पदादयोऽपशब्दा इत्याहु: । ये तु पदादय: पृथक् शब्दा इति वदन्ति तेषां मते पत् पदौ पद इति भवन्ति ।

१२० । संख्या । संख्या च विश्व सायश्च तत् तस्मात् । अङ्क इति सर्व्वैकदेशसंख्यातसंख्याव्यादित्यादिष्टाङ्क:, यथैं प्रौ । द्व्यङ्कीति ङौ अह्नादेशे वा अल्लोप: । पक्षे द्व्यहनि इति । उभय-त्यक्तपक्षे द्व्यङ्के । एवमन्यत्र ।

१२१ । धोरा । आ इति लुप्तषोक्तं दम् । न विरधि-

---

(१) केचित् पण्डिता इत्यर्थ: ।

१२२। युङ्ग्रामौ यू।

( युङ्ग्राम् ५॥, औ ।१।, यू २॥ )।

इकारोकाराभ्यां पर औ क्रमादिकारोकारौ प्राप्नोति। हरी।

१२३। णुर्धि-जस्-ङितसु।

( णुः १।, धि-जस्-ङितस् ७॥ )।

स्तस्मिन्, अज्-विशेषणम्। अर्थलाघवात् पाविति न कृतं, तथाहि पेरव्यवहिताचेपप्रकृतिकत्वेन विलम्बप्रतिपत्तिकत्वादाह अचपाविति। "तद्धेतोरेव तदस्तु किं तेन" इति न्यायात् क्वचित् शब्दलाघवादर्थलाघवोऽपि न्याय्य इति। विश्वप इति विश्वं पातीति पाधोः क्विप्। एवं सोमपः। तातं तायते इति तातताः तान् तातत:। हाहा इत्यव्युत्पन्नपक्षमाश्रित्य इदमुक्तम्। हाशब्दं जहाति इति व्युत्पत्त्या हाह इति। केचित्तु ब्राह्मणवाचकस्य आशब्दस्यापि अः पश्य, ए देहि, इ विरमति (१)। अस्मन्मते तु आः पश्य, ऐ देहि, ए विरमति इत्यादि। कथं क्लौ यप् से इति? सौत्रत्वात्। (२)

१२२। युङ्ग्राम्। इश्च उश्च तौ, ताभ्यां तमितं करोति। अवयवापेक्षया इम्। इह लाक्षणिकयुतोऽपि ग्रहणात् अतिस्त्री चित्रगू इत्यादि स्यात्। यू इति द्वीदम्।

१२३। णुर्धि। ङ इत् येषां ते ङितः। धिश्च जश्च ङितश्च

(१) विरमतीति शत्रन्तं सप्तम्यन्तं पदम्।

(२) आवन्तभिन्नानामथाकारलोप इति वार्त्तिकम्। अतएव आचार्य्येण तन्मतमवलम्ब्य व्याद्रनञः क्लौ यप्से इत्यादौ क्लादिशब्दस्याप्याकारो लुप्त इति दुर्गादासः।

इदुतो र्णुः स्यात् धौ जसि ङिति च परे। हरयः।

त्यलोपे त्यलक्षणम्। हे हरे। हरिं हरी हरीन्।

## १२४। टादसश्चास्त्रियान्तु ना।

(टा।१।, अदसः ५।, च।१।, अस्त्रियां ७।, तु।१।, ना।१।)।

इदुद्भ्यामदसश्च परष्टा ना स्यात्, नतु स्त्रियाम्।

हरिणा हरिभ्यां हरिभिः, हरये हरिभ्यां हरिभ्यः।

ते तेषु। ङित इति जस् साहचर्य्यादलाक्षणिकस्यैव (१) ग्रहणं, तेन मत्यै सख्ये इत्यादौ न स्यात्। इदुदुभ्यां विहितेषु धिजस्ङित्सु गुरित्यर्थः। तेन हे अतिनदे हे चित्रगो इत्यादौ स्यात्। न तु हे नदि हे सुभ्रु इत्यादौ। वरतनु सम्प्रवदन्ति कुक्कुटाः। सुतनु सत्यमलङ्करणाय ते इत्यादौ तु हे से पुनस्तन्वादित्वादूपि सुभ्रू हीत्यनेन स्वः। (२)

१२४। टा। न स्त्री अस्त्री तस्याम्। अदोग्रहणं सर्व्वकार्य्यानन्तरं मात्स्वर्थावु ऊ इति ज्ञापनार्थं, तेन असुष्मै अमुष्मै इत्यादि स्यात्। द्विलिङ्गस्य तु यदा पुंस्येव वृत्तिस्तदा स्यादेव, तेन पटुना पुंसा इत्यत्र स्यात्, न तु पट्वा स्त्रिया इत्यादौ।

---

(१) साक्षात् ङित एवेत्यर्थः।

(२) त्यलोपे इत्यादि। येन केनापि शब्देन प्रत्ययलोपे प्रत्ययसम्बन्धि कार्य्यं स्यादिति। यथा राजा इत्यादौ सेर्लोपे दीर्घः। एवं वाचामीशो वागीश इत्यादौ क्लेर्लुक् त्ये चेति लुक्शब्देन विभक्तेर्लोपे कृते विभक्त्यन्तविहिता पदसंज्ञा सिद्धा इति दुर्गादासः।

त्यलक्षणमिति कार्य्यमित्यस्य विशेषणम्। तथाच त्यः-प्रत्ययो लक्ष्यते उपलक्ष्यतेऽनेनेति त्यलक्षणम्, अर्थात् प्रत्ययस्य लोपे तस्मिन् परे विहितं यत्कार्य्यं तद्भवतीति। का-वि।

१२५। ङसेङो लोपः।

( ङस्य ६।, एङः ५।, लोपः १। )।

एङः परस्य ङसिङसो ङस्य लोपः स्यात्।

हरेः हरिभ्यां हरिभ्यः। हरेः हर्य्योः हरीणाम्।

१२६। युङ्गां ङे डौः।

( युङ्गां ५॥, ङेः ६।, डौः १। )।

इदुङ्गां परस्य ङेर्डौः स्यात्, ड इत्।

---

१२५। ङसे। एङो ग्रहणं सामान्यस्यैङः प्राप्त्यर्थं, तेन तेः देः गोः द्योः मह्नोः स्मृतोरित्याद्यपि स्यात् (१)।

१२६। युङ्गां ङेः। युङ्गामिति पूर्व्ववत्। युता ङेरौ इति कृते हरौ शम्भाविति सिद्धं भवति, एवं सति विंशतेस्ते-स्वङाविव्यङो ग्रहणं विनापि विंशताविति च सिध्यति, तथापि डौ करणं, येन विधिस्तदन्तस्येति न्यायात् प्राप्तसमुदितादेश-निवृत्त्यर्थम् (२)। अथवा लोपस्वरादेशयोः स्वरादेशो विधि-र्बलवान् इति न्यायात् व्य-स्वस्तिशब्दस्य स्वस्ताविव्यनिष्टवार-णार्थम्। कामवाचिन इशब्दस्य तु आद्यन्तवदेकस्मिन्निति न्यायात् औ इति।

---

(१) तेः देः इति तेड्ङ देवने, देङ ङ तु देवने इत्यनयोः क्विपि रूपम्। महांश्चासौ उश्चेति मह्नोः। स्मृत उर्येन स स्मृतोः।

(२) इकारारोकाराभ्यां सहितस्य ङेरित्यक्तौ इकारोकारान्तशब्दसहित स्यैव ङेरौकारप्रसक्तिनिवृत्त्यर्थमित्याशयः।

१२७। टे र्लोपो ङिति विंशतेस्तेस्त्वडौ।

( टेः ६।, लोपः १।, ङिति ७।, विंशतेः ६।, तेः ६।, तु ।१।, अडौ ७। )।

ङिति परे पूर्व्वस्य टे र्लोपः स्यात्, विंशते स्तेस्त्वडौ।

हरौ हर्य्योः हरिषु। एवं औपत्यग्निरव्यादयः।

१२८। सख्यृद्भ्यां से डाऽधेः।

( सख्यृद्भ्यां ५॥, सेः ६।, डा ।१।, अधेः ६। )।

सखिशब्दात् ऋकारान्ताच्च परस्य से र्डा स्यान्न तु धेः।

सखा। अधेः किं—हे सखे।

१२९। घौ त्रिः। ( घौ ७, त्रिः १। )।

सख्यु ऋकारस्य च त्रिः स्यादधौ घौ परे।

सखायौ सखायः, सखायं सखायौ सखीन्।

---

१२७। टेर्लोपः। न ङिरङिस्तस्मिन्। विंशतेस्तेस्त्वङा-विति, ङौ विंशतौ पूर्व्वेण (१) टिलोपः। ङिभिन्ने ङिति तेर्लोपः। यथा—विंशः, विंशतिमाचष्टे विंशयति इत्यादि। (२)

१२८। सख्यृत्। सखा च ऋच्च तौ ताभ्याम्। नधिरधि-स्तस्य। अधेरिति पृथक्-टकरणात् क्वचिन्न स्यात्, तेन अर्ज्जुनस्य सखा कृष्णः कृष्णस्य सखिरर्जुन इति भारते। आर्षमित्यन्ये।

१२९। घौ। पूर्व्वसूत्रादधेरित्यनुवर्त्तते ऋत्साहचर्य्यात्, तेन हे सखे इत्यत्र न त्रिः।

---

(१) पूर्व्वेण अस्य सूत्रस्य पूर्व्वांशेनेत्यर्थः।

(२) ङिवर्ज्जनात् कृतङित एव अप्रकृत्यं न त्वतिदिष्टस्य, तेन विंशतिमाचष्टे

१३० । सख्युष्टाङिताम-आ-ए-ङसुसौ ।

( सख्युः ५।, टा-ङितां ६।।।, आ ए ङस् ङस् औ ।१।।। ) ।

सख्युः परेषां टा-ङितां स्थाने आ ए ङस् ङस् औ एते क्रमात् स्युः । सख्या सख्ये सख्युः सख्युः सख्यौ । शेषं हरिवत् ।

१३१ । पत्युरसि । ( पत्युः ५।, असि ७। ) ।

पतिशब्दात् परेषां टाङितां स्थाने आ ए ङस् ङस् औ एते

---

१३० । सख्युः । ङ इत्येषां ते ङितः, टाश्च ङितश्च ते तेषाम्, आश्च एश्च ङश्च ङश्च औश्च ते, सौत्रत्वाज्जसो लुक् वि-सन्ध्यभावौ च । सख्या सख्ये सख्युः सख्युः सख्यौ । सख्यौ इत्यत्र लाक्षणिकत्वात् न णः । क्वचिदपवादविषयेऽप्युत्सर्गोऽभिनिविशते इत्युक्तः सखिना वानरेन्द्रेणेति । भाष्ये तु गौण्येऽपि अतिसखा अतिसखायौ अतिसख्या इत्याद्युक्तम् । न्यासे तु सख्यर्थप्राधान्य एव, तेनातिसखिः अतिसखी अतिसखिना इत्यादौ न स्यात् इत्युक्तमिति । (१)

१३१ । पत्युः । न सः असस्तस्मिन् । पतिना नीयमानायाः पुरः शुक्रो न दुष्यति । गते मृते प्रव्रजिते क्लीवे च

---

त्रिंशतयतीत्यादौ ङिभिन्नेऽपि अतिदिष्टत्वात् न तिलोपः, किन्तु सामान्यङिति टिलोप एव इति । का-मि ।

(१) "स्त्रियान्तु नित्येवन्तत्वात् सखी सख्यौ सख्य इत्यादि गौरीवत । क्लीवेऽस्य न प्रयोगः । तथाच—सखा मित्रे सहाये ना वयस्यायां सखी मता इति मेदिनी । यत्तु अहो धियुत्वं तव खण्डितं न स्मरस्य सख्या वयसाप्यनेन इति नैषधे वयसा इत्यस्य विशेषणं सख्या इति, तत्पुंस्येव अजहल्लिङ्गत्वात् । अतएव हेतुस्त्वद्ब्रह्मवर्चं सखिमिति रघुः"—इति दुर्गादासः ।

क्रमात् ख्यु र्नत् से। पत्या पत्ये पत्युः पत्युः पत्यौ। असे किं-- श्रीपतिना इत्यादि। शेषं हरिवत्। कतिशब्दो व्यान्तः।

## १३२। डतिसङ्ख्याष्णो जस्शसो र्लुक्।

( डति-संख्या-ष्-ण: ५।, जस् शसोः ६॥, लुक् ।१। )।

डत्यन्तात् षान्त-नान्त-संख्यायाश्च परयो र्जस्शसो र्लुक् स्यात्। कति कति कतिभिः कतिभ्यः कतिभ्यः कतीनां कतिषु। एवं यति तति।

डति-त्र्य-ष्णान्तसंख्यास्मद्-युष्मदः सदृशास्त्रिषु।

त्र्यादयः संख्याशब्दा व्यान्ताः।

पतिते पती। पतौ जीवति या नारी उपोष्य व्रतचारिणी। आयुष्यं हरते भर्त्तुः सा नारी नरकं व्रजेत्॥ दुहितुः पतौ। सीतायाः पतये नम इति पूर्ववत् (१)। क्रान्दर्ममिति परे।

कतिशब्दो व्यान्त इति। अनिश्चितबहुत्वविशेषार्थकत्वात् इति भावः।

१३२। डति। ष च न च ष्ण, संख्या चासौ ष्ण चेति संख्याष्ण, डतिश्च संख्याष्ण च तत्तस्मात्। डतिर्डत्यन्तः, संख्याष्ण षान्त नान्त संख्या इत्याह डत्यन्तादित्यादि (२)।

डतित्र्य। डतिश्च त्र्यश्च ष्णान्तसंख्या च युष्मच्च अस्मच्च ते।

---

(१) पूर्ववत् सखिना वानरेन्द्रेणेतिवत्।

(२) एभ्यः क्लीबेऽपि कति फलानि षट् पत्नानि पञ्च मूलानि इत्यादौ जस्-शसो: शिं बाधित्वा लुगेव। अष्टौ अष्ट फलानि इत्यादौ ड्डौ लुक् च स्यात्। न च निमित्तगतविशेषतो लिङ्गगतविशेषस्य बलवत्त्वात् सर्व्वाणि इत्यादौ यथा स्त्रिसंज्ञा विहितमिकारादेशं बाधित्वा जश्शसोरित्यनेन शिः स्यात् तथात्रापि शिरेवास्तु

१३३। त्रेस्त्रयङ् नामि।

( त्रेः ६।, त्रयङ् ।१।, नामि ७। )।

त्रिशब्दस्य त्रयङ् स्यात् नामि परे, ङित्त्वादन्त्यस्य स्थाने। त्रयाणां त्रिषु। द्विशब्दो द्वान्तः।

---

ष्णान्तः पूर्ववत्। त्रिषु लिङ्गेषु सदृशाः समानरूपाः, एषां लिङ्गकृतप्रयोगवैलक्षण्यं नास्तीत्यर्थः(१)। डति-ष्ण्य ष्णान्तसंख्यानां मुख्य एवायं नियमः, पूर्वसूत्रेण ष्णात्लुक् ङेरित्यनेन च मुख्य एव लुग्विधानात्। तेन प्रियकतीनि सुस्वस्तीनि प्रियषंषि प्रियपञ्चानि कुलानीत्यादौ न स्यात्। य-से तु प्रियंकति इत्यादौ स्यादेव। एषां सलिङ्गत्वात् प्रियाः पञ्च स्त्रियो यस्य प्रियपञ्चा युवा इत्यादौ पुंवद्भावः।

त्र्यादय इति। त्र्यादीनामेकत्वद्वित्वाबोधकत्वात् बहुत्वमेव। अयं नियमस्त्वष्टादशशब्दपर्यन्तो, विंशत्यादेः क्वविधानात्।

१३३। त्रेः। आमीत्यकरणात् क्वचिन्न स्यात्। तथाच त्रीणामपि समुद्राणां युगान्ते तु समागम इति टद्धतिङन्तः। मुख्यस्यैवायं विधिस्तेन अतित्रीणाम्। अन्ये तु गौणेऽपि अतित्रयाणामित्याहुः।

---

(१) एषां पुंस्त्रीनपुंसकलिङ्गविहितकार्य्यं नास्तीत्यर्थः। अतएव युष्मदस्मद्भ्यां शसो नकारं विधास्यति। एवं कति स्त्रिय इत्यत्र पाच्छोणादीत्यादिना ईप न स्यात्, पञ्च स्त्रिय इत्यत्र च नान्तत्वादीप् न स्यादिति। न च निमित्तगतविशेषतो लिङ्गगतविशेषस्य बलवत्त्वात् सर्व्वाणि इत्यादौ यथा स्त्रिसंज्ञाविहितमिकारादेशं बाधित्वा जसशसोरित्यनेन शिः स्यात् तथात्रापि शिरेवास्तु इति वाच्यं.

### १३४। त्यदां टेरः क्तौ।

( त्यदां ६॥।, टेः ६।, अः १।, क्तौ ७। )।

त्यदादीनां टेरकारः स्यात् क्तौ परे।

द्वौ द्वौ, द्वाभ्यां द्वाभ्यां, द्वयोः द्वयोः।

वातप्रमीः वातप्रम्यौ वातप्रम्यः।

१३४। त्यदाम्। ब्वनिर्द्देशो हि गणार्थः, स्विसंज्ञस्यैव ग्रहणात्। अतितत् विप्रः, अतितत् स्त्री, अतितदौ कुले इत्यादौ न स्यात्। सूत्रे टेरत्वाभावः सौत्रत्वात्। दभौ यौ इत्यत्र भाव्यमानः(२) अक् णं न गृह्णाति इति ज्ञापकात् अकारस्यानित्त्वेऽपि न णंग्राहकत्वम्। प्रकरणात् क्ताविति प्राप्ते क्तिग्रहणात् युष्मदस्मदोस्तमि गौणेऽपि स्यात्, (३) द्विशब्दस्य तमि न स्यात्, तेन अतित्वान् अतिमान् इत्यादौ स्यात्, न तु त्वत्तः मत्तः द्वित इत्यादौ।

इतिव्यपणान्न इत्यादिना इत्यन्तादीनां लिङ्गत्रये साम्यनियमेन लिङ्गविहितकार्य्यनिषेधादिति दुर्गादासः।

(१) भाव्यमान उत्पाद्यमान आदेशः प्रत्ययश्चेति यावत्।

(२) युष्मदस्मदोर्गौणेऽपि टेरः स्यात्, मुख्ये तु तमि प्रत्यये परे न स्यादित्यर्थः।

अत्र कार्त्तिकेयसिद्धान्तः "न च त्यद्भ्रो डः क्ताविति वाच्यं, स इत्यादौ तद्शब्दस्य अकारव्यवधाने सत्वाभावादनिष्टापत्तेः। टेर्विहिताकारस्य प्रकृतिभक्तत्वात् सत्वं स्यादेव। ननु त्यदां डङ् क्ताविति कृते प्रकृतिभक्तत्वात् सत्वादिकार्य्यं भवितुमर्हति कथमेतद्गौरवमिति.. ...उद्वृत्तपन्थः समधिकफलमाचष्टे इति न्यायात् त्यदादीनां मध्ये युष्मदस्मदोर्गौणे स्विसंज्ञाभावेऽप्यत्वविधानार्थमित्याह। अत्र प्रकरणादेव क्तिप्राप्तौ क्तिग्रहणं, विद्यमानविभक्तेस्तत्स्थानजातस्य च प्राप्त्यर्थम्। तेन स तौ ते यतः तत इत्यादि। अतएव द्वियुष्मदस्मदो न तसीति वक्तव्यात् निषेधः सङ्गच्छते"... ..इत्यप्याह। त्यदां डङ् क्तौ इति यन्न कृतं तत्प्रक्रियालाघवार्थमिति कश्चित्।

१३५ । यूतोऽम्शसो म्नावदीधोः ।

( यूतः ५।, अम्शसोः ६॥, म्नौ १॥, अदीधोः ५। ) ।

दी-धुवर्जादीदूदन्तात् परयोरम्शसोः स्थाने क्रमात् म-नौ स्तः। वातप्रमीं वातप्रम्यौ वातप्रमीन् वातप्रम्या वातप्रमीभ्यामित्यादि । एवमतिलक्ष्म्यादयः (१) । सुधीः ।

१३६ । धोरियुवचि ।

( धोः ६।, इय्-उव् ।१।, अचि ७। ) ।

धोरीदूतोः स्थाने क्रमादियुवौ स्तो ऽचि परे ।

सुधियौ(२) सुधियः इत्यादि । एवं सुश्री-यवक्र्यादयः । प्रधीः ।

१३५ । यूतः । ईश्च ऊश्च तौ, ताभ्यां तमितं करोति, यूत् तस्मात्, अम् च शश्च तौ तयोः, मश्च नश्च तौ, दीश्च धुश्च तत्, न तत् अदीधु तस्मात्, पुंस्त्वं सौत्रत्वात् । वातप्रमीमिति वातशब्दात् प्रपूर्व्वे मा-धोः क्वीः । एवं कर्कन्धूं कर्कन्धून्, ऊरयमौणादिकः । केचित् स्त्रियामीपि दीसंज्ञत्वात् वातप्रमीं वातप्रमीः, ऊपि कर्कन्धूं कर्कन्धूः इत्याहुः ।

१३६ । धोः । इय च उव् च तत् । पूर्व्वतो यूत इति त्तिं

(१) एवमतिलक्ष्म्यादय इति । यूत् स्त्रेयत्र दीत्यत्र एवकारेण नित्यस्त्रीलिङ्ग-शब्दस्य नदीसंज्ञा विहिता, अत्र तु पुंयोगात् पाक्षिकत्वेन नदीसंज्ञाभावात् धातुत्वा-भावाच्च वातप्रमीशब्दवदेषां रूपमिति ।........भाष्यकारक्रमदीश्वरौ तु पुंयोगे-ऽप्येषां नदीत्यमङ्गीकृत्य सर्व्वविभक्तिषु स्त्रीलिङ्गवदुदाजह्रतु रिति । का-सि ।

आदिशब्दात् अतितन्त्री बहुप्रेयसीत्यादयः । ऊकारान्तेषु तु अतिचमू, अतिवधूप्रभृतयः ।

(२) शोभना धीर्य्यस्य स सुधीः, क्विबन्तत्वादस्य धातुत्वं वर्त्तते । विच्क्विबन्तो हि धातुत्वं जहाति न जहाति वेति वचनात् इति । का-सि ।

१३७। कव्याद्यनेकाचोऽस्यादृन्पुनर्वर्षाकारान्यभूसुधियोर्य्वौ ।

(कव्याद्यनेकाचः ६।, अस्यात् ५।, अदृन्—सुधियोः ६॥, य्वौ१॥)।

कादे र्व्यादेरनेकाचश्च धो रीदूतोरस्यात् परयोः क्रमात् यवौ स्तः अचि परे, नतु दृन्भू-पुनर्भू-वर्षाभू-काराभूभ्योऽन्यस्य भू-शब्दस्य सुधियश्च । प्रध्यौ प्रध्यः इत्यादि । एवं दौध्यादयः ।

कव्याद्यनेकाचः किं—शुद्धधियौ । अस्यात् किं—यवक्रियौ । नीः नियौ ।

विपरिणम्यानुवर्त्तयन्नाह ईदूतोरिति । एवं सुश्री-यवक्रादय इति । आदिशब्दात् इमिच्छति इति क्विप्, ईः इयौ इयः, एवं उमिच्छति इति ऊः उवौ उवः इत्यादि । प्रकरणात् क्विरचैव, तेन सुध्यर्थं इत्यादौ न स्यात् (१) ।

क्रीश्वोरादिङसोर्व्वा । क्रिय आदौ श्वुवोङसि इयुवौ वा स्तः । क्रियादिः क्रादिः श्वुवः श्वोः । अनुकरणादिलन्यः ।

१३७। कंच व्यंच कव्यं, कव्यमादिर्यस्य सः, कव्यादिश्च अनेकाच्च तत्तस्य, न स्यः अस्यः तस्मात्, दृंश्च पुनश्च वर्षाश्च काराच ता आदयो यस्य सः, तस्मादन्यः दृन्पुनर्वर्षाकाराद्यन्यः, स चासौ

(१) सुध्यादयः पुंवदित्यादौ इयादेशाभावं दर्शितवताचार्य्येण अत्राचीति स्यादेरेवेति ज्ञापितं, सामान्यशब्दोऽपि कचिद्विशेषपरो भवतीति न्यायात् ।......किञ्च ज्ञापकसिद्धमनित्यमिति न्यायात् कचिदन्यत्रापि भवति, तेन तुराषाहं पुरोधाय धाम स्वायम्भुवं ययुरिति कालिदासः । विशेषविधित्वाद्दीर्घस्यापि बाधकोऽयं, तेन ङौ सुधियि इत्येव इति दुर्गादासः ।

भूश्चेति, पश्चात् स च सुधीश्च तौ, दृन्पुनर्वर्षाकाराद्यन्यभूसुधियौ, न तौ अदृन्पुनर्वर्षाकाराद्यन्यभूसुधियौ तयोः। यच वच तौ। धोरिति धोरवयवभूतयोरित्यर्थः। दृन्वित्यादि, दृन्निति हिंसार्थव्ययं तस्माद्भूधोः क्विप्, दृन्भूः स्त्री सर्पचक्रयोरिति• दकारादौ मेदिनी। दृन्भूः स्त्री कुलिशे चक्रे दृन्भूः स्त्रीपुंसयोरहाविति दकारादौ विश्वः। दन्भेरूप्रत्ययेन निपातितमिति भाष्यम्। कारास्थाने करं पठित्वा करभूः करभ्वौ करभ्व इत्यादि। एकदेशविकृतमनन्यवद्भवतीति न्यायात् कारभ्वौ इति केचिदाहुः। एषामियुवोदूङ्गित्वात् स्त्रियां दीसंज्ञायां दृन्भ्वै दृन्भूनां काराभ्वै काराभूणामिति।

यदा स्याद्युत्पत्तेः प्राक् सस्तत्रैवायं विधिरिति भाष्यं, तेन ईषद्भियः कुधियः अभियः धर्म्मधियः नानाधियः दावलुवा, वृश्चिकभिया पलायमानस्याशीविषमुखे निपात इत्यादौ स्याद्यन्तेन से न स्यात्। वृश्चिकभियेति मस्तन्वे षो-विवक्षयेति चान्द्राः। व्यानां मध्ये गेरेव विधानादीषद्भिय इत्यादौ न स्यादित्यन्ये। वस्तुतस्तु दृन्पुनर्वर्षाकाराभ्वसुधीकव्याद्यनेकाचोऽस्यादृ य्वौ इत्य-करणात्, उत्सर्गत्वाद्वा ईषद्भिय इत्यादौ न स्यात् (१)। दीध्यादय

(१) दृन् हिंसा तदर्थं भवतीत्यर्थः। एषां लिङ्गार्थनिर्णयस्तु, दृन्भूः स्त्री कुलिशे चक्रे दृन्भूःस्त्रीपुंसयोरहाविति विश्वप्रकाशात्। पुनर्भूःस्यात् द्विरूढ़ायां दृन्भू पन्नग-वज्रयोः। पुनर्नवायां वर्षाभूःस्त्रियां किञ्जुलके प्लवे। काराभूर्निगड़स्थाने क्रियाया-मपि चेष्यते इति कोषाच्च। केचित्तु कारास्थाने कारं पठित्वा कारभ्वौ कारभ्व इत्युदाहरन्ति। तथाच काराभ्वेष्यते इति वामनः। वर्षाद्दृन्पुनःकाराद्भुव इति चान्द्राः। कारशब्दो घञन्तो वृत्तौ भाष्ये च दृश्यते इति रक्षितश्च। कारस्थाने

## १३८। न्याप्दीभ्यो ङेराम्।

(नी-आप्-दीभ्यः ५।॥, ङेः ६।, आम् ।१।)।

नीशब्दादापो दाश्च परस्य ङे-राम् स्यात्। नियाम्। शेषं सुधीवत्। अग्रणीः अग्रण्यौ। ङौ-अग्रण्याम्। शेषं प्रधीवत्।

---

इति। दीधीधीः क्विप्। दिधिष्वादय इति लिपिकरप्रमादः। यतो दधिपूर्व्व-स्यतेरूत्वे निपातनमिति (१)। आदिना नारी-वाचरती नार्य्यौ विप्रस्य, मानमिच्छति मान्यः, सखेवाचरते सख्ये इत्यादिसंग्रहः। अवयवस्त्रीत्वान्नार्य्या इति भाष्यम्। शुद्ध-धियाविति शुद्धा धीर्ययोरिति वाक्यम्।

१३८। न्याप्। नीश्च आप्च दीच ताः ताभ्यः। नीत्यस्य गौणागौणग्रहणं, तेनातिनियां प्रियनियामित्यादि। अग्रण्यामिति अग्रे नयतीति क्विप्, णत्वेऽपि एकदेशविकृतमनन्यवद्भवतीति

---

करं पठित्वा करभ्वौ करभ्व इत्यपि केचित्। हन्भ्वादीनां इयुवस्थानभिन्नानां नित्यस्त्रीत्वाद्दीसंज्ञायामादौ नुमागमे, हन्भूनामित्यादि। किन्तु हन्भूशब्दस्य सर्प-वाचित्वे पाक्षिकस्त्रीत्वाद्दीसंज्ञाभावे हन्भूनामिति। अत्रापि अचीति स्यादेरेव तेन प्रधीश्वर इत्यादौ न प्रसङ्ग इति दुर्गादासः। कारापूर्व्वस्यापीति काशिका। ६।४।८४।

प्रकृष्टा धीर्यस्येति व्युत्पादितस्य पुंलिङ्गप्रधीशब्दस्यात्र यकारविधानेन "सुष्ठुधीः प्रकृष्टा धीरिति नित्यस्त्रीत्वे सुधीप्रध्यौ ओनन्त्योश्च"इति वक्ष्यमाणवचनेन च यदा स्याद्युत्पत्तेः प्राक् स्त्रत्वैवायं विधिरिति मतमनादृतमाचार्य्येणेति। ईषद्भिव इत्यादौ तु क्वचिदपवादविषयेऽप्युत्सर्गोऽभिनिविशते इति न्यायान्न यवौ स्त इति केचित्।

(१) दध धारणे इः। दधिं धैर्य्यं स्यति, जम्ब्वादित्वादुप्रत्यये मूर्द्धन्यान्ता निपा-तिता इत्यमरटीका।

## १३९ । त-तज-खादीयो ङोवोः ।

( त-तज-खात् ५।, ईयः ५।, ङः १।, वा ।१।, उः १।) ।

तात् तस्थानजाद्दर्णात् खाच्च परादीकारजात् यकारात् परो ङसिङ्गो ङ उः स्याद्वा । सुत्युः सुत्यः । लून्युः लून्यः । सुख्युः सुख्यः ।

शम्भु हरिवत् साध्यः ।

शम्भुः शम्भू शम्भवः, शम्भुं शम्भू शम्भून्, शम्भुना शम्भुभ्यां शम्भुभिः, शम्भवे शम्भुभ्यां शम्भुभ्यः, शम्भोः शम्भुभ्यां शम्भुभ्यः, शम्भोः शम्भ्वोः शम्भूनां, शम्भौ शम्भ्वोः शम्भुषु । हे शम्भो ।

एवं विष्णु-वायु-भान्वादयः ।

---

न्यायादाम् । एवं ग्रामण्यामित्यादि । बहुग्रामणिनि कुले इत्यादौ परत्वान्नुण्, पुंवद्भावपक्षे तु स्यादेव (१) ।

१३९ । ततज । ताज्जायते तजः, तश्च तजश्च खश्च तत्तस्मात्, इयो यः (२) ईयस्तस्मात् । प्रकरणात् कव्यादीत्यनेन क्रतयस्यैव ग्रहणात् सख्याः इत्यादौ न स्यात् । सुत्युरिति सुतमिच्छति सुतीयतीति क्विप् य्वोर्लोपोऽहसीत्यनेन यलोपः, अनेकाच्त्वात् पूर्व्वेण यः अनेन उः । लून्युरिति लूधोःक्तस्तस्य नः, शेषं पूर्व्ववत् । एवं चाम्युः प्रस्तीम्युरित्यादि(३) । पक्षे सुत्य इत्यादि । वेति नेच्छन्ति परे ।

---

(१) आमितिशेषः ।

(२) वोरीकारस्थानजातो य इत्यर्थः । अत्र मण्डूकप्लुताधिकारात् घोरित्यनुवर्त्तते इति दुर्गादासः ।

(३) चै-क्तस्तस्य मः चामः, प्रपूर्व्वस्त्यै-घोःक्तस्तस्य म. प्रस्तीमः. तमिच्छतीति क्विप्, पश्चात् चामी-प्रस्तीमी शब्दयो र्ङसि रूपम् ।

१४० । क्रोष्टोस्तुनस्तृन्नधौ घौ स्त्रियाञ्च ।

(क्रोष्टोः ६।, तुनः ६।, तृन् ।१।, अधौ ७।, घौ ७।, स्त्रियां ७।, च।१।)।

क्रोष्टुशब्दस्य तुनः स्थाने तृन् स्यात् अधौ घौ परे स्त्रियाञ्च, न इत्।

(१२८) सखृङ्गामिति। क्रोष्टा, हे क्रोष्टो। (१२९) घौ त्रिरिति। क्रोष्टारौ क्रोष्टारः क्रोष्टारं क्रोष्टारौ।

---

१४०। क्रोष्टोस्तुनः। न धिरधिस्तस्मिन्। गौणेऽपि बहु-क्रोष्टृणि वनानि, अत्र हेऽपि दृतः क इति कोन स्यात् पूर्व्वावस्थाया-मृदन्तत्वाभावात्। बहवः क्रोष्टारो यस्यामित्यादौ तृणि ऋदन्तात् गर्भवदोपि बहुक्रोष्ट्री पुरी इत्यादि (१)। स्त्रियामित्युक्तेः क्रोष्ट्रीः क्रोष्ट्रा क्रोष्ट्रीभ्यामित्यादि। एवं पञ्चभिः क्रोष्ट्रीभिः क्रीतमित्यत्र तार्थे गे स्त्रीत्यस्य लुकि पञ्चक्रोष्टृ वनं पञ्चक्रोष्ट्रा भृत्येनेत्यादि(२)। पूर्व्वस्य नित्त्वात् समुदितस्यैवादेशः (३) अन्यस्य नित्त्वं घावस्वस्-तृण इति णुनिषेधार्थम्।

(१) गौणेऽपि बहुक्रोष्ट्री पूरित्यादौ अवयवस्य पुंस्त्वेऽपि समुदायस्य स्त्रीत्वात् तृनादेशे ईर्व्वित"--का-सि।

(२) "एवं पञ्चभिः क्रोष्ट्रीभिः क्रीतमिति वाक्ये तार्थविषये द्विगौ ष्णे ययोर्लोप इति ईपोलोपे गर्गयस्क इत्यादिना व्वविहितत्यलोपे समुदायस्य क्लीवत्वात् तृणो निवृत्तौ अवयवस्त्रीत्वात् तृणि पञ्चक्रोष्टृ इति"--का-सि।

(३) क्रोष्टोस्तोस्तृन् इत्यनुक्त्वा तुनस्तृन् इति कथमुक्तमित्याह पूर्व्वस्येति। पूर्व्वस्य तुनः। समुदितस्यैव तुस्थाने एव तृनादेशः, अन्यथा तृणो नित्त्वादन्ते एव स्यादिति।

१४१। **वाच्यघौ।** (वा ।१।, अचि ७।, अघौ ७।)।

क्रोष्टोस्तुन स्तृन् वा स्यात् अघावचि परे। क्रोष्टून्(१) क्रोष्ट्रा।

१४२। **ऋतो ङो डुः** ।(ऋतः ५।, ङः १।, डुः १।)।

ऋकारात् परो ङसिङसो ङौं डुः स्यात्, ड इत्।

क्रोष्टुः क्रोष्टुः क्रोष्ट्रोः क्रोष्टूणाम्।

---

१४१। वाच्य। न घिरघिस्तस्मिन्। अस्योपादानं स्यमौ-जसो निषेधार्थं, न तु घिसामान्यस्य,(२) तेन बहुक्रोष्टुनो वने इत्यत्र न स्यात्। वा पाविति सूत्रिते क्रोष्टौ साधुरित्यत्र ऋद्रो ये इति क्रोष्ट्रं इत्यनिष्टं स्यात्। अत्रापि गौणे बहुक्रोष्ट्रा बहुक्रोष्ट्रा पूर्य्या इत्यादि। क्रोष्टून् क्रोष्टूणां इति चान्द्रास्तन्मतमवलम्ब्य क्रोष्टून् क्रोष्टूणां इति। इदं नेच्छन्ति परे। कृताकृतप्रसङ्गी यो विधिः स एव नित्य इति न्यायात् (३) शादौ नकारनुमौ, तयोर्नादेशस्तेन क्रोष्टून् क्रोष्टूनामित्यप्याहुः।

१४२। ऋत। ङ इति षोव्यत्यये प्रौ। डुरिति डित्त्वात् टिलोपः।

---

(१) साम्प्रतं प्रचरत्सु बङ्गेषु मुद्रितेषु मुग्धबोधपुस्तकेषु शसि क्रोष्टून् आमि च क्रोष्टूनामित्येकैकमेव पदं दृश्यते। तर्कवागीशमते तु शसि क्रोष्टून् क्रोष्टून् आमि च क्रोष्टूणाम् क्रोष्टूनामित्येवाचार्य्यसम्मतमिति प्रतीयते। तदस्माभिरपि तथैव सन्निवेशितम्। दुर्गादासोऽपि शसि क्रोष्टून् क्रोष्टून् इति पदद्वयमाचार्य्य सम्मतमित्याह।

(२) न तु घिः क्लीवे इत्यनेन विशेषविहितस्येत्यर्थः।

(३) यस्मिन् विधौ कृते अकृतेऽपि वा, यस्माद्विधेः परं पूर्व्वस्येत्यर्थः, प्रसङ्गः प्रवृत्तिर्विद्यते यस्य तादृक् यो विधिः स एव नित्यः, स एव विधिः पूर्व्वोक्तविधेः

१४३। णुर्ङिध्योः। (णु: १।, ङिध्योः ७॥)।

ऋकारस्य णु: स्यात् ङौ धौ च परे। क्रोष्टरि क्रोष्टो:।

पत्ते हसे च शम्भुवत्।

हूहू: हूह्वौ हूह्वः इत्यादि, वातप्रमीवत्। एवमतिचम्वादयः। सुभूः सुभुवौ सुभुवः इत्यादि सुधीवत्। एवं कटप्रू-स्वयम्भ्वादयः। सुलू: सुल्वौ सुल्वः इत्यादि प्रधीवत्। एवं दृन्भू-खलप्वादयः। धाता, तृनन्तक्रोष्टुवत्। धौ-हे धातः। एवं नप्तृ होतृ पोत्रादयः। पिता, हे पितः।

पिता माता ननान्दा ना सव्येष्ठृ-भ्रातृ-यातरः।

जामाता दुहिता देवा न तृनन्ता इमे दश॥

---

१४३। णुः। ङिश्च धिश्च तौ तयोः। व्युत्क्रमनिर्देशात् (१) ऋतः सेत्त्वेऽपि णग्राहकत्वं, तेन हे पठितगमल् इत्यादौ धौ लृतोऽपि णुः। अनुकरणात् (२) सिद्धमित्यन्यः। एवं जसि पठितगमलः इति। पत्ते हसे च इति—स्यमौजसम्भिन्नेऽचि हसे चेत्यर्थः। वातप्रमीवदिति अमि हूहूं शसि हूहून्, ङौतु वातप्रमीशब्दस्य वातप्रमी, हूहूशब्दस्य हूह्वि इति शेषः। अतिचमूशब्दस्य शसि

---

प्रागभवतीत्यर्थं। इति न्यायात् प्रकृते शसो नकार आमो नुम च तुनः स्थाने तृणि कृते अकृते च भवितु मर्हति। अतस्तावेव तृणादेशात् पूर्व्वं स्यातामिति। एतेन शसि क्रोष्टून् आमि च क्रोष्टूनामित्येव न तु क्रोष्टृन् क्रोष्टृणामिति केषाञ्चिन्मतम्।

(१) धिङ्योरित्यनुक्तेति शेषः।

(२) ऋकार-लृकारयोः समत्वादित्यर्थः।

१४४। **घावस्वसृतृणः**। (घौ ७।, अ-स्वसृतृणः ६।)।

घौ परे ऋकारस्य गुः स्यात् नतु स्वसृतृणः। पितरौ पितरः, पितरं पितरौ। शेषं धातृवत्। एवं जामातृ भ्रात्रादयः।

१४५। **नुर्वा नामि घंः**।

(नुः ६।, वा।१।, नामि ७।, घंः १।)।

नृशब्दस्य नामि परतो घंः स्यात् वा। नृणां नृणाम्। शेषं पितृवत्।

---

अतिचमूरिति अवयवस्त्रीत्वादिति भाष्यम् (१)। सुभुवाविति दृन्भ्वादिभूभिन्नत्वादुव्। तृनन्त-क्रोष्टुवदिति—ये तु शसामि तृन् नेच्छन्ति तन्मते शसाम्भिन्ने इति शेषः। घौ हे धातरिति गुदर्शनार्थमुक्तम्। पितेत्यादि इमे दश तृनन्ता अपि न तृनन्ता इत्यर्थः। एतदन्ये अतृनन्ता अपि तृनन्ता इत्यर्थः, तेन नीधो रौणादिक-तृत्वे सन्, नेष्टा नेष्टारौ नेष्टारः इत्यादौ न गुः।

१४४। घाव। स्वसा च तृश्च तव्, न तत्, अस्वसृतृन् तस्य। स्वसृशब्दस्य तृनन्तत्वातिदेशात् गुनिषेधे सिद्धे स्वसृग्रहणं, क्वचिदतिदेशकार्य्यमनित्यमित्यस्य ज्ञापनार्थम्। तेन शंस्तरौ शंस्तरः शास्तरौ शास्तरः इत्यादौ गुः। कज्जटस्तु शंस्तारौ शंस्तार इत्याह।

१४५। नुर्व्वा। अयं नियमो गौणेऽपि, तेनातिनृणां अतिनृणामिति।

---

(१) स्वमते अतिचमूर्निति।

१४६। ओरौ घौ।

(ओः ६।, औ ।१।, घौ ७।)।

ओकारस्य औकारः स्यात् घौ परे। गौः गावौ गावः।

१४७। आम्शसोः।

(आ ।१।, अम्-शसोः ७॥)।

ओकारस्य आकारः स्यात् अमि शसि च परे। गां गावौ गाः, गवा गोभ्यां इत्यादि। (१२५) ङस्ङेङा लोप इति गोः गोः।

१४६। ओरौ। ओरित्यत्र सामान्यशब्दस्य विशेषपरत्वात् डिदोत्यान्तस्यैव ग्रहणम्। तेन स्मृत उर्येन स्मृतोः मह्वोः हे चित्रगो इत्यादौ न स्यात्। गौः द्यौ रित्यादौ स्यात्। लोपस्वरादेशयोः स्वरादेशविधिर्बलवान् इति न्यायात् हे गौः हे द्यौः इत्यादौ एङो न धिलोपः (१)।

१४७। आम्। अम्च शस्च तयोः। ओरित्यत्र सामान्यस्यैव ग्रहणात् गां द्यां, उना सह वर्त्तते सोः तं सां, स्मृतां मह्वामित्यादि स्यात्। कश्चित् पूर्व्वेनापि सामान्यस्य ग्रहणात् स्मृतौः मह्वौः सौरित्याह (२)।

---

(१) १०४ सूत्रस्य टीका द्रष्टव्या।

(२) सह उना वर्त्तते सो तस्मात् सौ कृते सौरिति।

१४८ । रै रा सुभि । (रै ।१।, रा ।१।, सुभि ७।)।

रै शब्दो रा स्यात् से भे च परे। राः रायौ रायः, राभ्यामित्यादि।

ग्लौः ग्लावौ ग्लावः इत्यादि।

इति अजन्त-पुंलिङ्ग-पादः।

---

## अजन्तस्त्रीलिङ्ग-शब्दः ।

१४९ । आबीब्हसात् से लोपः ।

(आप्-ईप्-हसात् ५।, सेः ६।, लोपः १।)।

आप ईपो हसाच्च परस्य से र्लोपः स्यात्। उमा।

---

१४८ । रै। सुच भच तत्तस्मिन्। गौणेऽपि सुराभ्यां कुलाभ्यामिति स्यात्। नानामोरपि (१) रादेश इत्यन्ये, तन्मते सुराणा कुलेन सुराणां कुलानामिति। अस्मन्मते तु सुरिणा सुराया सुरीणां सुरायामिति।

इत्यजन्तपुंलिङ्गपादः।

---

१४९ । आबी। आप् च ईप् च हसश्च तत्तस्मात्। आबित्यनेन डापोर्ग्रहणं, पिद्ग्रहणात्। उमेति अव रक्षादौ मस्त्यः कित् उङा सह जट् बाहुल्यात् स्वः स्त्रियामत आप्। कश्चिदु-माशब्दोऽभिधायकत्वेनास्या अस्ति, अर्शआदित्वादः पश्चादाप्। तथाच

---

(१) टाविभक्तौ आमिचेत्यर्थः।

१५० । यौरापः । (ई ।१।, औः १।, आपः ५।) ।

आपः पर औरी स्यात् । उमे उमाः ।

उमेति माता तपसो निषिद्धा पश्चादुमाख्यां सुमुखी जगाम इति कुमारसम्भवे इत्याह (१)। ननु स्यान्तस्याराल्लप् फे इति सिलोपे वागित्यादि सिध्यति किमर्थं हसोग्रहणं, न च गोः धुरित्यादौ न सेर्लोपः अरादिति निषेधादिति वाच्यं, तर्हि आबीन्नात् सेर्लोप इति सूत्रं क्रियतामिति चेन्न, एवं श्वेतवाः अवया इत्यादौ लुपि अयुक्त डसङ्विधेः (२) प्राप्त्यर्थं हसोग्रहणं, लोपः स्वरादेशयोः स्वरादेशो विधिर्बलवान् इत्यस्य ज्ञापनार्थञ्च। एवं सति राजा वेधा इत्यादावपि घः (३)।

१५० । यौरापः । घकरणात् जरसौ इति ।

---

(१) उमेति। संज्ञाशब्दानां यथाकथञ्चित व्युत्पत्तिः कार्य्येति प्राञ्चः। उः शिवः तं मिमीते जपतीति माङ्लि शब्दे हनजनाद्गमादेरिति ड प्रत्यये उम इति शब्दात् स्त्रियामपि उमेति रूपम्। उमेति माता तपसो निषिद्धा पश्चादुमाख्यां सुमुखी जगाम इति कालिदासस्य कवितैवेति दुर्गादासः। (ननु उमाशब्दस्य वस्तुतो व्युत्पत्त्याधायकं तदित्येवकारार्थः)।

(२) अयुक्त डसङविधेरिति—अयुक्तस्य लुपि सति लुप्तस्य आदिविधेर्निषेधाद-प्राप्तस्य डसङ्विधेरित्यर्थः। डसङ्विधेरित्यस्योपलक्षणत्वात् लिट् धुगित्यादौ ढघादीनाञ्च ग्रहणमिति।

(३) एवं सति स्वरादेशस्य बलवत्त्वे हसोग्रहणे च सतीत्यर्थः। स्वरादेशस्य बलवत्त्वात् राजेत्यत्र आदौ दीर्घे पश्चान्नोलुप। हसो ग्रहणं विना वेधा इत्यत्र सकारद्वय संयोगे स्यादे सोलोप इत्यादेर्बलवत्त्वादादौ सलोपे वेध इत्यनिष्टं स्यात्। अत्वसोधोरित्यत्र असन्तलिङ्गस्यैव दीर्घविधानात्।

१५१ । **धिटौस्योः** । (धि-टा-ओसि ७, एः १।) ।

आप एः स्यात् धौ टौसोश्च परतः । हे उमे ।

उमां उमे उमाः, उमया उमाभ्यां उमाभिः ।

१५२ । **ङितां यम्** । (ङितां ६।।।, यम् ।१।) ।

आपः परेषां ङितां यम् स्यात्, म इत् । उमायै उमाभ्यां उमाभ्यः, उमायाः उमाभ्यां उमाभ्यः, उमायाः उमयोः उमानाम् ।

(१३८) न्यापदीर्भ्योङेरामिति । उमायां, उमयोः उमासु । एवं दुर्गामायाम्बिकादयः ।

१५३ । **स्वेः स्यम् स्वश्च** ।

( स्वेः ५।, स्यम् ।१।, स्वः १।, च ।१।) ।

स्वराबन्तात् परेषां ङितां स्यम् स्यात्, पूर्व्वस्य च स्वः ।

---

१५१ । धिटौ । धिश्च टाश्च ओश्च तत्तस्मिन् । अर्थात् त्तिं विपरिणम्याह आप इति । सिलोपमाश्रित्य (१) एः ।

१५२ । ङितां । ङ इद्येषां ते तेषाम् ।—यमो म इत्, अदन्त आगमः (२) । उमायामिति आप् ग्रहणात् आदौ ङेराम् पश्चाद् यम् । सर्व्वस्यामित्यत्र स्यमागमत्वान्न यम् ।

१५३ । स्वेः । ङितामापश्चेत्यनुवर्त्तते । स्यम्स्वावित्य-

---

(१) त्यलोपे त्यलक्षणमित्युक्तेः ।

(२) ङिति य इत्यनेनैवेष्टसिद्धौ ङितां यम् विधानं, यकारस्य विभक्तिभाजित्वात् टाभिस् इत्यादिना ङेप्रभृतीनामयाद्यादेशनिवृत्त्यर्थमिति दुर्गादासः ।

सर्व्वस्यै सर्व्वस्याः सर्व्वस्याः सर्व्वस्याम्। आमि सर्व्वासाम्। शेषं उमावत्। एवं विश्वादय आबन्ताः।

अपुरीत्युक्तेः—अन्तरायै नगर्य्यै।

द्वितीयस्यै द्वितीयायै, द्वितीयस्याः द्वितीयायाः, द्वितीयस्यां द्वितीयायाम्। शेषमुमावत्। एवं तृतीया।

१५४। सुभ्रूदीद्व्राजम्बार्थानां धौ ह्रस्वः।

(सुभ्रूदीद्व्राजम्बार्थानां ६।।, धौ ७।, ह्रस्वः १।)।

सुभ्रुवो द्या द्व्राजम्बार्थानाञ्च ह्रस्वः स्यात् धौ परे। हे अम्ब। शेषमुमावत्। एवमक्काल्लादयः। द्व्राचः किं—हे अम्बाले, हे अम्बिके।

---

करणात् पूर्व्वस्यैव स्यो न तु ङिताम्। ङस्यम् इति न कृतम् अस्यै अस्या इत्यादिसिद्धार्थम् (१)।

१५४। सुभ्रू। द्व्रानचौ येषां ते, अम्बा अर्थो येषां ते, द्व्राचश्च ते अम्बार्थाश्चेति ते, सुभ्रूश्च दीच द्व्राजम्बार्थाश्च ते तेषाम्। विमानना सुभ्रु कुतः पितुर्गृहे। हा पितः क्वासि हे सुभ्रु बह्वेवं विललाप स इत्यादि प्रयोगदर्शनात् सुभ्रूग्रहणम्, दीसंज्ञासाहचर्य्यात् स्त्रियामेव। तेन हे सुभ्रूः पुरुष इत्यत्र न स्यात्। तथाच गिरीश सुभ्रूस्तव पादपद्मं भजन्ति मुक्त्यै कवयोऽसुरारे इति। अक्काल्लादय इति, आदिना हे अत्त हे अप्प इत्यादि। पाददन्तेति। पृतनाशब्दं परे नाहुः।

---

(१) ननु ङस्यमाप्त्यसिद्धौ स्यसेति कर्य्यमिति चेन्न, अस्यै इत्यादिसाधने सकारपरत्वाभावे मध्य इत्यस्याप्रवृत्तेरिति दुर्गादासः।

जरा। (११६) जरम् जराचि तु। जरसौ। केचिट्टादावील-मिच्छन्ति। जरसौ जरे। जरसः जराः इत्यादि। पाददन्तेति, नासिका-पृतना-निशानां नस्-पृत्-निशः। नसः नसा नोभ्या-मित्यादि। पृतः पृता पृड्भ्यामित्यादि। निशः निशा।

**१५५। शच्छ्राज भ्राज यज व्रज सृज मृज व्रश्च भ्रस्जां षङ् भौ।**

(श—भ्रस्जां ६।।।, षङ्।१।, भौ ७।)।

शान्तानां छान्तानां राजादेश्च षङ् स्यात् भौ परे।

**१५६। षो डः फे।** (षः ६।, डः १।, फे ७।)।

षस्य डः स्यात् फे परे। निड्भ्यां इत्यादि। पचे घौ च उमावत्।

गोपा, विश्वपावत्।

मति हरिवत्, स्त्रीत्वात् न शस् न, न टा ना। मतीः मत्या।

---

१५५। शच्छ्रा। श च छ च राजश्च भ्राजश्च यजश्च व्रजश्च सृजश्च मृजश्च व्रश्चश्च भ्रस्जश्च ते तेषाम्। षङो ङित्त्वादन्त्यस्य। रचितस्तु राजादिसाहचर्य्यात् धात्ववयवस्यैव शस्य षङ्, तेन निजभ्याम् निच्शु निच्कु इत्याह (१)। इह सामान्य-शग्रह-णात् गिरिविश्मानमाचच्चाणः गिरिविट्, एवमश्मानमाचच्चाणः अडित्यादि।

१५६। षो। इह सामान्यषग्रहणात् षट्, उष्णामाच-च्चाण उडित्यादि।

---

(१) तन्मते निशाशब्दात् भ्यामि सुपि च रूपाणि।

१५७। द्या ङितामम्।

(द्या: ५।, ङितां ६॥, अम् ।१।)।

द्या: परेषां ङितामम् स्यात्, म इत्। मत्यै मतये, मत्या: मते:, मत्यां मतौ। एवं श्रुति-स्मृति-बुद्ध्यादय:।

१५८। स्त्रियां त्रिचतुरो स्तिसृचतसृ ऋवत् क्तौ।

(स्त्रियां ७।, त्रिचतुरो: ६॥, तिसृ चतसृ ।१।, ऋवत् ।१।, क्तौ ७।)।

त्रिचतुरो: स्त्रीलिङ्गे क्रमात् तिसृचतसृौ स्त: क्तौ परे। तौ च ऋवत्, तेन न गुणिर्वा:। तिस्र: तिस्र: तिसृभि: तिसृभ्य: तिसृभ्य: तिसृणां तिसृषु।

टेरत्वे सत्याप्। द्वे द्वे द्वाभ्यां द्वाभ्यां द्वाभ्यां द्वयो: द्वयो:।

गौरी गौर्य्यौ गौर्य्य:, हे गौरि, गौरीं गौर्य्यौ गौरी:, गौर्य्या गौरीभ्यां गौरीभि: (१५७) द्याङितामम्। गौर्य्यै गौरीभ्यां गौरीभ्य:, गौर्य्या: गौरीभ्यां गौरीभ्य:, गौर्य्या: गौर्य्यो: गौरीणां, गौर्य्यां गौर्य्यो: गौरीषु। एवं वाणी-काली नद्यादय:।

---

१५७। द्या:। ङ इदुयेषां ते तेषाम्। मत्यै इत्यादौ लाक्षणिकत्वान्न ण:। द्या ङित्य इति न कृतं, आगमो यद्गुणस्तद्ग्रहणेन गृह्यते इत्यस्यानित्यत्वज्ञापनार्थम्, तेन षट्त् सन्त इत्यादौ-ष्टुभिरित्यादिना न स्तो: ष्टुत्वम्।

१५८। स्त्रियाम्। त्रि च चतुश्च तौ तयो:, त्रिचतुरो-रित्यनुकरणात्। त्रिचतुरोर्यदा स्त्रियां वृत्तिस्तदैवादेशस्तेन

लक्ष्मीः। अनीबन्तत्वात् न सिलोपः। शेषं गौरीवत्। एवम् अवी-तन्त्र्यादयः।

स्त्री, हे स्त्रि।

---

प्रियास्तिस्रो यस्य स प्रियतिसा, प्रियाश्चतस्रो यस्य स प्रियचतसा इत्यादौ स्यात्। ननु प्रिया त्रयो यस्याः सा प्रियत्रिः, प्रियाश्चत्वारो यस्याः सा प्रियचत्वारित्यादौ। क्ताविति प्रकरणात् प्राप्ते क्तिग्रहणात् प्रियतिसृ प्रियचतसृ कुलमित्यत्र क्लीलिङ्गे स्यादेव, न तु तिस्र इच्छति त्रिकाम्यति, चतस्र इच्छति चतुर्य्यति, तिसृणां प्रियः त्रिप्रियः, चतसृणां प्रियः चतुःप्रियं इत्यादौ। केचित्तु प्रियत्रि प्रियचतु कुलमित्याहुः। कश्चिदाह साक्षात् क्ताविव विधानार्थं क्तिग्रहणमिति। न णुन्निर्घा इति—उक्ता णुन्निर्घा इति न स्युः, तेन प्रियतिसृणि कुलानि प्रियचतसृणि कुलानि, परत्वात् घः(१)। अत्रासकरणात् (२) प्रियतिसः आगतः प्रियतिस्रो धनमित्यादौ न डुः। अमी इति किं—प्रियतिसा प्रिय चतसा (३)। तिसृणां

---

(१) उक्ता णुन्निर्घा इत्युक्तेः नमःमहच्च इति वक्ष्यमाणसूत्रेण दीर्घत्वं न निषिध्यते इत्यर्थः।

(२) अत्र—नणुन्निर्घाइत्यत्र, असकरणात्—एन अकारेण सह सः समासस्तत् करणात्, अशब्दे नात्र अकारकार्य्यं लक्ष्यते। तथाच णुश्च न्निश्च घश्च अश्च ते णुन्निर्घा इत्येवं समास करणात् अकारस्थानजातकार्य्यमपि न स्यात्। तेन ङसिङसो रकारस्य न डुरिति।

(३) अमी-णुन्निर्घा इति। एतेषां निषेधादेतदन्यत् कार्य्यं भवतीति ज्ञापितम्। उक्तञ्च दुर्गादासेन "आतिदेशिकमनित्यमिति न्यायात् सौ न ऋरदिति बोध्यम्, तेन सख्युर्ङ्गरामिति से डा इति।

चतसृणामित्यत्र आगमादेशयोरागमो विधिर्बलवान् इति न्यायात् नुमि तिसृचतस्रादेशे ऋवत्त्वान्न र्घः (४)।

लक्ष्मीरिति लक्षधारी: ईकारस्य मुम् च। अवीतन्त्र्यादय इति—आदिना तरी श्री-ह्री संग्रहः। यदुक्तं—

अवी-तन्त्री-तरी लक्ष्मी-श्री-ह्री भ्रूणामृणादितः।
स्त्रीलिङ्गवर्त्तिनामेषां सेर्लोपो न कदाचन॥
(अनीवन्ततया लोपो न गौणे न च ह्रस्वता)।

(४) अत्र सूत्रे कार्त्तिकेयसिद्धान्त—प्रियतिसा—अत्र कथं "संख्याया डो बह्वोरिति सूत्रेण डप्रत्ययो न स्यात्, तत्र सामान्यशब्दस्य विशेषपरत्वात् उदाहरणज्ञापकाच्च संख्याव्ययाभ्यां परात् संख्यावाचकशब्दात् परविधानात् अत्र तदभावाप्रसङ्गः। अत्र ग्रन्थकृता ऋवत् इत्युक्त्वा न गुब्रिर्घा इति विशेषकथनात् गुणाद्यतिरिक्तस्थले एतयोर्दीर्घऋवत्वं नास्तीति ज्ञापितम्। तेन सौ प्रियतिसा इत्यत्र सख्युद्भ्रामित्यनेन सेर्डा प्रियतिसृणामित्यत्र ह्रस्वान्नुम्। नन्वेवञ्चेत् शसि प्रियतिस्र इत्यत्र गुणाद्यतिरिक्तकार्य्यस्य स्वदीभ्यामित्यनेन शसोऽकारलोपस्य सम्भवो ऽस्तु चेन्न। तेन न गुब्रिर्घा इत्यत्र घंस्थाने अकारो वर्त्तते। तेन अकारकार्य्यमपि न स्यात्। **** अतएव ङसिङसोः प्रियतिस्र इत्यत्र ऋतो ङोडुरित्यनेन अकारकार्य्यं डुर्न स्यादिति साधु सङ्गच्छते। एवमत्र कालापिकास्तु 'तौ रं स्वरे" (तौ तिसृ चतस्रौ विभक्तिस्वरे परे रं रेफं प्राप्नुतः। कातन्त्रे चतुष्टयवृत्तौ १६८) इति सूत्रं सर्व्वापवादकं मत्वा शसो नकाराभावं चक्रुः। वयं तन्मतैकवाक्यतया अवयवस्तीत्यमङ्गीकृत्य तस्य तदभावमकार्ष्म। अत्र ब्रिरच्येव निषिद्धः; तत्र सेर्डा इति विशेषात्। तत्राचर्य्यात् गुरिति अच्येव निषिद्धः। तेन सम्बोधने हे प्रियतिसरित्यत्र गुरेव। यद्यपि पिता मातेत्यत्र न्ट-द्वेट ननन्दृणामहनन्तत्वेऽपि निषेधात् तद्भिन्न-ऋदन्तानां हनन्तत्वातिदेशेन एतयोस्तृनन्तत्वसम्भवात घावस्वसृहण इत्यत्र हनन्तवर्ज्जनात् एतयोर्गुणसम्भावना नास्ति, तथापि न गुब्रिर्घा इत्यनेन गुणनिषेधकरणं गुर्ङिध्योरित्यनेन गुणनिषेधार्थम्। तेन ङौ प्रियतिस्रि न तु प्रियतिसरीति। अथैवं प्रियास्तिस्रो यत्र कुले इति वाक्ये प्रत्ययसामुदायिककार्य्यात् प्रकृतिसामुदायिककार्य्यस्य बलवत्त्वात् आदौ सर्व्वावयवादेशः ततो

१५९। **स्त्री भूधुः**। (स्त्री ।१।, भूः १।, धुः १।)।

स्त्रीशब्दो भूशब्दश्च धुसंज्ञः स्यात्।

(१२६) धोरियुवचि। स्त्रियौ स्त्रियः।

१६०। **स्त्री वाम्शसोः**।

(स्त्री ।१।, वा ।१।, अम्-शसोः ७॥)।

स्त्री-शब्दो धुसंज्ञो वा स्यात् अमि शसि च परे।

स्त्रियं स्त्रीं स्त्रियौ स्त्रियः स्त्रीः, स्त्रिया स्त्रीभ्यां स्त्रीभिः, स्त्रियै स्त्रीभ्यां स्त्रीभ्यः, स्त्रियाः स्त्रीभ्यां स्त्रीभ्यः, स्त्रियाः स्त्रियोः स्त्रीणां, स्त्रियां स्त्रियोः स्त्रीषु।

---

१५९। स्त्रीभ्रुः। स्त्री च भूश्च तत्, पुंस्त्वं सौत्रत्वात्, भिन्नं दं वा। इयुवविधानार्थमिदम्।

१६०। स्त्री वा। अम् च शस् च तौ तयोः। पुनस्त्रीग्रहणं भूनिवृत्त्यर्थम्। स्त्रियं स्त्रियः इत्यत्र आदावियादेशः नत्वम्शसादेर्लोपः, धुत्वातिदेशविधानात्। स्त्रियै इत्यादि— नास्त्रीयुव इत्यत्र स्त्रीवर्ज्जनादादौ दीकार्य्यं पश्चादियादेशः। एवं स्त्रीणामित्यादौ नुमि अजभावान्नेयादेशः। गौणे तु अति-

---

विभक्तिकार्य्यं लुगादि। तेन प्रियतिसृ प्रियतिसृणी प्रियतिसृणि इत्यादि। * * * * कातन्त्रे तु स्यमोर्लुकि तिसृचतस्रोर्विकल्पमुक्त्वा प्रियतिसृ प्रियत्रि प्रियचतसृ पियचतुरित्युदाहृतम्। * * * * एवञ्चेत् प्रियतिसा प्रियचतसा इत्यादौ ऋदन्तत्वात् कथमपि न स्यात् इति चेत् सत्यम्। पूर्व्वावस्थायां ऋदन्तत्वाभावात् इति केचिदाहुः। तन्नयुक्तम्। यतः क्रोष्टुशब्दस्य पूर्व्वावस्थायाम् ऋदन्तत्वाभावात् स्वयमपि क्रोष्ट्रीत्युदाहृतमेव। वस्तुतस्तु न मनसंख्येत्यनेन संख्यावाचकाद्दोर्पनिषेधो वा इत्यवधेयम्।

श्रीः श्रियौ श्रियः, हे श्रीः, ङित्यामि च भेदः—श्रियै श्रिये, श्रियाः श्रियः, श्रियाः श्रियः, श्रीणां श्रियां, श्रियां श्रियि, श्रीषु ।

सुध्यादयः पुंवत् । सुष्ठु धीः, प्रकृष्टा धीरिति नित्यस्त्रीत्वे सुधीप्रध्यौ श्रीलक्ष्मीवत् ।

धेनु र्मतिवत् साध्यः । धेनुः धेनू धेनवः इत्यादि ।

वधू र्गौरीवत् । वधूः वध्वौ वध्वः इत्यादि । एवं चमू-तन्वादयः ।

भ्रूः श्रीवत् । भ्रूः भ्रुवौ भ्रुवः इत्यादि । सुभ्रूः हे सुभ्रु ।

पुनर्भूः सुलूवत् । सुभूः पुंवत् ।

स्वसा धातृवत् । माता पितृवत् ।

द्यौ र्गौवत् । सुराः पुंवत् । नौः ग्लौवत् ।

इति अजन्त स्त्रीलिङ्गपादः ।

---

स्त्रियां बहुस्त्रियामित्यत्र न नुम् दीसंज्ञाभावात् । श्रीशब्दस्य ङिति आमि च पाक्षिकदीसंज्ञाफलमाह—ङित्यामि च भेद इति । सुध्यादयः पुंवदिति शोभना धीर्यस्याः सा सुधीरित्यस्या-नित्यस्त्रीत्वान्न दीसंज्ञा, एवं प्रकृष्टा धीर्यस्याः सा प्रधीरिति । शोभना चासौ धीश्चेति सुधीः, प्रकृष्टा चासौ धीश्चेति प्रधीरित्यत्र ये से नित्यस्त्रीत्वात् दीसंज्ञा स्यादेव । एवं स्याद्युत्पत्तेः प्राक् सेऽपि दीसंज्ञेति विशेषः । शोभनं दधाति, क्विप्, सुधीः । चमू-तन्वादय इति – ऊवन्तपक्षे तनूशब्दस्य ग्रहणं, अनूवन्तस्तु धेनुशब्द-वत् । सुलूवदिति—कव्यादीत्यनेन यथा सुलूकारस्य वादेश-

१६१। क्लीवात् स्वमो ऽधेर्मोऽतः।

( क्लीवात् ५।, सि अमः ६।, अधेः ६।, मः १।, अतः ५। )।

अकारान्तात् नपुंसकात् परस्याधेः सेरमश्च मः स्यात्। ज्ञानं हे ज्ञान्।

---

स्तथास्यापि। किन्त्वस्य नित्यस्त्रीत्वात् दीसंज्ञायां पुनर्भूः पुनर्भूः पुनर्भ्वं पुनर्भ्वाः पुनर्भ्वाः पुनर्भूणां पुनर्भ्वामिति विशेषः। एवं वर्षाभू-काराभू-दृन्भूनामपि। एषां नित्यस्त्रीत्वन्तु—

पुनर्नवायां वर्षाभूः स्त्रियां किञ्चुलुके प्लवे।
पुनर्भूः स्याद्दिरूढ़ायां दृन्भूः पन्नगवज्रयोः।
काराभूर्निगड़स्थाने क्रियायामपि चेष्यते॥ इति कोषात्।

वर्षाभूशब्दस्य शोणादिपाठाद्दीपि वर्षाभ्वीत्यपि परे। तथाच भागुरिः—भार्य्या भेकस्य वर्षाभ्वी शृङ्गी तु मद्गुरस्य चेति। वर्षाभ्वी कमठी दुलीत्यमरः। सुभूः पुंवदिति—उवः स्थानिवत्त्वेन दीसंज्ञाभावात्। धातृवदिति—अस्य स्त्रीत्वात् शसि स्वसॄरिति विशेषः। सुराः पुंवदिति—शोभनो रा यस्याः सा इति वाक्यम्।

इत्यजन्त स्त्रीलिङ्गपादः।

---

१६१। क्लीवात्। सिश्च अम् च तत्तस्य, न धिरधि स्तस्य। ज्ञानमिति मविधानसामर्थ्यात् अतः स्वमोर्न लुक्। न च स्वमोरमि कृते जरातोऽम्बेति विनैवाजरसमिति सिध्यतीति वाच्यं, जरसादेशे अनदन्तत्वात् स्वमोर्लुक्प्राप्तेः।

१६२ । क्लीवाद् यौः ।

( क्लीवात् ५।, ई ।१।, औः १। ) ।

क्लीवात् पर औरी स्यात्'। ज्ञाने ।

१६३ । जस्शसोः शिः ।

( जस्शसोः ६॥, शिः १। ) ।

क्लीवात् परस्य जसः शसश्च शिः स्यात्, श इत् ।

१६४ । नुमयमादौ झमन्तरलादौ तु वा ।

(नुण् ।१।, अयमादौ ७।, झमन्तरलादौ ७।, तु ।१।, वा ।१।) ।

क्लीवस्य शौ परे नुण् स्यात्, न तु यमादौ, झमन्तरलयो-रादौ तु वा स्यात् ।

---

१६२ । क्लीवाद्यौः । ई इति लुप्तप्रोक्तं दम् । पुनः क्लीव-ग्रहणात् अनतोऽपि औरीस्तेन वारिणी पयसी इत्यादि ।

१६३ । जस् । शित् करणं शिः क्लीवे इति विशेषणार्थम् ।

१६४ । नुम् । यमस्यादिः यमादिर्न यमादिरयमादिस्त-स्मिन् । झम् अन्ते ययोस्तौ, रश्च लश्च तौ, झमन्तौ च तौ रलौ चेति तौ, तयोरादिः झमन्तरलादिस्तस्मिन् । क्लिं विपरिणमय्य क्लीव शौ इत्यनुवर्त्तयन्नाह क्लीवस्य शौ परे इति । अयमादौ किं---बहवो यो येषु तानि बहुयि पद्यानि बहुप्रशामि इत्यादि । झमन्तरलादौ तु ऊर्न्जि ऊर्ज्जि सुवर्न्लि सुवल्लि इत्यग्रे वक्ष्यति ।

## १६५। नसब्महन्नोऽधौ घौऽधौ धौ।

(नस् अप् महत् नः ६।, अधोः ६।, धः १।, अधौ ७।, धौ ७।)।

नसन्तस्यापो महतो नान्तस्य च धवर्जस्य घः स्यात् अधौ घौ परे। ज्ञानानि। हे ज्ञानवत्। शेषं रामवत्। एवं वन-धन-फलादयः।

## १६६। तोऽन्यादेर्मोऽनेकतरात्।

( तः १।, अन्यादेः ५।, मः ६।, अनेकतरात् ५। )।

अन्यादेः परस्य स्यमो मस्य तः स्यात्, न त्वेकतरात् परस्य। अन्यत् अन्ये अन्यानि। हे अन्य। पुनस्तद्वत्। शेषं पुंवत्। एवमन्यतरादयः। अनेकतरात् किम्—एकतरम्।

१६५। नस। नस् च आप् च महांश्च न च तत् तस्य, न धुरधुस्तस्य, न धिरधिस्तस्मिन्। धिवर्ज्जनादक्लीवेऽपि राजा सीमा इत्यादौ घः। गौणेऽपि अयं विधिस्तेन सुविद्वांसि सुराजानि कुलानि इत्यादि।

१६६। तो। अन्य आदिर्यस्य स तस्मात्, न एकतरम् अनेकतरं तस्मात्। मण्डूकगत्या स्यमोरित्यनुवर्त्तयन्नाह स्यमोरिति। अन्यादेः किं—अन्यतमम्। अन्यतमदिति भाष्यम्(१)। हे अन्यदिति कश्चित्।

(१) सिद्धान्तकौमुद्यान्तु ७।१।४।४२। इति सूत्रे अन्यतम शब्दस्य त्वन्यतमदित्येवेति वृत्तिः।

१६७। जरातोऽम् वा।

( जरात: ५।, अम् ।१।, वा ।१। )।

जरा शब्दात् परस्य स्यमोर्मस्य अम् स्यात् वा। अजरसम् अजरम् अजरसी अजरे, अजरांसि अजराणि। पुनस्तद्वत्। शेषं पुंवत्।

(११७) पाददन्तेति शीर्षहृदयोदकामनानां शीर्षन् हृदुद-नामन:। शीर्षाणि शीर्ष्णा शीर्षभ्यामित्यादि। हृन्दि हृदा हृद्भ्यामित्यादि। उदानि उद्ना उदभ्यामित्यादि। आमानि आम्ना आमभ्यामित्यादि। पक्षे शेषं च ज्ञानवत्।

१६८। क्लीवे स्व:। ( क्लीवे ७।, स्व: १। )।

क्लीवे घस्य स्व: स्यात्। शेषं, ज्ञानवत्।

१६७। जरा। म इत् अकारागम:। जरमादेशनिमित्त-काऽमो नित्यत्वाज्जरमादेशस्य नित्यत्वसन्देहनिरासार्थं वाग्रहण मिति कश्चित्। (१)

१६८। क्लीवे। स्वशब्दस्य मापेक्षत्वात् घस्येति लभ्यते इत्याह क्लीवे घस्येति। क्लीवे इति निर्देशात् येन विधिस्तदन्तस्येति न्यायात् अन्त्यस्यैव घस्य स्व:, तेन श्रीपमित्यत्र श्रीकारस्य न स्व:, एवं मह एन वर्त्तमानं मं इत्यादि। प्रकरणात्तेरेव, तेन ज्ञाने अपु-

(१) वाग्रहणं सुब्व्यनाजविकयोर्मुख्यस्य पक्षणामिव्यर्थानित्यत्वज्ञापनार्थं, तेन सर्वपामित्यादौ क्वेमभ्योरित्यस्य:। अतएव जरमादेशाभावपक्षे अजरमित्यत्र अमादिलोप इत्यधिक: पाठ:।

१६९। **स्यमो र्लुक्।** ( सि-अमोः ६॥, लुक् ।१। )।

क्लीवात् परयोः स्यमोर्लुक् स्यात्। वारि।

१७०। **नुमिको ऽच्यनामि।**

( नुण् ।१।, इकः ६।, अचि ७।, अनामि ७। )।

इगन्तस्य क्लीवस्य नुण् स्यात् अचि परे, नत्वामि। वारिणी वारीणि।

---

णो इत्यादौ न ह्रस्वः। वनाभ्यां वनेभ्यः इत्यादौ असिद्धं वहिरङ्ग-मन्तरङ्ग इति न्यायात् असिद्धः ह्रस्वो न स्यात् (१)।

१६९। स्यमोर्लुक्। सिश्च अम् च तौ तयोः। क्लिं विपरिणम्यात्र क्लीवादिति।

१७०। नुमिकः। इक् प्रत्याहारः, न आम् अनाम् तस्मिन्। नञ् युक्तवन्न्यायात्, स्याद्यचेव (२) तेन वारीदम् इत्यादौ न स्यात्। वारिणी इति णित्वादन्ते, आदौ नुण् पश्चात् ई। वारीणीति जसः शिस्तस्मिन् नुम्यमादाविति नुण् नसत्वमहन्न इति घं: (३)।

---

(१) अन्तरङ्गे प्रकृतिघटितकार्य्यस्थले वहिरङ्गं प्रत्ययघटितकार्य्यम् असिद्धम् अग्राह्यं भवतीत्यर्थः। अत्र क्लीवलिङ्गशब्दस्य योऽन्त्यदीर्घस्तस्य ह्रस्वविधानात् प्रत्ययघटितदीर्घस्य ह्रस्वत्वं न स्यात् तेन वनाभ्याम् इत्यादौ न ह्रस्वः। अतएव संक्षिप्तसारे सुबन्तपादे "नाप्रकृते"रिति ९८ सूत्रस्य टीकायां प्रकृतेरन्त्योऽप्रकृतिः प्रत्ययादिः। प्रत्ययादेः सम्बन्धे सति क्लीवे प्राप्तो ह्रस्वो न भवतीति गोयीचन्द्रः।

(२) यादृग् जातीयस्य प्रतिषेधो विधिरपि तादृगजातीयस्येति न्यायादित्यर्थः।

(३) अनामीति किं वारीणामित्यादौ अन्तरङ्गत्वादादौ नुणि कृते ह्रस्वपरत्वाभावान्नुमागमाभावे दधिश्नामित्यादिवद्दीर्घो न स्यादिति दुर्गादासः।

१७१। णुर्धौ वा। (णुः १।. धौ ७।, वा ।१।)।

इगन्तस्य क्लीवस्य णुर्व्वा स्यात् धौ परे। हे वारे हे वारि। वारिणी वारीणि वारिणा वारिणे वारिणः वारिणः वारिणोः वारीणां वारिणि वारिणोः। हसे हरिवत्।

१७२। पुंवद्वार्थोक्तपुंस्कं टाद्यचि।

(पुंवत् ।१।, वा ।१।, अर्थोक्तपुंस्कं १।, टाद्यचि ७।)।

इगन्तं क्लीवम् अर्थेन प्रोक्तपुंस्कं पुंवत् वा स्यात् टाद्यचि। अनादये अनादिने इत्यादि। शेषं वारिवत्। अर्थेन किं पीलुने फलाय।

१७१। णुर्धौ। विधानसामर्थ्यात् लुकि वा णुः। हे सुधे हे सुधि, हे मनो हे मनु, हे सुधातः हे सुधातृ, हे लिखितगमल हे लिखितगमल्ल इत्यादि।

१७२। पुंवत्। पुमानिव पुंवत्। अर्थेन तुल्यप्रवृत्तिनिमित्तेन उक्तः पुमान् येन तदर्थोक्तपुंस्कम्। टा आदिर्यस्य स टादिः टादिश्च टाद्यच् तस्मिन्। तथाच येनार्थेन क्लीवे वर्त्तते तेनैवार्थेन यदि पुंसि वर्त्तते तदा टाद्यचि पुंवदित्यर्थः। टाद्यचविशेषात् ङेऽपि उदाहरति अनादय इत्यादि। अनादिशब्दः प्रवृत्तिनिमित्तेन (१) पुंक्लीवयोर्वर्त्तते। अनादये अनादिने, एवं पटवे पटुने इत्यादि। टाऽचित् कर्त्रा कर्त्तृणा इत्यादि। पीलुने इति पीलुर्वृक्षभेदः, पीलोर्विकारः फलमित्यर्थे विहितणस्य "फले लुवि"ति

(१) आदिरहितत्वरूपेणार्थेनेत्यर्थः।

१७३। दध्यस्थिसक्थ्यक्ष्णामनङ्।

( दधि अस्थि-सक्थि-अक्ष्णः ६।, अनङ् ।१। )।

एषामनङ् स्यात् टाद्यचि, अङावितौ। (११८) अनो ऽल्लोपः। दध्ना दध्ने दध्नः दध्नः दध्नोः दध्नां दध्नि दधनि दध्नोः। *शेषं वारिवत्। एवम् अस्थि सक्थि अक्षि।

सुधि सुधिनी सुधीनि। हे सुधे हे सुधि। द्वौ प्रोवत्। सुधिया सुधिना इत्यादि। एवं प्रध्यादयः।

मधु मधुनी मधूनि। हे मधो हे मधु। द्वौ प्रोवत्। मधुना मधुभ्यामित्यादि। एवमम्बु-मान्वादयः। (११७) पाददन्तेति स्नु वा। स्नूनि मानूनि इत्यादि भेदः।

धातृ धातृणी धातॄणि। धौ हे धातः हे धातृ। द्वौ प्रोवत्। धात्रा धातृणा इत्यादि। एवं ज्ञातृ-कर्त्रादयः।

लुप्, अतएव वृक्षत्वप्रवृत्तिनिमित्तेन पुंसि वर्त्तते. क्लीवे तु फलत्वप्रवृत्तिनिमित्तेन इति न उक्तपुंस्कम्।

१७३। दध्यस्थि। दधि च अस्थि च सक्थि च अक्षि च तत् तस्य। एषां गौणेऽपि अनङ्, तेन अतिदध्ने सुसक्थ्ने विप्राय इत्यादि। क्लीवानुवृत्तेः दधिर्नाम कश्चित् तेन, दधिना इत्यादौ न स्यात्। स्नूनीति—इदं नेच्छन्ति परे (१)।

(१) सानुशब्दस्य स्न्वर्थे इति सिद्धान्तकौमुद्यां ७।१।७४। सूत्रस्य वृत्तिः। तद्व्याख्यायां तत्त्वबोधिन्यां यथा मास-पृतना-सानूनामिति वार्त्तिककारोक्त्येति-भावः। स्नुः प्रस्थः सानुरस्त्रियामित्युभयलिङ्गः सानुशब्दस्तस्य नपुंसकत्वे रूपमाह स्नूनि सानूनीति। पुंसि तु स्नून् सानून् इत्यादि।

१७४ । एचो युत् स्वं ।

( एचः ६।, युत् ।१।, स्वं २। ) ।

प्रद्यु (१) प्रद्युनी प्रद्यूनि । हे प्रद्यो हे प्रद्यु । द्यो प्रौवत् । प्रद्यवा प्रद्युना इत्यादि ।

सुरि (२) सुरिणी सुरीणि । हे सुरे हे सुरि । सुराया सुरिणा सुराभ्यामित्यादि ।

सुनु (३) सुनुनी सुनूनि । हे सुनो हे सुनु । सुनावा सुनुना इत्यादि ।

इति अजन्त क्लीवलिङ्गपादः ।

इति अजन्ताध्यायः ।

---

१७४ । एचो युत् । इश्च उश्च तत्, तस्मात् न युत् । एचः स्वं प्राप्नुवतो युत् स्यादित्यर्थः । एचः कण्ठ्यत्वात् एषां यो येन इति नियमात् अकारे प्राप्ते नियमोऽयम् । प्रद्यु इत्यादि—प्रकृष्टा द्यौर्यस्य कुलस्य इत्यादिकर्मिण वाक्यम् ।

इत्यजन्तनपुंसकपादः ।

इत्यजन्ताध्यायः ।

(१) प्रकृष्टा द्यौः स्वर्गो यस्मात् तत् प्रद्यु पुण्यं प्रद्यौर्योगश्च ।

(२) शोभनो रा धनं यस्य तत् सुरि कुलं, सुराः पुमांश्च ।

(३) शोभना नौर्यत्र तत् सुनु जलं, सुनौर्देशश्च ।

---

## हसन्त-पुंलिङ्गशब्दः ।

१७५ । द्विरुक्त-जक्षादी द्विः ।

( द्विरुक्त-जक्षादी १॥, द्विः १। ) ।

कृतद्वित्वशब्दो जक्षादिश्च द्विसंज्ञः स्यात् ।

अमरगुरु-सम-श्रीवोपदेव-प्रणीते
प्रकरण-परिपाटी-जन्य-शोभा-विभाते ।
सुमति-जन-विनोदिन्यद्भुते मुग्धबोधे
प्रविलसतु कृताध्यायेऽत्र टीका द्वितीये ॥

---

१७५ । द्विरुक्त । द्विरुक्तं यस्य सः (१) । जक्ष आदिर्यस्य सः द्विरुक्तश्च जक्षादिश्च तौ । जक्षादिर्यथा—सप्त जक्षादयः प्रोक्ता जक्षि-जागर्त्ति-शास्तयः । दरिद्राति-चकास्ती च दीधीवेव्यौ च वैदिकौ । पूर्व्वत्र प्रयोजनाभावादत्र संज्ञा क्रियते । संज्ञापादं परित्यज्य द्विसंज्ञाकरणात् क्वचिन्न स्यात्, तेन जक्षिवान् पापचवान् दद्दशिवान् इत्यादौ नुण् स्यादिति कश्चित् ।

(१) द्वौ वारौ उक्तं कथनं यस्य सः । अत्र दुर्गादास —अत्र द्वेरेकत्वेऽपि द्विरुक्तजक्षादौ इति द्विवचनं, प्रकृतिविकृतिभेदान्न विरुद्धम् । अतएव द्वौ द्वौ माषादिमाषौ स्याद्धतुरित्यमरः । एवं युगलौ कनुयेत्यत्रापि बोध्यम् । ..........दीधीवेवी इति द्वौ वैदिकावात्मनेपदिनौ विभक्तिव्यत्ययात् परस्मैपदे अनुसिद्धेरिति अनर्थम् पुरुस्थासीमति गुणे अदीधयुः अवेव्युरिति कामधेनौ वोपदेव इत्याह ।

१७६ । **ह्रो ढो भौ ।** ( ह: ६।, ढ: १।, भौ ७। ) ।

हस्य ढ: स्यात् भौ परे । (१४८) आत्रोब्भसात् से लोप: । (६५) झप्झसोरिति चप्जबौ वा । लिट् लिड् लिहौ लिह:, लिहं लिहौ लिह:, लिहा लिड्भ्यामित्यादि ।

१७७ । **दादे र्घ: ।** ( दादे: ५।, घ: १। )।

दकारादेर्हस्य घ: स्यात् भौ परे ।

१७६ । ह्रोढ़: । भावित्युक्तेर्न हसे धोर्भमे तयोरन्ते च हस्य ढ़: स्यात् ।

१७७ । दादे: । ह्रो भौ इत्यनुवर्त्तते । द आदिर्यस्य स तस्मात् । तथाच दादिवर्णात् परस्य हस्य घ इत्यर्थ: । तेन धुक् धिक् धक् इत्यादावुकारादेरपि हस्य घ: । ध्रुक द्रोहमाचक्षान: ध्रोक् इत्यादौ मुहादित्वात् घड् । दादेर्धोर्हस्य घ इति भाष्यं, तेन दाम-लिहमाचक्षाण: दामलिक् इत्यादौ स्यात् । भ्वादि गण पठित-दादि-धोरिति परे । तन्मते दामलिट् दामलिड् दामलिड्भ्यामि-त्यादि । एके तु दादेरिति हस्य विशेषणम्, अव्यवधानेनासम्भवात् एकाज् व्यवधाने स्यात्, न त्वनेकाज् व्यवधाने । तेन ध्रुक् ध्रोक् मित्रध्रुक् इत्याद्याहु: (१) ।

(१) एकेषां मते अनेकाज्व्यवधाने दामलिडित्यादि प्रत्युदाहरणम । अस्य दुर्गादास:—हस्याव्यवधानन्तु सजातीयत्वादव्यवधानवत् । तेन द्राघ्वृङ्जागरे क्विपि ध्राक ध्राग धाग्भ्यामित्यादीत्याह ।

१७८। झभान्तस्यादिजबां झभाः फे धोस्तु सध्वेऽन्ते च ।

( झभान्तस्यादिजबां ६॥, झभाः १॥, फे ७।, धोः ६।, तु ।१।, सध्वे ७।, अन्ते ७।, च ।१। ) ।

झभान्तस्यादौ स्थितानां जबानां झभाः स्युः फे परे, धोस्तु सध्वे अन्ते च ।

धुक् धुग् दुहौ दुहः, दुहं दुहौ दुहः, दुहा धुग्भ्यामित्यादि ।

१७८। झभान्त। झभः अन्तो यस्य स तस्य, तद्‌गुणसंविज्ञानेन झभसहितो जब् गृह्यते। आदौ जब् आदिजब् तेषां। तथाच झभान्तस्यादौ स्थितानां जबां झभा इत्यर्थः (१)। तेन गोदुहमाचक्षाणः गोधुक्, गर्द्दभमाचक्षाणः गर्द्धप्, डुण्डुभमाचक्षाणः डुण्ढुप्, इत्यादौ गडयोर्न घढौ। नृदेहमाचक्षाणः नृदेट्, देवदेहमाचक्षाणः देवदेट्, इत्यत्र धघौ नेच्छन्ति केचित्। देवदेक् देवदेग्भ्याम् इत्यादौ घत्वमिच्छन्त्यन्ये। सश्च ध्वश्च तत् तस्मिन्, अनयोरकार उच्चारणार्थः, तेन धुक्षे, अधाक्षीत्, धक्ष्यति, धुग्ध्वे इत्यादौ स्यात्। अन्ते यथा—अधोक्, गुहधोर्यङ्लुकि अजोघोट् इत्यादि। पूर्व्वसूत्रात् भावित्यनुवृत्तौ फग्रहणम् एकवर्णव्यवधानेऽपि, तेन भुक्, मित्रभुक्, इत्यादि। जबामिति किं—मृगावित्। व्यधधोः सनि विव्यत्सति, वस्यावर्गीयत्वात् न

(१) एकाज-व्यवहितानां एकाच्-हस-व्यवहितानाञ्च जबां झभाः स्युः, न तु हसजादिव्यवहितानामिति। गोयीचन्द्रेणाप्येवमुक्तम्।

१७९ । मुहां घङ् वा भौ ।

( मुहां ६।॥, घङ् ।१।, वा ।१।, भौ ७। । )

मुहादीनां घङ् वा स्यात् भौ परे ।

मुक् मुग् मुट् मुड् मुहौ मुहः, मुहं मुहौ मुहः, मुहा मुग्भ्यां मुड्भ्यामित्यादि । एवं द्रुह स्नुह नश स्निहः ।

---

भत्वम् । केचित् त्रिभ्यक्षति इत्याहुः । एके तु पूर्व्ववदित्याहुः (१) । अत्र जबां झभा इति लिपिकरप्रमादः । एकाचो बशो भष् झष-न्तस्य स्ध्वोरिति (८।२।३७) पाणिनिसूत्रात् । अतएव हिजिह्व-माचक्षाणो हिजिट् इत्यादौ न स्यात् । (२)

१७९ । मुहाम् । बहुनिर्देशो गणार्थः । दादेर्घ इत्यनेनास्य योगविभागो नक्-सिद्धार्थः, तत्र हानुवृत्तेः ।

---

(१) त्रिव्यक्षतीत्याहुरित्यर्थः ।

(२) अत्र जबां झभा इति लिपिकर प्रमाद इत्युक्तवता तर्कवागीशेन स्वटीका-करणात् प्रागपि तादृक्पाठस्यास्तित्वमङ्गीकरमपि स्वीकृतम् । तेनैवाशाभिरादौ संज्ञाप्रकरणे अ इ उ ऋ लृ कैति सूत्रे प्रत्याहारोपदेशे तर्कवागीशष्टता डबिति संज्ञा न दर्शिता । तदत्र जबां झभा इति पूर्व्वतन एव पाठो निवेशितः । जकारस्य वभक्तानुचितत्वेऽपि संक्षेपकथनाय यथाचार्य्येण जबित्युक्तं तथा कातन्त्रेऽपि चतु-र्थवृत्तौ "हचतुर्थान्तस्य धातोस्तृतीयादेरादिचतुर्थत्वमकृतवत" (१८२) इति सूत्रे तृतीयादेरिति शर्व्ववर्म्मणापि । संक्षिप्तसारे तु 'तुर्य्यान्तस्तृतीयोऽज-स्तुर्य्यो भादौ' इति सुबन्तपादस्य १५८ सूत्रे अज इत्युक्त्वा तत्रैव १६० सूत्रे अज इति किं जभ-जश्यते इत्युदाहृतम् । अतः पाणिनिक्रमदीश्वरयोरैकमत्यं दृश्यते । तस्मात्तैकवाक्यत्वे एकस्मिन् सूत्रे एकमात्र-कार्य्यार्थमेकसंज्ञाकरणा-पेक्षया अत्र सूत्रे जकारस्य झकारो नेति वक्तव्यमस्तु । हिजिह्वमाचक्षाणं हिजिट् इत्युदाहरणं नापि न सन्ध्याद्युविधौ इत्यत्र नञा निर्दिष्टमित्यभि-

१८० । वाहो वौ पौ श्वेतात्तु वा ।

( वाहः ६।, वा ।१।, औ ।१।, पौ ७, श्वेतात् ५।, तु ।१।, वा ।१। ) ।

वाहो वा शब्दस्य औः स्यात् पौ परे, श्वेतवाहस्तु वा ।

विश्वौहः विश्वौहा इत्यादि । शेषं लिड्वत् ।

१८१ । अनादूः । ( अनात् ५।, ऊः १। ) ।

अनवर्णात् परो वाहो वा ऊः स्यात् पौ परे । भूहः भूहा इत्यादि ।

---

१८० । वाहो । परसूत्रे अनादित्युक्तेः अवर्णादस्य विषयः ।

१८१ । अना । न अः अनस्तस्मात् अवर्णभिन्नादित्यर्थः, तेन शाल्यूहः, मरुदूहः इत्यादि (१) । ननु पूर्व्वसूत्रे औकारं विनापि ऊटि आदूटो व्रिरिति व्रौ विश्वौहः विश्वौहा इति चेत् सत्यं, वैचित्र्यार्थमिदमिति । यद्वा पूर्व्वसूत्रे पौ विधानात् दा ल लूनौ क्ति दातिस्तां वहति दातिवाट्, तस्यापत्यं दात्यौहः इत्यनवर्णादपि औरिति स्वामी । दात्यूह इति रायः । इदं छान्दसमिति परे ।

---

न्यायामङ्गीकारे कथं सङ्गच्छते तत् सुधीभिश्चिन्त्यमिति । प्रयोगरत्नमालायां तृतीयविन्यासे "तृतीयाद्यास्तुर्य्यहान्ता गणोक्ता धातवो यदी"ति ४४४ सूत्रेण जकारस्य झकारो विहितः । तुर्य्याद्याः स्युरिति वृत्तिः । संजभते संभव् संभप् इत्युदाहरणम् ।

(१) "यादृगजातीयस्य विप्रतिषेधो विधिरपि तादृगजातीयस्येति न्यायादवर्णपदेन अवर्णसजातीयोऽत्रैव ग्राह्यो न तु हसः । ततश्च पूर्व्वसूत्रमवर्णविषयं हसविषयञ्च, एतत् सूत्रमिवर्णाद्यच्विषयमिति बोध्य"मिति दुर्गादासः ।

### १८२। अनडुच्चतुरोऽणाणौ धिघ्योः।

( अनडुह् चतुरः ६।, अण्-आणौ १॥, धिघ्योः ७॥ )।

अनडुहश्चतुरश्च धौ परे अण् घौ परे आण् स्यात्, ण इत्।

### १८३। हो नः मौ। ( हः ६।, नः १।, मौ ७। )।

अनडुहो हस्य नः स्यात् मौ परे। अनड्वान्। हे अनड्वन्। अनड्वाहौ अनड्वाहः। अनडुहः अनडुहा।

### १८४। स्रम्-ध्वम्-वस्वनडुहां दङ् फे।

( स्रम् ध्वम्-वसु-अनडुहां ६॥, दङ् १।, फे ७। )।

एषां दङ् स्यात् फे परे, ङकाविती। अनडुद्भ्यामित्यादि।

१८२। अन। अनडुच्च चतुश्च तत् तस्य, अण् च आण् च तौ, धिश्च घिश्च तौ तयोः, अनडुच्चतुर इति द्वयोरनुकरणात् क्रम्। समाहारात् न यथासंख्यं, निमित्तविधेययोस्तु समसंख्यत्वात् स्यादेव।

१८३। हो नः। चतुरो हकाराभावादाह अनडुह इति। नकारेऽकार उच्चारणार्थः। अनड्वानिति। सूत्रद्वयं गौणेऽपि, तेन अत्यनड्वान्, प्रियानड्वान् इत्यादौ स्यात्। प्रियानड्वाहौ इति तु पद्यतीत्यादिना वा निपातनात्।

१८४। स्रम्। स्रश्च ध्वश्च वसुश्च अनड्वांश्च ते तेषाम्।

कार्त्तिकेयस्तु "अवर्णनिषेधात् अवर्णजातीयोऽजेव ग्राह्यो न तु हसः।"...केचित्तु अनवर्णाद्दमादपि, तेन महद्रूह इत्याहुरित्याह। प्रयोगरत्नमालायां तृतीयविन्यासे च "अनवर्णाच्च ऊः" (१८२) इति सूत्रप्रत्युदाहरणे अचः किम् उर-

१८५। श्वेतवाहऽवयाजुक्थशास्पुरोडाशां डस्ङ्।

( श्वेतवाह—पुरोडाशां ६।।।, डस्ङ् ।१। ) ।

एषामन्तस्य डस्ङ् स्यात् फे परे, ङडावितौ।

१८६। अत्वस्मोऽधोः सौ घोंऽधौ।

( अतु-अस: ६।, अधोः ६।, सौ ७।, घं: १।, अधौ ७। )

अत्वन्तस्यासन्तस्य च घं: स्यात् अधौ सौ परे, न तु धोः।

श्वेतवाः।

---

वस्वित्युदित्निर्देशात् चर्म्म वस्ते (१) क्विपि चर्म्मवः, सुवः, इत्यादौ न स्यात्। विद्धोरपवादोऽयम् (२)।

१८५। श्वेतवा। श्वेतवाश्च अवयाश्च उक्थशाश्च पुरोडाश्चेति तेषाम्। अत्वस्मोऽधोरित्यत्राधिकारान्नैवात्वन्तस्याऽसन्तस्य च घंविधानादेभ्यो डसिति न कृतम्। इदं छान्दसमिति परे।

१८६। अत्व। अतुश्च अस् च तत् तस्य, न धुरधुस्तस्य, न धिरधिस्तस्मिन्। अत्वित्युदिन्निर्देशात्, गच्छन्नित्यादौ न स्यात्। गोमन्तमिच्छन् गोमान् (३) इत्यादौ तु ञ्यादित्वात् धुत्वेऽपि अधुपूर्व्वस्य धुत्वाङ्गीकारात् घं:।

---

सौहः श्चौत्यमेव। सुरसरिटौहो महेशस्य विद्युतौह इत्युदाहृतं पुरुषोत्तमेन। उरसौह इत्यत्र संज्ञापूर्व्वकत्वान्न विसर्ग इति तट्टीका।

(१) परिदधातीत्यर्थः।

(२) यथासम्भवं विसर्गढकारापेक्षया विशेषविधिरयमित्यर्थः।

(३) अत्र क्योऽव्यादिति क्ये पश्चात् क्विपि हसाल्लोप इति क्यप्रत्ययस्य अकारयकारयोर्लोपे गोमत् इति स्थिते सौ रूपम्।

## १८७ । ङसङो धौ वा ।

( ङसङः ६।, धौ ७।, वा ।१। ) ।

ङसङो धौ परे घौ वा स्यात् । हे श्वेतवाः हे श्वेतवः ।

श्वेतवाहौ श्वेतवाहः, श्वेतवाहं श्वेतवाहौ श्वेतौहः श्वेतवाहः, श्वेतौहा श्वेतवाहा श्वेतवोभ्यामित्यादि ।

(११२) क्विलादिति षः । तुराषाट् तुराषाड् तुरासाहौ तुरासाहः, तुरासाहं तुरासाहौ तुरासाहः, तुरासाहा तुराषाड्भ्यामित्यादि ।

चत्वारः चतुरः, चतुर्भिः चतुर्भ्यः । (१११) नुमाम इति चतुर्णाम् ।

## १८८ । रङो विः सुपि ।

( रङः ६।, विः १।, सुपि ७। ) ।

रङो विः स्यात् सुपि परे, न त्वन्य-रेफस्य । चतुर्षु ।

प्रियचत्वाः, हे प्रियचत्वः, प्रियचत्वारौ प्रियचत्वारः प्रियचत्वारं प्रियचत्वारौ प्रियचतुरः, प्रियचतुरा प्रियचतुर्भ्यामित्यादि ।

---

१८७ । ङसङः । इदं नित्यमिति परे ।

१८८ । रङः । अनियमे प्राप्ते (१) नियमोऽयम् । चिकीर्षु इत्यत्र तु अरादिति विधानात् न विः (२) । कश्चिदरादिति नाह

---

(१) फे परे रेफमात्रस्य विसर्गे प्राप्ते इत्यर्थः । अतएवोक्तं सिद्धे सत्यारम्भो नियमार्थेति ।

(२) स्यान्तस्यारादित्यत्र अरादिति भिन्नपदकरणात् । अतएवोक्तं दुर्गादासेन "स्यान्तस्यारादित्यत्र स्यान्तस्येति भिन्नपदग्रापकात् रात् रङो लोप" इति ।

(१६५) नसब्महन्न इति घंत्वे, (११८) नो लुप्। 'राजा, हे राजन्, राजानौ राजानः, राजानं राजानौ। (११८) अनोऽल्लोपः। राज्ञः, राज्ञा राजभ्यामित्यादि। ङौ—राज्ञि राजनि।

(११८) अम्वस्यादित्युक्तेः ब्रह्मणः यज्वनः इत्यादि। शेषं राजवत्।

१८९। हन्पूषार्य्यम्नोऽधौ सौ शौ घंः।

( हन्—इनः ६।, अधौ ७।, सौ ७।, शौ ७।, घंः १। )।

एषां घंः स्यात् अधौ सौ परे, शौ च।

वृत्रहा हे वृत्रहन् वृत्रहणौ वृत्रहणः, वृत्रहणं वृत्रहणौ।

१९०। हनो ङ्को घ्नो न णः।

( हनः ६।, ङ्कः ६।, घ्नः १।, न ।१।, णः १। )।

हनस्थाने जातस्य ङ्कस्य घ्नः स्यात्, तस्य च नस्य णो न स्यात्।

तन्मते स्यान्तस्याराादिति नञा निर्दिष्टस्यानित्यत्वात् षलोपे रङ्-भिन्नरेफस्य न विः।

१८९। हन्। हञ्च पूषा च अर्य्यमा च इञ्च तत् तस्य, न धिरधिस्तस्मिन्। सिश्योरेव नियमात् वृत्रहणौ इत्यादौ नसब्-महन्न इति न घंः। हन इति क्विबन्तस्य ग्रहणं, तेन शत्रुहा इत्यादि। वृत्रहणाविति एकाचकोरिति नस्य णो नित्यम्। इनो ग्रहणं अतु-मन् अन्-इन्-नस्ग्रहणे अर्थवद्ग्रहणाभाव इति ज्ञापनार्थं (१) तेन यशस्वी इत्यादावपि स्यात्।

(१) येन केनचित् प्रकारेण अनुभागान्तादीनां ग्रहणमिति ज्ञापनार्थमित्यर्थः।

वृत्रघ्नः वृत्रघ्ना वृत्रहभ्यामित्यादि ।

एवं पूषन् अर्य्यमन् शार्ङ्गिन् यशस्विन् प्रभृतयः ।

१८१ । पूष्णो ङि ङिर्व्वा ।

( पूष्णः ५।, ङिः १।, ङिः १।, वा ।१। ) ।

पूषि पूष्णि पूषणि ।

१८२ । मघोनस्तुङ् वा क्तिप्योः ।

( मघोनः ६।, तुङ् ।१।, वा ।१।, क्तिप्योः ७। ) ।

मघवन् शब्दस्य तुङ् वा स्यात् क्तौ पौ च परे, उङावितौ ।

१८३ । व्रिदचाऽर्ह्वे नुण् घौ ।

( व्रिदचः ६।, अर्ह्वेः ६।, नुण् ।१।, घौ ७। )

उकारेत ऋकारेतोऽचश्च नुण् स्यात् घौ परे, न तु ह्वेः ।

१९० । हनो । हन्निति क्विबन्तस्य ग्रहणात् अर्कोत्यादौ न स्यात् । वृत्रघ्न इति एकाच्-कुत्वात् नित्यं णत्वनिषेधः ।

१९१ । पूष्णः । इदं नेच्छन्ति परे ।

१९२ । मघोनः । क्तिश्च पिश्च तौ तयोः । वाशब्दस्य व्यवस्थावाचित्वात् मघवद्ब्रलज्ज्ञानिदानमित्यत्र से क्तेर्लुक्यपि स्यात् (१) ।

१९३ । व्रिद । उश्च ऋश्च व्रृ, स इत् यस्य स व्रित्, व्रिच्च

(१) अत्र दुर्गादासोऽपि क्तौ परे विहितत्वात् समासे क्तेर्लुकि त्यल्लोपे त्यलक्षणमिति न्यायेन प्राप्तव्यकार्य्यस्य लुकि न तन्नेति निषेधेऽपि संज्ञा निर्दिष्ट मनित्यमिति न्यायात् मघवतो भक्तिः मघवद्भक्तिरित्यादि स्यादिति कश्चित् । अतएव मघवद्ब्रलज्ज्ञानिदानमिति दुर्गसिंहधृतमित्याह ।

१८४। स्यान्तस्यारात् लुप् फे।

( स्यान्तस्य ६।, अरात्, ५।, लुप् ।१।, फे ७। )

स्यस्यान्तस्य लुप् स्यात् फे परे, न तु रात् परस्य।

मघवान् मघवा, हे मघवन्, मघवन्तौ मघवानौ मघवन्तः मघवानः, मघवन्तं मघवानं मघवन्तौ मघवानौ।

---

अच तत् तस्य। अजिति क्विबन्ताच्ग्रहणात् तिर्य्यङ् उदङ् इत्यादि (१)। त् चासौ ह्निश्चेति ह्निः, न ह्निरह्निस्तस्य ; तथाच तान्तह्नेर्नुण् न स्यात् इत्यर्थः, (२) तेन ददत् जागरिष्यत् इत्यादौ न स्यात्, जगन्वान् जजागृवान् इत्यादौ तु स्यादेव। गोमन्त-मिच्छन् गोमान् इत्यादौ पूर्व्वोदित्त्वमाश्रित्य स्यात्॥

१८४। स्यान्त। स्यस्यान्तः स्यान्तस्तस्य, न रः अरस्तस्मात। कथं चिकीर्ष इति ? षस्य रङि ढोढि इति रे रलोपे

(१) "अच् इति अञ्चुगतिपूजनयोरित्यस्य गतावर्थे क्विपि लुप्तनकारस्य ग्रहणं, तेन प्राङ् प्राञ्चौ इत्यादि, अन्यत्र बह्वच् इत्यादि। * * * अज् इत्य अल्पार्थ एव। तेनायमर्थः— ह्नेः परस्य शत्रन्तस्यैव नुण् न स्यात्, अन्यस्य तु स्यादेवेति। यथा ददत् दधत् पापचत् बीभुवत् जक्षत् जाग्रदित्यादि। बुभूषन् चिकीर्षन्नित्यादौ तु लोपो-ऽतोऽद्देचोरित्यनेन कृतस्य शपो लोपस्य स्थानिवत्त्वात् ह्ने परत्वाभावे नुण् स्यादेव। न च ददादित्यादावपि लुगह्वोऽप इत्यनेन कृतस्याकारलोपस्य स्थानिवत्त्वात् नुणापत्तिरिति वाच्यम्। लोपोऽस्योभाङोरिति लोपोऽतोऽद्देचोरिति इत्था-ल्लोपोऽगितोत्येतेभ्योऽन्यसूत्रेण कृतस्य अकारलोपस्य स्थानिवत्त्वानङ्गीकारात्। अस्य बीजं सकोऽल्लोपोऽन्यस्य इत्यत्र दृश्यम्। ह्नेः परात् शत्रन्तादन्यस्य तु ददिवान् जजागृवान् जग्मिवान् जगन्वान् चावर्दिष्यन् इत्यादौ नुण् स्यादेवेति दुर्गादासः।

(२) येन विधिस्तदन्तस्येति न्यायादाह तान्तह्नेरिति।

१८५ । श्व-युव-मघोनामुर्व्वोऽते पौ ।

( श्व युव-मघोनां ६।।।, उः १।, वः ६।, अते ७।, पौ ७। ) ।

एषां वशब्दस्य उः स्यात् पौ परे, न तु ते ।

मघवनः मघोनः, मघवता मघोना, मघवद्भ्यां मघवभ्यामित्यादि ।

शुनः शुना । यूनः यूना इत्यादि ।

अरादिति न विः । चतुरित्यत्र फे रेफसकारयोर्विसर्गः (१) । नञा निर्दिष्टस्यानित्यत्वात् रेफात् शसो लोप इति कश्चित् ।

मघवानिति(२)—नस्य वादेशे मघवानिति परे । छान्दसमिति चान्द्राः । यदुक्तं भाष्ये—"अर्व्वणस्तृ मघोनश्च न शिष्यं छान्दसं हि त"दिति (३) भाषायां प्रयोगदर्शनादेवानेन तुङिति क्रतम् । तथाच—हविर्जक्षिति निःशङ्को मखेषु मघवानसौ इति भट्टिः । पौ मघवन्तमित्यादि वक्ष्यति ।

१८५ । श्वयुव । श्वा च युवा च मघवा च ते तेषाम् । मघोनामिति नान्तनिर्द्देशात् नान्तानामेव, तेन मघवत इत्यादौ तुङि माभूत् । न तः अतस्तस्मिन् । गौणेऽप्ययं विधिः, तेन प्रासशुनः हृदयूनः अतिमघोनः बहुशुन इत्यादौ स्यात् । ते तु शौवनम् इत्यादि वक्ष्यति ।

(१) १०२ सूत्रस्य टीका द्रष्टव्या ।

(२) मह्यते पूज्यते इत्यर्थनन्तो निपातः । धातुपारायणे तु मघो यागस्तद्योगान्मतुबित्यमरटीकायां रघुनाथः ।

(३) एवं चार्व्वन् मघवन् शब्दस्य भाषायां नास्ति प्रयोग इत्युक्तं भवति"—इति भाष्यटीकायां कैयटः ।

१८६। अर्व्वणोऽनञस्तुङ् त्येऽसौ तु।

(अर्व्वणः ६।, अनञः ६।, तुङ् ।१।, त्ये ७।, असौ ७।, तु ।१।)।

नञ् वर्जस्यार्व्वणो नस्य तुङ् स्यात् असौ त्ये परे।

अर्व्वन्तौ अर्व्वन्तः, अर्व्वन्तम् अर्व्वन्तौ अर्व्वतः, अर्व्वता अर्व्व-द्भ्याम् इत्यादि। अनञः किम् अनर्व्वा हे अनर्व्वन्, अनर्व्वाणौ अनर्व्वाणः, इत्यादि। शेषं यज्ववत्।

१८७। पथिमथ्यृभुक्षां थितोर्नमौ घौ।

( पथि-मथि-ऋभुक्षां ६।।।, थ इतोः ६।।, नमौ १।।, घौ ७। )।

पथिन् मथिन् ऋभुक्षिन् एषां थस्य नम् स्यात्, इकारस्य चाकारः, घौ परे।

---

१८६। अर्व्व। न विद्यते नञ् यस्य स तस्य, न सिरसि-स्तस्मिन्। त्यसामान्यग्रहणात् अर्व्वतौ, अर्व्वत इदम् आर्व्वतम्, अर्व्वन्तमिच्छति अर्वत्यति इत्यादौ स्यात्। सहस्रदृगर्व्वगर्व्वे (१) इति तु से क्तोर्लुकि लुकि न तत्रेति निषेधः। केचित्तु अर्व्वन्तं गतः अर्व्वद्गत इत्यादौ से क्तोर्लुक्यपि स्यादित्याहुः (२)।

१८७। पथि। पन्थाश्च मन्थाश्च ऋभुक्षाश्च ते तेषाम्। थश्च इश्च तौ तयोः, नम् च अश्च तौ। गौणेऽपि अयं विधिः, तेन अपन्थाः अतिपन्थाः इत्यादौ स्यात्।

---

(१) सहस्रदृक् इन्द्रस्तस्य अर्व्वा घोटकस्तस्य गर्व्व इत्यर्थः।

(२) स्वमते तु क्तोर्लुकि लुकि न तत्रेति निषेधेऽपि नञा निर्द्दिष्टमनित्यमिति न्यायात् समाधानीयमिति दुर्गादासः।

१९८। **टेरासौ।** (टेः ६।, आ ।१।, सौ ७।)।

पथ्यादीनां टेरा स्यात् सौ परे। पन्थाः पन्थानौ पन्थानः, पन्थानं पन्थानौ।

१९९। **लोपोऽच्यघौ।**

(लोपः १।, अचि ७।, अघौ ७।।)

पथ्यादीनां टे र्लोपः स्यात् अघावचि परे।

पथः पथा पथिभ्यामित्यादि। एवं मन्थाः, ऋभुक्षाः।

(१३२) डतिसङ्ख्याया इति। पञ्च पञ्च पञ्चभिः पञ्चभ्यः पञ्चभ्यः।

१९८। टेः। नान्तत्वात् घे सिद्धे टेराविधानात् (१) पन्थाः इत्यादौ न सेर्लोपः। डः साविति कृते सिद्धे (२) टिग्रहणं परसूत्रार्थम्।

१९९। लोपः। न घिरघिस्तस्मिन्। अघिग्रहणेन नञ् युक्तन्यायेन स्याद्यच्येव, तेन पथ्यश्वौ ऋभुक्षिणौ स्त्रीत्यादौ न स्यादिति कश्चित्। उत्सर्गापवादयोः क्वचित् उत्सर्गोऽपि निविशते इति न्यायात् क्वचित् घावचि प्राप्तटिलोपनिवारणार्थमित्यन्यः। पूर्ववत् गौणेऽपि, तेन सुपथी कुले इत्यादौ स्यात्।

(१) लोपस्वरादेशयोः स्वरादेशो विधिर्बलवानिति न्यायादिति शेषः।

(२) सौ परे पथ्यादीनां डे इकारस्य चाकारे यद्यपि पन्थाः इत्यादयः सिध्यन्ति तथापीत्यर्थः।

२०० । **नो नामि घः ।**

( नः ६।, नामि ७।, घः १। ) ।

नान्तस्य नामि परे घः स्यात् । पञ्चानां, पञ्चसु ।

२०१ । **वाष्टनो जस्शसो डौः ।**

( वा ।१।, अष्टनः ५।, जस्शसोः ६।।, डौः १। ) ।

अष्टनः परयो र्जस्शसो र्डौः स्यात् वा, ड इत् ।

अष्टौ अष्ट, अष्टौ अष्ट ।

२०२ । **डा तौ वा ।** (डा ।१।, तौ ७।, वा ।१।)।

अष्टनो डा स्यात् वा तौ परे, ड इत् । अष्टाभिः अष्टभिः, अष्टाभ्यः अष्टभ्यः, अष्टाभ्यः अष्टभ्यः, अष्टानाम्, अष्टासु अष्टसु ।

२०० । नोना । लुपि नाद्यविधिरिति निषेधे प्राप्ते विधिरयम् । गौणे नुमभावात् घाभावस्तेन प्रियपञ्चर्णामित्येव स्यात् ।

२०१ । वाष्टनः । जश्च शश्च तौ तयोः । विधानसामर्थ्यात् लुक् बाध्यते, डावभावपक्षे जस्शसोर्लुक् । एवं परमाष्टौ परमाष्ट । मुख्य एवायं विधिस्तेन प्रियाष्टानो विप्रा इत्यादौ न स्यात् ।

२०२ । डा । भि इति कृते सिद्धे त्विग्रहणात् गौणेऽपि डा वा, तेन सौ प्रियाष्टाः पक्षे प्रियाष्टा, औकारे प्रियाष्टौ प्रियाष्टानौ, जसि प्रियाष्टाः प्रियाष्टानः, अमि प्रियाष्टां प्रियाष्टानं, शसि प्रियाष्टाः प्रियाष्ट्नः, टादिषु प्रियाष्टा प्रियाष्ट्ना, प्रियाष्टाभ्यां प्रियाष्टभ्याम् इत्यादि । ङौ प्रियाष्टे प्रियाष्ट्नि, प्रियाष्टनि । तथाच-साष्टे शते सुवर्णानामित्यमरः ।

२०३। धोर्मो नः फम्वि।

( धोः ६।, मः ६।, नः, १।, फम्वि ७। )।

धो र्मस्य नः स्यात् फे मे वे च परे। प्रशान् प्रशामौ प्रशामः, प्रशामं प्रशामौ, प्रशान्भ्यामित्यादि।

२०४। इदमोऽयमियं पुंस्त्रियोः सौ।

( इदमः ६।, अयम्-इयम् ।१।, पुंस्त्रियोः ७।, सौ ७। )।

इदमः पुंलिङ्गस्त्रीलिङ्गयोः क्रमेणायमियमौ स्तः सौ परे। अयम्।

२०५। दोमोऽदमश्च क्तौ।

( दः ६।, मः १।, अदमः ६।, च ।१।, क्तौ ७ )।

इदमोऽदमश्च दस्य मः स्यात् क्तौ परे।

इमौ इमे, इमम् इमौ इमान्।

२०३। धोः। फश्च, म च, व च, तत् तस्मिन्। मवयोर्यथा- जंगन्मि, जंगन्वः जंगन्मः जगन्वान् इत्यादि।

२०४। इदमः। अयञ्च इयञ्च तौ। लुप्तप्रोदम् (१)। मान्त- निर्देशात् न टेरः। पुमांश्च स्त्री च ते तयोः। परसूत्रेऽनकग्रहणात् अनेन साकोऽप्यादेशौ। इदंविप्रः इदंस्त्रीति से क्तौर्लुकि लुक्ति न तवेति निषेधः। स्विमंशस्यैव विधानात् अतीदम् इत्यादौ न स्यात्। एवं परत्रापि।

२०५। दो। अमावित्यत्र परत्वात् मः (२)।

(१) पुंस्त्रियोरित्यनेन यथासंख्यार्थम्।

(२) विप्रतिषेधे परं कार्य्यमिति न्यायादित्यर्थः। दुर्गादासस्तु अत्र सर्व्व- विभक्तिविषयकस्य दोमोऽदमश्चेत्यस्य बाधकेन त्यदां तदोरित्यनेन डस्य स एवेत्याह।

२०६। टौसीदमोऽनकोऽनः।

( टा ओसि ७, इदमः ६।, अनकः ६।, अन: १। )।

अनक इदमः टौसोः परयोरनः स्यात्। अनेन।

२०७। स्भ्यः। ( स्भि ७।, अः १। )।

अनक इदमः अः स्यात् से भे च परे।

(१०८) आत्विभम्वि। आभ्यां।

२०८। भिस् भिसोऽदसश्च।

( भिस् ।१।, भिसः ६।, अदसः ५।, च ।१। )।

अनक इदमोऽदसश्च परस्य भिसो भिसेव स्यात्, नत्वैस्।

(११०) ब्वे स्भ्यः। एभिः। (१३४) टैत्वे, (२०५) दस्य मत्वे, (११३) ङे स्मै, पश्चात् (२०७) अः। अस्मै आभ्याम् एभ्यः, अस्मात् आभ्याम् एभ्यः, अस्य अनयोः एषाम्, अस्मिन् अनयोः एषु।

अनकः किम्—

---

२०६। टौसो। टाश्च ओश्च तत् तस्मिन्, नास्ति अक् यस्य सः तस्य। इदमो ग्रहणम् अदमो निवृत्त्यर्थम्।

२०७। स्भ्यः। स च भच तत् तस्मिन्। व्युत्क्रमनिर्देशात् लाक्षणिकस्यापि, तेन अस्मै एषामित्यादौ स्यात् [१]।

२०८। भिस्। अनक इत्यस्यादम इत्यत्रान्वयः, तेन अमुकै-

[१] "अत्र अनक इति नञोऽल्पार्थत्वात् अनकौ सभयोः परयोरिमकस्यापि

२०९। त्यादिव्यामभोस्क्तिस्सि वाक् प्राक् टे व्यक दश्च।

( त्यादि–स्से: ६।, वा ।१।, अक् ।१।, प्राक् ।१।, टे: ५।, व्यक ।१।, द: १।, च ।१। )।

त्याद्यन्तस्य व्यस्य म-भ-ओम्वर्जक्यन्तस्से: स्सेश्च टे: पूर्व्वोऽक् स्याद्वा, व्यकस्य दश्च।

इमकेन इमकाभ्याम् इमकैरित्यादि।

रित्यत्र न स्यात्। नेम् अदमय्येत्यकरणात् क्वचिन्नस्यात्, तेन इमै र्गुणै: मसर्षय: स्वर्गं गता इति। इदमर्थं इदशब्दस्य इत्यन्ये।

२०९। त्यादि। ति आदिर्यस्य म:, म च भ च ओश्च तत्, न तत्, अमभोम्, अमभोम क्तिर्यस्मात् स:, स चासौ स्सिश्चेति अमभोमक्तिस्सि:, त्यादिश्च व्यश्च अमभोम्क्तिस्सिश्च स्सिश्च तत् तस्य। पुंस्त्वं सौत्रत्वात्। व्यस्य क: व्यक:। अनयोर उच्चारणार्थ:। अन्त्यस्य कस्य द इति शेष:। अत्र सामान्यशब्दस्य विशेषपरत्वात् मभओमवर्जक्यन्तानां युष्मदस्मद्भवतामेव टे: प्रागक् स्यादित्यर्थ:, तेन त्वयका मयका त्वयकि मयकि भवतका भवतकि इत्यादौ स्यात्। न तु सर्व्वकेण इमकेन इत्यादौ (१)। मभओमि तु युष्मकाम्, युवकाभ्यां युवकयो:, अस्मकासु आवकाभ्यां आवकयो:, भवकत्सु भवकद्भ्यां भवकतोरित्यादि। कश्चित् तु त्वकत्सु त्वकद्भ्यां

ऽभीत: अथ आभ्यां सर्कोऽभीत:। अकोऽप्राप्तिपक्षे एवंरूपसिद्धौ इदं वचनम्, अनुक्तौ मभयो: परयोरिमकप्रयोगनिषेधार्थमिति दुर्गादास:।

(१) अत्र केवलमेते: पूर्व्वोऽक् स्यात् न तु क्यन्तस्येति।

लकातोरित्याह (१) । त्यादिव्ययोस्तावत् भवतकि, पचतकि उच्चकैः धकित् हिरकुत्, अतकि, वकि, इतका इत्यादि । अभिधानात् अल्पादौ ज्ञेयम्

यथा —अल्पाज्ञात-दया-ह्रस्व-कुत्सास्वक् स्यात् प्रयोगतः ।
अनुकम्पायुतानीतौ बहूनां जातिप्रश्नके ॥

अल्पमुच्चैः उच्चकैः, अज्ञातोऽसौ कस्य कीदृशो वा असकौ, दयायां पचति पचतकि, ह्रस्वः असौ असकौ, कुत्सिताः सर्व्वे सर्व्वके, नीतौ —(२) हन्त ते सर्व्वके, हन्तशब्दोऽनुकम्पार्थः, भोः शोकार्त्ताः सर्व्वे तदर्थ्यः । भवतां कतमः कठः कतमक इत्यादि । सगित्यकरणात् (३) किं सामिशब्दयोरेः प्रागक् न स्यात् । तेन कः, सामि (४) इत्यादौ न स्यात् । युष्मकाभ्यं अस्मकाभ्यं, इत्यत्र स्वेरेः प्रागक् । डभ्यम् इति कृतेपि भकारस्थानजत्वात् भोपलक्षितत्वात् वा (५) ।

तूष्णीमः काण् शीले तु कङ् । तूष्णीम्शब्दस्य काण् स्यात्, शीले तु कङ्, ङकावितौ । तूष्णीकामास्ते विज्ञः, तूष्णीकः तूष्णींशीलः । असाधनार्थमिदमिति ।

(१) सर्व्वविश्वेति सूत्रे "परे स्वरूपं नाम्नः" इत्युक्तमत आह कश्चिदिति ।

(२) नीतिः सदाचारव्यवस्थितार्थेन प्रवृत्तिनिवृत्ती इति भोजप्रसारे सुबन्तपादे २८६ सूत्रस्य टीकायां गोयीचन्द्रः ।

(३) टेर्मक इत्युक्ते सित्वात् पूर्व्वमकि सिद्धेऽपि तदकरणादित्यर्थः ।

(४) सामि इत्यव्ययम् ।

(५) विभक्त्यन्तस्येरेः पूर्व्वोऽक मा भूदिति शेषः ।

२१० । द्वौटौसीदेतयोरेनोऽनूक्तौ ।

( द्वौ टा ओसि ७।, इद एतयोः ६॥, एनः १।, अनूक्तौ ७। ) ।

द्वौ टौसोश्च परत इदमेतदोरिदेतयोरेनः स्यात् उक्तस्य पश्चादुक्तौ ।

इमं विद्धि हरेर्भक्तं विद्धयैनं शिवार्चकम् ।

इमाविमान् वित्त शैवान् एनावेनांस्तु वैष्णवान् ॥

अनेन पूजितः कृष्णोऽथैनेन गिरिशोऽर्चितः ।

अनयोः श्रीशः स्वामी शिवः स्वामी अथैनयोः ॥

(१३४ त्यदां टेरः क्लौ । कः कौ के इत्यादि ।

(१७८ झभान्तस्येति बस्य भः । भत् भद बुधौ बुधः बुधा भुद्भ्यामित्यादि ।

२१० । द्वौटौ । द्वौच टाच ओश्च तत् तस्मिन् । इदश्च एतच तौ तयोः । अदन्तनिर्देशात् क्लीवे एनत् । अनु पश्चात् उक्तिरनूक्ति- स्तस्याम् । कश्चित् तु क्लीबेऽपि एनं श्रितः एनच्छ्रितः, एनेन कृतं एनत्कृतं, एनयोः पुत्रः एनत्पुत्र इत्याह । स्त्रिसंज्ञस्यैवायं विधिः, तेन अतोऽहं अत्येतदित्यादौ न स्यात् । कश्चिदत्येनदित्याह । इमं विद्धीत्यादि --इमं इमौ इमानित्युक्त क्रमेण एनं एनौ एनान् इति । एवं स्त्रीक्लीवयोः एनां एनया, एनत् एनेन इत्यादि । त्वमेव तदिमं राधे गृहं प्रापय इति तु इमप्रकृत्यन्तरस्येत्यन्ये (१) ।

---

(१) अत्र स्थले दुर्गादासेन एन इति प्रकृत्यन्तरमप्यस्ति इत्युक्त्वा विद्यामथैनं विजयां जयाञ्च इत्यादुदाहृतम् ।

२११। युजिरोऽसे नुण् घौ।

( युजिरः ६।, असे ७।, नुण् ।१।, घौ ७। )।

युजिरो युज्शब्दस्य नुण् स्यात् घौ परे, न तु से।

२१२। चुङ् क्रुङ् युङ् स्रग् दिग्भ्रष्टृत्विक् दधृक् दृक् स्पृक् सृगुष्णिहां कङ् भौ।

( चुङ्—उष्णिहां ६।।।, कङ् ।१।, भौ ७। )।

चवर्गान्तानामञ्चादीनाञ्च कङ् स्यात् भौ परे।

(५१) स्नोर्नुर्भस्यदान्ते। (५२) ञपि ञम् नोः। (१८४) स्यान्तस्यारान्लुप् फे। युङ् युञ्जौ युञ्जः, युञ्जं युञ्जौ युजः, युजा युग्भ्यामित्यादि।

असे किं—सुयुक् सुयुजौ सुयुजः इत्यादि। युजिरः किं—युक् समाधिमान्। अनुच-क्रुनुच-युजामेव प्राक् कङ् पृथग्ग्रहणात्, तेन—खन् खञ्जौ खञ्जः इत्यादि।

(१५५) शक्रार्जेति षङ्। (१५६) षोड़ः फे। राट् राड् राजौ राजः। एवं विभ्राट् देवेट् परिव्राट् विश्वसृट् परिसृट्।

---

२११। युजिरः। न सः असस्तस्मिन्। इरिन्निर्देशात् युजिर् ञ युतावित्यस्य ग्रहणं, न तु युज्योज समाधावित्यस्येति वक्ष्यति युक् समाधिमान्।

२१२। चुङ्। अञ्चित्यनेन पूजार्थस्याञ्चतेः, नुगि गत्यर्थस्यापि ग्रहणं। पृथग्ग्रहणादिति चवर्गान्तत्वेन सिद्धे अञ्चादीनां पृथग्ग्रहणं नियमार्थं, तेन खन् इत्यादौ आदौ स्यान्तलुप्, न

२१३ । विश्वराजोऽदा ।

(विश्वराजः ६।, अत् ।१।, आ ।१। ) ।

विश्वराजोऽकारस्य आ स्यात् भौ परे ।

विश्वाराट् विश्वाराड् विश्वराजौ विश्वराजः ।

कङ् (१) । स्रगिति सृजधोः क्विपि निपातितस्यैव ग्रहणात् स्रष्ट-त्यादौ न स्यात् । एवं दिशधोरपि, तेन दिष्टमित्यादि । असृगिति नञ्पूर्व्वे सृजधोः क्वि[illegible]न्तस्य ग्रहणात् रज्जुसृडिति स्यात् । विश्वसृग्विधिरिति तु उपसर्गत्वात् अपवादविषयेऽपि कङ् । ऋतौ यजति ऋत्विक्, अन्यत्र देवेट् । दधृगिति धृषधोः क्विपि निपातितस्य ग्रहणात् शक्रधृट् धृष्टमित्यादौ न स्यात् । दृगिति दृशधोः क्विबन्तस्य ग्रहणात् दृक् मदृक् कीदृक् इत्यादौ स्यात्, न तु दृष्टमित्यादौ । एवं स्पृशधोः क्विपि स्पृक् घृतस्पृक् । अन्यत्र स्पृष्टमित्यादि । एवं मृशधोः क्विपि मृक्, अन्यत्र मृष्टमित्यादि । देवान् यजतीति क्विप्, ग्रहस्वपाद्योरिति जिः । परिव्रजतीति क्विपि निपातनात् षः ।

२१३ । विप्र । भावित्यनुवर्त्तते ।

(१ कङ् इत्यत्र दुर्गादासेन ङ्कङ् इत्युक्ता रामानन्दकाशीश्वरौ तु ऋङिल्यकारशून्यं मत्वा कृष्णभग्नादिसाधनाय "ऋकवर्त्तोऽन्तस्य नत्वे जस्य ग" इति सूत्रं कल्पयतः । वस्तुतस्तु कृष्ण भग्न इत्यादौ निरवकाशत्वादन्तरङ्गत्वाच्च आदौ चुड् इत्यादिना जकारस्य गकारे पश्चान्नकारस्य नकार' इत्युत्तमम् । तर्कवागीशेन तु कृष्णः भग्न इत्यादौ स्फूर्ज्जादित्वात् जस्य ग इति वर्जोः कगाविति सूत्रे वक्ष्यते इति

२१४। स्यादेः सो लोपः कोऽषढ़न्यरचः।

( स्यादेः ६।, सः ६।, लोपः १।, कः ६।, अषढ़न्यरचः ६। )।

स्यादौ स्थितस्य सस्य लोपः स्यात् भौ परे, कस्य च—न तु षढ़ाभ्यामन्यस्य स्थाने जातस्य रचश्च।

भृट् भृड्। (६५) झपझमोरिति सस्य दः, (४७) सुश्चुभिश्चुनादिति भृज्जौ भृज्जः इत्यादि। ऊर्क् ऊर्ग् ऊर्ज्जौ ऊर्ज्जः इत्यादि, ऋत्विक् ऋत्विग् ऋत्विजौ ऋत्विजः इत्यादि। अवयाः, हे अवयाः हे अवयः, अवयाजौ अवयाजः, अवयोभ्यामित्यादि।

२१५। त्यदां तदोः सः सौ।

( त्यदां ६।।।, तदोः ६।।, सः १।, सौ ७। )।

२१४। स्यादेः। भावित्यनुवर्त्तते। स्यस्यादिः स्यादिस्तस्य। षश्च ढ़श्च तौ षढ़ौ, ताभ्यामन्यः षढ़न्यः, षढ़न्यश्च रचश्च तत्, न तत् अषढ़न्यरच तस्य। तथाच षढ़स्थानजातस्य रचभिन्नाजातस्य च कस्य लोप इत्यर्थः, तेन विविट् लिलिट्, अचधोः प्राचीत् इत्यादौ स्यात्। न तु पिपक् गोरक इत्यादौ। अन्ये तु गोरट् इत्याहुः। अमाङ्चीत् इत्यादौ तु सर्व्वविधिभ्यो लोपविधिर्बलवान् इति न्यायात् आदौ स्यादिलुपि नुगि जम्। कस्ताता शक्स्याता इत्यादौ तु सकयोर्दान्तत्वाव लुप् स्यात् (१)। ऊर्क् इति रेफाव स्यान्तलुप्। एवं भर्भ माचक्षाणः भर्क् इत्यादि।

(१) एतद्बीजं ८५ सूत्रस्य टीकायां द्रष्टव्यम्।

त्यदादीनां तदयोः सः स्यात् सौ परे । स्यः त्यौ त्ये इत्यादि सर्व्ववत् । एवं तद् । एषः एतौ एते इत्यादि ।

(२१०) द्वीटौसौदेतयोरेनोऽनूक्ताविति प्रयोगमनु इदंवत् ।

## २१६ । युष्मदस्मदो स्त्वाहौ युवावौ यूयवयौ त्वन्मदौ तुभ्यमह्यौ तवममौ सि द्व-जस्-ङ-ङे-ङस्सु ।

( युष्मद्-अस्मदोः ६॥, त्व-अहौ १॥, युव आवौ १॥, यूय वयौ १॥, त्वद्-मदौ १॥, तुभ्य मह्यौ १॥, तव ममौ १॥, सि द्व जस् ङ ङे-ङस्सु ७। ) ।

अनयोः क्रमादेते आदेशाः एषु परेषु क्रमात् स्युः ।

२१५ । त्यदां । त्वनिर्द्देशो गणार्थः । स्त्रिसंज्ञस्यैव विधानात् अतितदित्यादौ न स्यात् । मण्डूकगत्या वा अनुवर्त्त्य तस्य व्यवस्थावाचित्वात् सेरौत्वाभावे साकोऽदसः सौ वा, तेन असकः असुक इति । इदंवदिति—इमं विद्धीत्यादिक्रमेण ज्ञेयमित्यर्थः ।

२१६ । युष्मद । कद्वयोरर्थस्यापि ग्रहणात् इति वक्ष्यति । तत्र त्वन्मदौ युवावौ च क्वावेव, क्तेर्न्नक्यापि त्वन्मदादेशः त्वन्मदामिति निर्द्देशज्ञापकात् (१) । तेन तव ममापं उपत्वत् त्वय्यधि अधित्वत्, अत्वं त्वं भवति त्वद्भवति त्वत्काम्यति त्वद्यति त्वद्यते त्वदतीत्यादि स्यात् । न तु युवाभ्यां कृतं युष्मत्कृतं युवयोरधि अधियुष्मत्

(१) तद्धितप्रकरणे युष्मदस्मदुत्वन्मदामिति सूत्रे युवावेत्यनुक्त्वा त्वन्मादः निर्द्देशेन विभक्तेर्ल्लुकि युष्मदस्मदोर्द्वित्वे युवावादेशो न स्यादिति ज्ञापकादित्यर्थः ।

२१७। ङेप्थोर्मः । (ङेप्थोः ६॥, मः १।)।

युष्मदस्मद्भ्यां परस्य ङे इत्यस्य थेश्च मः स्यात् । त्वम् अहम् ।

२१८। मभमौष्वाङ् ।[1]

(म-भ-अम् औषु ७॥, आङ् ।१।)।

युष्मदस्मदोराङ् स्यात् मे भे अमि औकारे च परे ।

युवाम् आवाम् यूयं वयं, त्वां मां युवाम् आवाम् ।

२१९। शस्-भ्यस् ङसि-भ्यम्-ङस्-मामां न-ङभ्यम्-त-त-डाकमः ।

(शस् मामां ६॥, न—आकमः १॥)।

युष्मदस्मद्भ्यां परेषामेषां स्थाने न ङभ्यम् त त ड आकम् एते क्रमात् स्युः, ड इत् । युष्मान् अस्मान् ।

युष्मत्काम्यतीत्यादौ । एवं अस्मदोऽपि । द्व्यर्थत्वाद्वयोरप्युदाहरणानि ज्ञेयाणि ।

२१७। ङे । मेऽकार उच्चारणार्थः ।

२१८। मभ । मश्च भश्च अम् च औश्च ते तेषु । व्युत्क्रमनिर्देशात् त्वं अहं युष्मत् अस्मत् इत्यादौ मभयोर्म-तौ, नाङ् ।

२१९। शस् । शश्च भ्यश्चेति चः । एवं नश्च ङभ्यश्चेति । न नयोरकार उच्चारणार्थः । मामग्रहणात् न गौणे आकम्, तेन अतित्वयामित्यादौ न स्यात् । शसग्रहणं स्त्रीक्लीबयोर्विधानार्थं १ तेन स्त्रीः कुलानि वा युष्मान् पश्यति इत्यादौ स्यात् ।

[1] "इति-ब्य-ओत्यादिना लिङ्गविहितकार्यनिषेधात् पुंसि तु शस् न इत्यस्य प्राप्तौ त्रिषु लिङ्गेषु शसो नविधान मिति दुर्गादासः ।

२२०। एङ् टाङ्यामि।

( एङ् ।१।, टा ङि-आमि ७। )।

युष्मदस्मदोरेङ् स्यात् टाङ्योः परयोरामि च, ङ इत्।

त्वया मया युवाभ्याम् आवाभ्यां युष्माभिः अस्माभिः, तुभ्यं मह्यं युवाभ्याम् आवाभ्यां युष्मभ्यम् अस्मभ्यं, त्वत् मत् युवाभ्याम् आवाभ्यां युष्मत् अस्मत्, तव मम युवयोः आवयोः युष्माकम् अस्माकम्।

अतित्वयाम् अतिमयाम् अतियुवयाम् अत्यावयाम् अति-युष्मयाम् अत्यस्मयाम्।

(२१६) क्व द्वयोरर्थस्यापि ग्रहणात्। एवं मत्वेत।

त्वयि मयि युवयोः आवयोः युष्मासु अस्मासु।

---

२२०। एङ्। मुख्ये सुमि आकम्विधानात् गौणेऽस्य विषयः। क्वद्वयोरर्थस्यापि ग्रहणादिति—अपिशब्दोऽत्रावधारणार्थ-स्तथाच—क्वार्थयोर्युष्मदस्मदोस्त्वन्मदौ, द्वार्थयोर्युष्मदस्मदोर्युवावौ क्वावेव स्यातां, न तु मि जस् ङे-ङस्सु, विशेषविधानात्(१), तेन त्वामतिक्रान्तः अतित्वं, त्वामतिक्रान्तौ अतित्वां, त्वामति-

(१) अत्र दुर्गादास – 'ननु बहुवचने परे त्वदाद्यादेशः कथमित्याशङ्कयाह क्वद्वयोरर्थस्यापि ग्रहणादिति। तत्रायमर्थः—युष्मदस्मदोर्मुख्यत्वे गौणत्वे च मि जस् ङे-ङसां स्वरूपग्रहणात् तेषु परेषु त्वाह-यूय-वय-तुभ्य-मह्य-तव-ममाः स्युरेव। मि-जसादेरन्यत्र युष्मदस्मदोर्मुख्यत्वे एकवचने परे त्वन्मदौ द्विवचने परे युवावौ बहुवचने परे स्वरूपेणावस्थानम्। गौणत्वे तु परविभक्तिमनादृत्य युष्मदस्मदोरेकत्वे त्वन्मदौ द्वित्वे युवावौ बहुत्वे स्वरूपेणावस्थानमिति।

क्रान्ता अतियूयम्, तम् अतित्वाम्, तौ अतित्वाम्, तान् अतित्वान्, तेन अतित्वया, ताभ्याम् अतित्वाभ्याम्, तैरतित्वाभिः, तस्मै अतितुभ्यम्, ताभ्याम् अतित्वाभ्याम्, तेभ्यः अतित्वभ्यम्, तस्मात् अतित्वत्, ताभ्याम् अतित्वाभ्याम्, तेभ्यः अतित्वत्, तस्य अतितव, तयोरतित्वयोः, तेषामतित्वयाम्, अतित्वाकमिति परे, तस्मिन् अतित्वयि, तयोरतित्वयोः, तेषु अतित्वासु।

मामतिक्रान्तः अत्यहम्, मामतिक्रान्तौ अतिमाम्, मामतिक्रान्ताः अतिवयम्, तम् अतिमाम्, तौ अतिमाम्, तान् अतिमान्, तेन अतिमया, ताभ्याम् अतिमाभ्याम्, तैरतिमाभिः, तस्मै अतिमह्यम्, ताभ्याम् अतिमाभ्याम्, तेभ्यः अतिमभ्यम्, तस्मात् अतिमत्, ताभ्याम् अतिमाभ्याम्, तेभ्यः अतिमत्, तस्य अतिमम, तयोः अतिमयोः, तेषाम् अतिमयाम्, अतिमाकमितिपरे, तस्मिन् अतिमयि, तयोरतिमयोः, तेषु अतिमासु।

युवामतिक्रान्तः अतित्वम्, तौ अतियुवाम्, ते अतियूयम्, तम् अतियुवाम्, तौ अतियुवाम्, तान् अतियुवान्, तेन अतियुवया, ताभ्याम् अतियुवाभ्याम्, तैः अतियुवाभिः, तस्मै अतितुभ्यम्, ताभ्याम् अतियुवाभ्याम्, तेभ्यः अतियुवभ्यम्, तस्मात् अतियुवत्, ताभ्याम् अतियुवाभ्याम्, तेभ्यः अतियुवत्, तस्य अतितव, तयोः अतियुवयोः, तेषाम् अतियुवयाम्, अतियुवाकमिति परे, तस्मिन् अतियुवयि, तयोरतियुवयोः, तेषु अतियुवासु।

आवाम् अतिक्रान्तः अत्यहम्, तौ अत्यावाम्, ते अति-

वयम्, तम् अत्यावाम्, तौ अत्यावाम्, तान् अत्यावान्, तेन अत्यावया, ताभ्याम् अत्यावाभ्याम्, तैः अत्यावाभिः, तस्मै अतिमह्यम्, ताभ्याम् अत्यावाभ्याम्, तेभ्यः अत्यावभ्यम्, तस्मात् अत्यावत्, ताभ्याम् अत्यावाभ्याम्, तेभ्यः अत्यावत्, तस्य अतिमम, तयोरत्यावयोः, तेषाम् अत्यावयाम्, अत्यावाकमिति परे, तस्मिन् अत्यावयि, तयोरत्यावयोः, तेषु अत्यावासु।

युष्मान् अतिक्रान्तः अतित्वम्, युष्मान् अतिक्रान्तौ, अतियुष्माम्, युष्मान् अतिक्रान्ताः अतियूयम्, तम् अतियुष्माम्, तौ अतियुष्माम्, तान् अतियुष्मान्, तेन अतियुष्मया, ताभ्याम् अतियुष्माभ्याम्, तैः अतियुष्माभिः, तस्मै अतितुभ्यम्, ताभ्याम् अतियुष्माभ्याम्, तेभ्यः अतियुष्मभ्यम्, तस्मात् अतियुष्मत्, ताभ्याम् अतियुष्माभ्याम्, तेभ्यः अतियुष्मत्, तस्य अतितव, तयोः अतियुष्मयोः, तेषाम् अतियुष्मयाम्, अतियुष्माकमिति परे, तस्मिन् अतियुष्मयि, तयोः अतियुष्मयोः, तेषु अतियुष्मासु।

अस्मान् अतिक्रान्तः अत्यहम्, तौ अत्यस्माम्, ते अतिवयम्, तम् अत्यस्माम्, तौ अत्यस्माम्, तान् अत्यस्मान्, तेन अत्यस्मया, ताभ्याम् अत्यस्माभ्याम्, तैः अत्यस्माभिः, तस्मै अतिमह्यम्, ताभ्याम् अत्यस्माभ्याम्, तेभ्यः अत्यस्मभ्यम्, तस्मात् अत्यस्मत्, ताभ्याम् अत्यस्माभ्याम्, तेभ्यः अत्यस्मत्, तस्य अतिमम, तयोः अत्यस्मयोः, तेषाम् अत्यस्मयाम्, अत्यस्माकमिति परे, तस्मिन् अत्यस्मयि, तयोः अत्यस्मयोः, तेषु अत्यस्मासु। एवं स्वोनपुंसकयोरपि।

त्वामाचष्टे त्वदयति, अतित्वदत्, त्वदयिष्यति। मामाचष्टे मदयति, अमीमदत्, मदयिष्यति। युवामाचष्टे युष्मानाचष्टे वा युष्मयति, अयुयुष्मत्, युष्मयिष्यति। आवामाचष्टे अस्मानाचष्टे वा अस्मयति अमिस्मत्, अस्मयिष्यति।

क्वार्थयोर्ञिक्विबन्तयोः क्वौ त्वमदौ। क्वार्थयोर्ञिक्विब्विहित-योर्युष्मदस्मदोस्त्वमदौ स्यातां क्वौ परे। त्वामाचक्षाणः त्वम्, तौ त्वाम्, ते त्वम्, तं त्वाम्, तौ त्वाम्, तान् त्वान्, तेन त्वया, त्वेनेति केचित्, ताभ्यां त्वाभ्याम्, तैः त्वाभिः, तस्मै त्वम्, ताभ्यां त्वाभ्याम्, तेभ्यः त्वभ्यम्, तस्मात् त्वत्, ताभ्यां त्वाभ्याम्, तेभ्यः त्वत्, तस्य त्व, तयोः त्वयोः, तेषां त्वयाम्, त्वाकमिति परे, तस्मिन् त्वयि, तयोः त्वयोः, तेषु त्वासु।

एवं मामाचक्षाणः मम्, अहमिति केचित्, माम् मम्। माम् माम् मान्। मया, मेन इति केचित्, माभ्याम् माभिः। मम् माभ्याम् मभ्यम्। मत् माभ्याम् मत्। म मयोः मयाम्, माक-मिति परे। मयि मयोः मासु (१)।

द्वार्थयोरतिक्रान्तवत्। द्वार्थयोस्तयोरतिक्रान्तवत् सि-जस्-ङे-ङस्-वर्ज्जं युवावौ स्यातां क्वौ। युवामाचक्षाणः त्वम् युवाम् यूयम्। युवाम् युवाम् युवान्। युवया, युवेनेति केचित्, युवाभ्याम् युवाभिः।

---

(१) तथाच—त्वं ददाति धनं किञ्चिदहं देहि धनं कियत्।
त्वं गच्छन्ति हरेः स्थानं मं गच्छन्ति शिवालयम्॥
त्वामाचक्षाणाय इत्यर्थः। एवमन्यदित्युक्तं मधुसूदनेन।

तुभ्यम् युवाभ्याम् युवभ्यम्। युवत् युवाभ्याम् युवत्। तव युवयोः युवयाम्, युवाकमिति परे। युवयि युवयोः युवासु।

एवम् आवामाचक्षाणः अहम् आवाम् वयम्। आवाम् आवाम् आवान्। आवया, आवेनेति केचित्, आवाभ्याम् आवाभिः। मह्यम् आवाभ्याम् आवभ्यम्। आवत् आवाभ्याम् आवत्। मम आवयोः आवयाम् आवाकमिति परे। आवयि आवयोः आवासु।

त्वार्थयोस्त्वाद्याः सम् भिस सुप्सु तु ङा। त्वार्थयोस्तयोस्त्वाद्यादेशाः स्युः तौ, ङा तु सम् भिस् सुप्सु परेषु, ङवत्। युष्मान् आचक्षाणः त्वम्, तौ युवाम्, ते यूयम्, तं त्वाम्, तौ युवाम्, तान् युष्मान्।

टाङ्योर्येङ् भ्यमामोस्त्वन्ङ्। त्वार्थयोस्तयोर्येङ् स्यात् टाङ्योः परयोः, अत्वङौ तु भ्यमि आमि च, नङावितौ। तेन त्वया, ताभ्यां युवाभ्याम्, तैर्युष्माभिः। तस्मै तुभ्यम्, ताभ्यां युवाभ्याम्, तेभ्यः युष्मभ्यम्, युवभ्यम्, युङ्भ्यमिति केचित्। तस्मात् त्वत्, ताभ्यां युवाभ्याम्, तेभ्यः युष्मत् युपत्। तस्य तव, तयोः युवयोः, तेषां युष्मयाम् युपयाम्, युष्माकम् युपाकमिति परे। तस्मिन् त्वयि, तयोः युवयोः, तेषु युष्मासु।

एवमस्मानाचक्षाणः अहम् आवाम् वयम्। मम् आवाम् अमान्। मया आवाभ्याम् अमाभिः। मह्यम् आवाभ्याम् अस्मभ्यम् अमभ्यम्, अम्भ्यमिति केचित्। मत् आवाभ्याम् अस्मत् अमत्। मम आवयोः अस्मयाम् अमयाम्, अस्माकम् अमाकमिति परे। मयि आवयोः अमासु।

ये तु मपर्य्यन्तस्येति (१) पाणिनीयसूत्रे मान्तस्येति कृते सिद्धे परिपदोपादानं अधिकभागव्यवच्छेदार्थं, तेनाधिकभागव्यवच्छेदाभावे नैते त्वाहाद्यादेशा भवन्ति इत्याहुः, तेषां मते तु—

युष्मऽस्मोरत्वङ् ङा-यङौ तु शसमौ-भ-सुपि टाङ्योसि। त्रि-क्विवन्तयोर्युष्मदस्मदोर्युष्मऽस्मोरन् अङ् च स्यात्, ङातु शसि अमि औकारे भकारे सुपि च परे, यङ् तु टाङ्योरोसि च, नङावितौ।

युवामाचक्षाणो युष्मानाचक्षाणो वा-युष्मं युषं, तौ युषां, ते युष्मां युषं, तं युषां, तौ युषां, तान् युष्मान्, तेन युष्या, युष्मेति केचित्, ताभ्यां युष्माभ्यां, तैः युष्माभिः, तस्मै युष्मं युषं, ताभ्यां युषाभ्यां, तेभ्यः युष्मभ्यं युषभ्यं, तस्मात् युष्मत् युषत्, ताभ्यां युष्माभ्यां, तेभ्यः युष्मत् युषत्, तस्य युष्म युष, तयोः युष्योः, तेषां युष्मयां युषयां, युष्माकं युषाकमिति परे, तस्मिन् युष्यि, तयोः युष्योः, तेषु युषासु। एवम् आवामाचक्षाणः अस्मानाचक्षाणो वा—अस्मम् असम्, तौ असाम्, ते अस्मम् असम्, तम् असाम्, तौ असाम्, तान् असान्, तेन अस्या, अस्मेति केचित्, ताभ्याम् असाभ्याम्, तैः असाभिः,

(१) ७।२।९१—इति पाणिनीयसूत्रम्। अस्यार्थः अत्र मपर्य्यन्तस्य इत्यधिकारोऽस्ति, तेन सर्व्वे युष्मदस्मदोरादेशा मपर्य्यन्तस्यांशस्यैव भवन्ति; एतेन यदा मपर्य्यन्तादंशात् परतो युष्मदस्मदोरन्योऽपि भागः स्यात् तदैव तयोस्त्वाहाद्या-देशाः स्युः। यदा तु युष्मदस्मदौ त्रिक्विबन्तौ भवतस्तदा मकारात् परम् अंशान्तर-स्याभावात् तयोर्वक्ष्यमाणा अन् अङ् ङा यङ् एते आदेशा भवन्ति, न तु त्वाहाद्या इति फलितार्थः। अतएवात्र कैयटः "केचित्तु मान्तयोर्युष्मदस्मदोरा-देशानिच्छन्ति, मपर्य्यन्तग्रहणं हि यत्र परिशिष्टसद्भावस्तत्रादेशार्थमिति। परि-शिष्टाभावे न भाव्यमादेशैरिति ब्रुवन्तीति।"

२२१ । ह्वीचीषीणां क्वैर्द्वैर्व्वैस्ते-मे वां-नौ वस्-नसौ वाऽपादवाक्यादावचवाहाहैवाद्दगद्दश्चर्थैं स्त्वा-मा त्वमा ।

(ह्वी-ची-षीणां ६।।।, क्वैः ३।।।, द्वैः ३।।।, व्वैः ३।।।, ते मे ।१।।, वां-नौ ।१।।, वस्-नसौ १।।, वा ।१।, अपादवाक्यादौ ७।, अ च वा ह-अह-एव अद्दगद्दश्चर्थैः ३।।।, त्वा मा ।१।।, तु ।१।, अमा ३।)

तस्मै अस्मम् असम्, ताभ्याम् असाभ्याम्, तेभ्यः अस्मभ्यम् असभ्यं, तस्मात् अस्मत् असत्, ताभ्याम् असाभ्याम्, तेभ्यः अस्मत् असत्, तस्य अस्म अस, तयोः अस्योः, तेषाम् अस्मयाम असयाम्, अस्माकम् असाकमिति परे, तस्मिन् अस्यि, तयोः अस्योः, तेषु असासु ।

प्रकृतिप्रत्यययोरादेशान्नेच्छत्यन्यः (१) । तन्मते युट् युष्मौ युष्मः, अः अस्मौ अस्मः इत्यादि, तथाच युष्मौ इन्द्राबृहस्पती अस्मो-वै वाजिवन्मव इत्यादि ।

२२१ । ह्वौ । ह्वौ च चौ च षौ च तासां, ते च मे च तौ, वां च नौश्च तौ, वश्च नश्च तौ । पादश्च वाक्यञ्च ते, तयोरादिः पाद-वाक्यादिः, न पादवाक्यादिः अपादवाक्यादिस्तस्मिन् । पादः श्लोक-चतुर्थोभागः । वाक्यं साकाङ्क्षपदसमुदायः, न तु निराकाङ्क्षपद-समुदायः, तेन ओदनं पच तव पुत्रस्तिष्ठति इत्यत्र न स्यात् ।

(१) प्रकृतिर्व्यक्तिवन्तो युष्मत् अस्मत्, प्रत्ययः सिऔजसादिः, एतयोः स्थाने विहिता आदेशा न स्युरिति कस्यचिन्मतम् ।

युष्मदस्मदो र्द्वितीयाचतुर्थीषष्ठीनां क्रमात् सहितयो स्ते-मे, द्वे वां-नौ, बहुत्वे वस्-नसौ, क्रमाद्वा स्याताम्, अमा युक्तयोस्तु त्वा-मा, नतु पादस्य वाक्यस्य चादौ स्थितयोः, न चवाद्यैरदर्शनार्थदृश्यर्थधुभिश्च योगे।

दामोदरस्त्वावतु मापि मित्र !,
ददातु ते मेऽपि मुदं मुकुन्दः।
निहन्तु ते विष्णुरघानि मेऽपि,
रक्षत्वसौ वामपि नौ मुरारिः॥
ददातु वां नावपि शर्म्म कृष्णः,
करोतु वां श्रीदयितो दयां नौ।
पुष्णातु वो नोऽपि हरि र्धनं वो
ददातु नो, हन्त्वशुभानि वो नः॥

दृशिरर्थो येषां ते, न दृक् अदृक्, अदृशि दृश्यर्था अदृग्दृश्यर्थाः; पश्चात् चश्च वाश्च हश्च अहश्च एवश्च अदृग्दृश्यर्थाश्च ते, न ते अचवाहाहैवाऽदृग्दृश्यर्थाः तैः। तथाच—चाद्यैर्योगे, ये धातवो दर्शनार्था अचाक्षुषज्ञानार्थतया प्रयुक्तास्तैश्च योगे एते आदेशा न स्युरित्यर्थः। न च दृश्यर्थानां चाक्षुषज्ञानमेवार्थ इति वाच्यं, यतः—पशुः पश्यति गन्धेन बुद्ध्या पश्यन्ति पण्डिताः। राजा पश्यति कर्णाभ्यां भूते पश्यन्ति वर्व्वराः इत्याद्युक्तेः। त्वाश्च माश्च तौ।

दामोदर इत्यादि। हे मित्र दामोदरस्त्वा त्वाम् अवतु, मा मामपि। मित्रेति सर्व्वत्रान्वयः। हे मित्र मुकुन्दस्ते तुभ्यं मुदं हर्षं

अपादवाक्यादौ किं—

युष्मानवत्वविरतं कृष्णोऽस्मान् पातु शङ्करः।

अ-चादियोगे किं -

तुभ्यं मह्यञ्च दद्यात् स्वं गोविन्दो मह्यमेव शम्।

श्रीकण्ठो मामपेक्ष्य त्वामालोकयति पूजकम्॥

ददातु, मे मह्यमपि। हे मित्र विष्णुस्ते तव अघानि पापानि निहन्तु, मे ममापि। हे मित्रे मुरारिर्वां युवां रक्षतु, नौ आवामपि। हे मित्रे कृष्णः शर्म्म कल्याणं वां युवाभ्यां ददातु, नौ आवाभ्यामपि। श्रीर्दयिता यस्य सः, हे मित्रे श्रीदयितः श्रीकृष्णो वां युवयोः सम्बन्धे दयां करोतु, नौ आवयोः सम्बन्धेऽपि। हे मित्राणि हरिर्वो युष्मान् पुष्णातु, नोऽस्मानपि। हे मित्राणि हरिर्वो युष्मभ्यं धनं ददातु, नोऽस्मभ्यमपि। हे मित्राणि हरिर्वो युष्माकं सम्बन्धे अशुभानि हन्तु, नोऽस्माकं सम्बन्धेऽपि।

युष्मान् अवतु गोविन्द इति तु पादादौ। अस्मान् पातु शङ्कर इति वाक्यादौ। तथाच—संसारसागरे मग्नान् युष्मानवतु केशवः। स हि साधुजनानन्दवर्द्धनः करुणानिधिरिति। एवं त्वामामनन्ति प्रकृतिमित्यादि कुमारसम्भवे च। तुभ्यं मह्यमित्यादौ च शब्दयोगान्नादेशः। एवं तद्दर्शिनमुदासीनं त्वामेव पुरुषं विदुरित्यादौ एव-शब्दयोगान्नादेशः। एवं ग्रामो युवयोर्वा स्वं, ग्रामो युवयोः स्वं, ग्रामो युवयोरह स्वम्। तथा अस्मदोऽपि। यदा तु युष्मदस्मदोर्न योगस्तदा स्यादेव, तेन हरो हरिश्च त्वा पातु इत्यादौ स्यात्। श्रीकण्ठ इत्यादि—

२२२। सदानूक्तेऽसादिप्राः।

( सदा ।१।, अनूक्ते ७।, असादिप्राः ५। )।

अनयोरेते अन्वादेशे नित्यं स्युः, नतु सपूर्व्वात् प्रथमान्तात् परयोः।

यूयं वयं विनीता स्तत् पातु वो नो महेश्वरः।
यूयं वयं हिताम्तेन सोऽस्मान् पातु स वः शिवः॥

श्रीकण्ठः शिवः मामपेक्ष्य अपेक्षां कृत्वा त्वां पूजकं आलोकयति विचारयतीत्यर्थः। अत्र ईक्ष-लोक्रङोरपेक्षा-विचारयोर्वर्त्तमानत्वात् नैते आदेशाः। एवं यदाऽष्टगदृश्यर्थेन युष्मदस्मदोर्योगस्त-त्सम्बन्धिना तु योगस्तत्रापि निषेधः, तेन ग्रामस्तव स्वं समीक्ष्य गतः इत्यादावपि न स्यात्।

२२२। सदा। उक्तस्य पश्चादुक्तं अनूक्तं तस्मिन्। आदिना पूर्व्ववर्त्तिपदेन सह वर्त्तमानः सादिः, सादिश्चासौ प्रेचेति सादिप्रा, न सादिप्रा असादिप्रा तस्याः।

यूयमित्यादि। यूयं विनीता, वयमपि विनीताः, तत् तस्मात् कारणात् वो युष्मान् नोऽस्मानपि महेश्वरः पातु। असादि-प्रेत्युदाहरति यूयमित्यादि। यूयं हिता, वयमपि हिताः, तेन कारणेन स शिवो नोऽस्मान् पातु, स शिवो वो युष्मान् पातु, सपूर्व्वात् प्रथमान्तात् पूर्व्वेनैव विकल्पः।

कद्दान्तैकार्थात् सामान्यपूर्व्वादामन्त्र्यात्। सामान्यपूर्व्वात् कद्दान्तैकार्थादामन्त्र्यादेते आदेशाः नित्यं स्युः (१)। हे छात्र

(१) "पृथग्योगादन्वादेश-निवृत्तिः। विशेष्यपूर्व्वत्वेन विकल्पे प्राप्ते नित्यविधा-

## २२३। नाविशेष्यान्याद्यामन्त्र्यात्।

( न ।१।, अविशेष्यान्याद्यामन्त्र्यात् ५। )।

विशेष्यपूर्व्वमनामन्त्र्यपूर्व्वञ्च हित्वा अन्यस्मादामन्त्र्यादेते आदेशा न स्युः।

शम्भोऽस्मान् रक्ष लक्ष्मीश सेव्य नोऽवाव सर्व्वं नः।

सुपात् सुपादौ सुपादः, सुपादं सुपादौ।

वैयाकरण ते स्वं, छात्रौ वैयाकरणौ वां स्वम्। छद्रान्तेति किं—छात्राः कुमारा युष्माकं स्वं, छात्राः कुमारा वः स्वम्। एकार्थेति किं—देवदत्त यज्ञदत्त युवयोः स्वम्। सामान्यपूर्व्वादिति किं—देवदत्त जटिलं तव स्वम्।

२२३। नावि। विशिष्यते यत् तद्विशेष्यं, विशेष्यञ्च अन्यच्च ते, ते आदी यस्य तद्विशेष्यान्यादि, न विशेष्यान्यादि अविशेष्यान्यादि, अविशेष्यान्यादि च तत् आमन्त्र्यञ्चेति तत् तस्मात्। आमन्त्र्यं सम्बोधनम्। तथाच—केवलामन्त्र्यपूर्व्वयोर्विशेषणामन्त्र्यपूर्व्वविशेष्यामन्त्र्यपूर्व्वयोश्च एते आदेशा न स्युः। विशेष्यामन्त्र्यपूर्व्वविशेषणामन्त्र्यपूर्व्वयो रामन्त्र्याभिन्नपदपूर्व्वामन्त्र्यपूर्व्वयोश्च पूर्व्ववदेव विकल्प इत्यर्थः(१)। शम्भोऽस्मान् इति केवलामन्त्र्यपूर्व्वत्वान्निषेधः। लक्ष्मीश सेव्य न इति विशेष्यामन्त्र्यपूर्व्वविशेषणामन्त्र्यपूर्व्वत्वात्

नम। अनेकेष्वेकमन्वयि सत्ताधीहेतुः सामान्यम्। अतश्छात्रादिशब्दः सामान्यवृत्तिः देवदत्तादिशब्दस्तु विशेषवृत्तिरिति बृहन्मुग्धबोधे न्यायपञ्चाननपादैरुक्तम्।

(१) ततश्च पूर्व्वपदरहितात् विशेषणपूर्व्वाच्च आमन्त्र्यात् परयो र्न स्यादिति निष्कर्ष इति दुर्गादासः।

२२४। पात् पत् पौ।

( पात् ।१।, पत् ।१।, पौ ७। )।

पादः पत् स्यात् पौ परे। सुपदः सुपदा सुपाद्भ्यामित्यादि।

( २१२ ) चुङिति कुङ्। ( ५१ ) नस्य नुः। (५२) नोङः। (१८४) स्यान्तस्य लुप्। प्राङ् प्राञ्चौ प्राञ्चः, प्राञ्चं प्राञ्चौ। एवं क्रुञ्च-तिर्य्यञ्चोदञ्चादयः।

---

न निषेधः, किन्तु पूर्व्वेणैव विकल्पः। एवं छात्रा गुणिनो नः स्वं, छात्रा गुणिनोऽस्माकं स्वमित्यादि। अत्र सर्व्वं न इति आमन्त्र्य-भिन्नपदावक्रियापूर्व्वामन्त्र्यपूर्व्वत्वात् न निषेधः, किन्तु पूर्व्वेणैव विकल्पः। दीनं शङ्कर मा रक्ष शं शम्भो मे प्रयच्छ च इति, उचितानुचितं रचयामि देवि ते इत्यादि। देवि तेऽहं सदा दास-इति तु नञा निर्द्दिष्टस्यानित्यत्वात्।

केवलात् समानाधिकरणादधुजात्। धुजभिन्नात् केवलात् समानाधिकरणात् परयोः युष्मदस्मदोस्ते आदेशाः न स्युः। गोमतां युष्माकं स्वं, दण्डिनोर्युवयोः स्वं, पंशुलस्य तव स्वमित्यादि। केवलात् किं—श्रीशः श्रेष्ठं त्वा करोतु। समानाधिकरणात् किं—सदा मा गिरिशोऽवतु। अधुजात् किं—भक्तस्य ते महादेवः सदा तिष्ठतु मानसे।

२२४। पात्। संख्यासुप्रमानादित्यादिनादिष्टस्य पादित्यस्य ग्रहणम्। पादशब्दसमानार्थस्य पाच्छब्दस्यापीति केचित्। पदिति दान्तादेशः। योगविभागात् क्वचिदन्यत्रापि, तेन द्विपदा त्रिपदा ऋक् इत्यादि।

२२५ । अचोऽल्लोपि घँश्च ।

( अचः ६।, अत् ।६।, लोपः १।, घँः १। च ।१। ) ।

अचोऽकारस्य लोपः स्यात् पौ परे, पूर्व्वस्य च घँः । प्रतीचः प्रतीचा प्रत्यग्भ्यामित्यादि ।

२२६ । तिर्य्यगमुमुयगदमुयगुदचां तिरश्चामुमुईचादमुईचोदीचः ।

( तिर्य्यक्—उदचां ६।।।, तिरश्च—उदीचः १।।। ) ।

एषामेते क्रमात् स्युः पौ परे । तिरश्चः तिरश्चा तिर्य्यग्भ्यामित्यादि । अमुमुईचः अमुमुईचा अमुमुयग्भ्यामित्यादि । एवमदमुयङ् । उदीचः उदीचा उदग्भ्यामित्यादि । शेषं पूर्व्ववत् ।

२२५ । अचो । अदिति लुप्तपोक्तं दम् । अच इत्यनकारनिर्द्देशात् गुर्व्वञ्चः गुर्व्वञ्चा, गवाञ्चः गवाञ्चा इत्यादौ न स्यात् । अवाभावपक्षे गोञ्चः गोञ्चा । गोरति वा, गो-अञ्चः गो अञ्चा इति । लुप्तनकारस्य तु गोचः गोचा नोचः नोचा, नदीचः नदीचा इत्यादौ अल्लोपः स्यादेव (१) । प्रतीचः इति अचोऽकारलोपे तत्पूर्व्वाव्यवहितस्यैव घँः । तेन मरुतं अञ्चति तान् मरुच्चः इत्यादौ व्यवहिते न स्यात्, दधीचः वृचः मधीचः इत्यादौ स्यादेव ।

२२६ । तिर्य्यक् । तिर्य्यङ् च अमुमुयङ् च अदमुयङ् च उदङ् च ते तेषाम् । तिरश्च च अमुमुईच्च अदमुईच्च उदीच्च ते ।

---

(१) अत्र एवकारेण दीर्घस्याप्यम इति सूचितम् । तदुक्तं गङ्गाधरेण—"घँ इति सम्प्रसारणे विधिः, तेन स्वभावदीर्घादप्यल्लोपः स्यादि"ति ।

(१५५) शछाजेति चस्य षत्वे, तन्निमित्तस्य शस्य सत्वे,

(२१४) स्वादेः सोलोपः। सुवृट् सुवृड् सुवृश्चौ सुवृश्चः इत्यादि।

(१६५) नसब्महत्व इति घः। (१८४) स्थान्तस्य लोपः। महान् महान्तौ महान्तः, महान्तं महान्तौ महतः, महता महद्भ्यामित्यादि।

भवन् भवन्तौ भवन्तः, भवन्तं भवन्तौ भवतः, भवता भवद्भ्यामित्यादि। शेषं महद्वत्।

(१८६) अत्वसोऽधोरिति—श्रीमान्, शेषं भवद्वत्, एवं यशस्वदादयः।

## २२७। भगवदघवद्भवतां भगोऽघो-भो वा धौ।

(भगवत्-अघवत् भवतां ६।।।, भगो-अघो-भो ।१।।।, वा ।१।, धौ ७।)।

असन्धिनिर्देशात् प्रयोगेऽपि न सन्धिः। वा-सन्धिविधानात् अमुम्वीचः अदम्वीचः इत्याद्यपीति कश्चित्। एषां किम्—अमुद्रीचः अदद्रीचः सध्रीचः इत्यादि।

२२७। भग। भगवांश्च अघवांश्च भवांश्च ते तेषाम्। भगोश्च अघोश्च भोश्च ते, लुप्तप्रोव्वं दम्। एते सान्ता आदिश्यन्ते इत्यन्ये।(१) अत्र भगवदघवद्भवतां धौ वाऽतो डोरिति कृते सिद्धे

(१) अत्र केषु पुस्तकेषु "भाष्ये त्वन्ना्विरर्थकस्यैव ग्रहणा"दिति "भाष्ये निरर्थकस्यैव ग्रहणा"दित्येवमधिकः पाठभेदोऽस्ति। अस्यार्थः सुधीभिश्चिन्त्य इति।

एषामिति क्रमात् स्युर्वा धौ परे। हे भगोः हे भगवन्, हे अघोः हे अघवन्, हे भोः हे भवन्। शेषं श्रीमद्वत्।

(१८३) अहेरित्युक्ते न नुम्—ददत् ददतौ ददतः इत्यादि। एवं जक्षत्-जाग्रदादयः।

(१५५) शक्राजेति षङ्—विट् विड् विशौ विशः, विशं विशौ विशः, विशा विड्भ्यामित्यादि।

(१७८) मुहां वङ् इति—नक् नग् नट् नड् नशौ नशः, नशं नशौ नशः, नशा नग्भ्यां नड्भ्यामित्यादि।

(१८५) श्वेतवाहेति डमङ् - पुरोडाः, हे पुरोडाः हे पुरोडः, पुरोडाशौ पुरोडाशः, पुरोडोभ्यामित्यादि।

(२१२) चुङिति कङ्—स्रक् स्रग् स्रजौ स्रजः स्रजा स्रग्भ्यामित्यादि।

दधृक् दधृग् दधृषौ दधृषः, दधृग्भ्यामित्यादि।

षट् षड् षड्भिः षड्भ्यः षण्णां षट्सु।

---

गुरुपयामः, अ भो भगोऽघोभ्य इत्यत्र भगोमान्निध्येऽपि सामान्य भो-ग्रहणार्थस्तेन भो हृताः भो अमराः भोयमराः इत्यादौ स्यात्। अत्र भवद्ग्रहणं नेच्छन्ति परे। शेषं श्रीमद्वदिति—(२) एतेनात स्त्रिमंत्र-डवतुप्रत्ययान्त-भवत्-शब्दस्यैव ग्रहणमित्युक्तम्। अतएव शतन्तः पूर्व्वोदाहृतः।

(२) संक्षिप्तसारे सुबन्तपादे १४१ सूत्रस्य वृत्तौ 'अव्ययोऽपि भोः शब्दोऽस्ति, तेन भो ब्राह्मणाः भो देवदत्त यज्ञदत्त विष्णुमित्राः। तथाच भाष्यम्- अव्ययमेव भोः शब्दो, नैषा भवत प्रकृति रित्युक्तम्। 'भगोः शब्दस्य अघोः शब्दस्य चाव्ययत्वं चतु

२२८। सषिमुस्-सजुषह्नां रङ् फेऽचः।

(सष-इस्-उस्-सजुष्-अह्नां ६।।।, रङ् ।१।, फे ७।, अचः ६।)।

सस्य स्थाने जातस्य षस्य इसुसः सजुषोऽह्नश्च रङ् स्यात् फे परे, नतु चान्तस्य।

२२९। व्यंनच्-तयीको धोर्घोऽकुरकुरोऽखेः।

( विं ७।, अनच्-तयि ७।, इकः ६।, धोः ६।, घंः १।, अकुर्-कुरः ६।, अखेः ६।)।

धोरिको घंः स्यात् वि रेफे च, नतु कुरकुरोः, न च खेः, नाचि तये च।

पिपठीः पिपठिषौ पिपठिषः, पिपठीर्भ्यां पिपठीःषु। एवं चिकीर्षादयः।

२२८। सषे। सस्य षः सषः, सषश्च इश्च उश्च सजुश्च अहश्च तानि तेषाम्। न च अच तस्य। इस्-उसौ स्वरूपौ, सजुष् प्रकृतिषान्तः, अहन इति नञ्पूर्व्व हाकोऽवन्तः।

२२९। व्यं। रच वच तत् तस्मिन्, तश्चासौ यचेति तय, अच तयच तत् अच् तय, न अच्तय अनचतय तस्मिन्। कुर्च कुर्च तत्, न तत् अकुरकुर् तस्य। न खिरखि स्तस्य। (१) पिपठीरिति सषो रङि अनेन घंः। एके तु दान्तत्वात् षत्वस्यासिद्धौ इमन्तत्वा-

र्यन्यत्रां व्यर्थश्रुतं, तन्मते भगो देवदत्त यज्ञदत्त विष्णुमित्रा इत्यादिर्भवती' ति तत्रैव गोयीचन्द्रः।

(१) "व्याख्यायां रेफे वकारे च इति वक्तव्ये यद्विरेफ इत्युक्तं तत् र्विं इत्यस्य अनच्तयीत्यनेन क्रमसम्बन्धाभावार्थ' मिति गङ्गाधरः।

दोः दोषौ दोषः। (११७) पाददन्तेति दोषन् वा। दोष्णः दोषः, दोष्णा दोषा, दोषभ्यां दोर्भ्यामित्यादि।

(२१४) स्वादेः सो लोपः। विविट् विविड् विविचौ विविचः, विविड्भ्यामित्यादि।

पिपक् पिपग् पिपचौ पिपचः पिपग्भ्यामित्यादि। एवं गोरक्-दिधक्षादयः।

सुपीः सुपिसौ सुपिसः, सुपीर्भ्यां, सुपीःषु। एवं सुतूः।

विद्वान्, हे विद्वन् विद्वांसौ विद्वांसः, विद्वांसं विद्वांसौ।

ढ्रङ् इत्याहुः। तन्मते चिकीर्षु इत्यत्र रात् सस्येति सलोपे रङ्-भिन्नरेफस्य न विरिति। तदमत्। सपिसुम् सजुषङ्गामित्यत्र सपोऽ स्य निरर्थकत्वापत्तेरिति। अस्मन्मते तु रङि ढ्रो ढ्रीति पूर्व्वरेफ-लोपेऽपि राद्रङ्वर्ज्जनात् न विः(१)। दिवमिच्छति दिव्यति इत्यत्र भूतपूर्व्वलिलवमाश्रित्य न घः। अनच्-तर्यीति किं—गिरौ गिरः (२) धुरं वहति धुर्य्य इत्यादि। अकुर-कुर इति किं—कुर्य्यात् कुर्य्यात्। अखेरिति किं—विव्यतुः। धोः किं मपिः धनुरित्यादि।

---

(१) पूर्व्वं १८८ रङो विःसुपीति सूत्रस्य टीकायां "चिकीर्षु इत्यत्र तु अरादिति विधाना दिति सन्दर्भस्य दुर्गादासमतैकवाक्यतयास्माभि स्तत्र (२) चिह्नित टिप्पनी कृता। वस्तुतस्तु रङो विःसुपीति सूत्रे एव अरादिति वक्तव्यं, तेन रात परस्य रङो न विरित्येव तर्कवागीशस्याशयः। अतएवात्र राद्रङ्वर्ज्जनादित्युक्तम्।

(२) नत्रकार-साहचर्य्यादत्र अच प्रत्ययस्यैव, तेन गीरर्थः धूरन्नः पिपठीरोकः आशीरारम्भ इत्यादौ दीर्घ स्यादेवेति दुर्गादासः। अत्र आशीरक इति ज्ञापक मिति मधुसूदनः।

विविडिति चान्तवर्ज्जनात् न रुङ्। एवं लिलिडित्यादि। (१) पिपगिति षढान्यस्थान-जत्वात् न कलोपः। गोरगिति रुत्ववर्ज्जनात् न कलोपः। दिधगिति दादे र्हस्य घत्वे घस्थानजत्वात् न कलोपः। दन्त्यसान्तस्य उदाहरणमाह दोरिति। इदं मूर्द्धन्यान्तमिति केचित्(२); तन्न, दोष्णानित्यत्र डत्वापत्तेः, तान्तसान्त-

(१) अत्र "परे तु रुङि वा रुं प्रति षत्वस्यासिद्धत्वात् विवीः लिलीः ब्रह्मविवीः मधुलिन्नीरित्याहु"रित्यधिकः पाठः।

(२) तथाच दुर्गादासः—"दोरिति दम्यु दम उपशमे इत्यस्मात् क्विपि भुजे याच्ये मन्तोपादित्वादकारस्य ओकारे अम्वशादित्वात् षत्वे सपेति रुङ् इत्याह। तर्कवागीशस्तु दमेर्डोस् इत्यौणादिकसूत्रेण दमधातोर्डोसि कृते सान्तोऽयमिति मत्वा गले एवं गोरग् दिधगादय" इति षान्तशब्दोदाहरणानन्तरं दोस्शब्दमुदाहृतवान्। अस्य च षान्तत्वे दोष्णानित्यादौ डत्वापत्तिश्च दर्शितवान्। अतोऽस्मिन् ग्रन्थे तर्कवागीशमतानुसारेणास्य कृते तथैव सन्निवेशो युक्तः। किन्त्वत्र बहूनां मतभेदमालोक्य नास्माभिः प्रचरत्पद्धतिरुल्लङ्घिता। तत्र दुर्गादासमतं प्रागेव दर्शितम्।

सिद्धान्तकौमुद्यां 'नुम्विसर्जनीयशर्व्यवायेऽपि' (८।३।५८) इति सूत्रस्य वृत्तौ "दमेर्डोस्, डित्त्वसामर्थ्याट्टिलोपः, षत्वस्यासिद्धत्वाद्रुत्वविसर्गौ" इत्युक्तम्। एतेन षान्तत्वमस्य प्रतीयते।

कातन्त्रे चतुष्टयवृत्तौ "हसुम् दोषां घोषवति रः" इति २०१ सूत्रस्य "हसन्तस्य उसन्तस्य दोस्शब्दस्य च रो भवति घोषवद्विभक्तौ" इति वृत्तौ सान्तोऽयमुक्तः (घोषवत् संज्ञा अस्मन्मते हबसंज्ञासमानार्था)। षत्वापत्तिवारणाय तस्य रो विहितः। तथाच "घोषवति रो भवति अघोषे रो न भवतीति व्यावृत्तिबलादस्य प्रतियोगी विसृष्टः साधितो भवति। सर्पिःषु धनुःषु दोःष्विति। अन्यथा सर्पेरुस् धनेरुस दमेर्डोस् इति प्रत्ययस्थत्वात् षत्वमेव स्यात्। विसर्गे च कृते पक्षे पररूपं भवतीति" पञ्जी।

संक्षिप्तसारे सुबन्तपादे २५० सूत्रस्य वृत्तौ 'दोष् दोषसि' इति निर्देशात् स्थानिभूतः शब्दः षान्तो दृश्यते।

## २३०। वसो र्वः सेमप्युर्मतुप्योः।

(वसोः ६।, वः १।, सेम् ।१।, अपि।१।, उः १।, मतुप्योः ७॥)।

वसो र्वे शब्द इम्सहितोऽपि उः स्यात् मतौ पौ च परं।

विदुषः विदुषा। (१८४) स्रसध्वसवस्विति दङ्। विदद्भ्यामित्यादि। पेचिवान् पेचिवांसौ पेचिवांसः, पेचिवांसं पेचिवांसौ पेचुषः, पेचुषा पेचिवद्भ्यामित्यादि। जगन्वान् जगन्वांसौ जगन्वांसः, जगन्वांसं जगन्वांसौ। वस्यान्ते तन्निमित्तस्य (१) नस्य मन्ते-

..

योरेव दत्वनिषेधात्। दोर्भ्यामित्यादौ तु मस्य वौ कृते रिचोऽवे इति रः। सुपोरिति सुपूर्व्वात् पिस् क्विपि इत्यस्मात् क्विप्, इसन्तत्वात् रङि षः। एवं तुस ध्याने सुतुः इति।

२३०। वुसोः। इमा सह वर्त्तमानः सेम्। मतुश्च पिश्च तौ तयोः। अपिशब्दात् केवलवमात्रस्यापि उः, तेन विदुषः विदुषान् इत्यादौ स्यात्। वस्यान्ते इत्यादि निमित्तापाये

भरतसेनेनापि स्वकृतद्रुतबोधव्याकरणस्य "मजपस्यात्र इसुमोः मजगक्षोश्च फे रङ्" इति सूत्रटीकायां "दोर्भिरिति दमधातोरौणादिकडोस, मभयोस्तु पदान्तरदित्यातिदेशिककार्य्यस्य क्वचिद्व्यभिचारात् षत्वं, ततः मस्य स्थाने जातस्य गस्य रङ्, ततः सिलोपः, इष्टसिद्धेर न्यायस्वीकरणमिति प्रथमं न सिलोपः। किं वा मभयोः मध्ये विसर्गः। दोषाविन्यादौ षत्वं भवत्येव" इत्युक्तवता पान्तसान्तपक्षद्वयमेवाश्रितम्। दोषन्शब्दोदाहरणन्तु रङ्विधायकसूत्रस्य विविक्तशब्दादिप्रत्युदाहरणानन्तरं प्रदर्श्य तत्र शालोगसम्मतसान्तपक्ष एव तस्मै रोचते इति भङ्ग्यन्तरेण दर्शितमिति दिक्।

(१) स एव वकारो निमित्तं यस्य स तस्य। धो मौन इति वे परे मस्य नविधानात्।

२३१ । हन-गम-जन-खन-घसामुङ्लोपोऽङे-ऽच्यणौ ।

(हन—घसां ६।।।, उङ् ।६। लोपः १।, अङे ७।, अचि ७।, अणौ ७।) ।

एषामुङ्लोपः स्यादणावचि, नतु ङे ।

जग्मुषः, जग्मुषा जगन्वद्भ्यामित्यादि । एवं जग्निवान् ।

(१६५) अधोरित्युक्तेः, सुहिन् सुहिंसौ सुहिंसः, सुहिन्भ्याम् । ध्वत् ध्वसौ ध्वसः, ध्वद्भ्याम् । एवं स्रत् । उक्थशाः, हे उक्थशाः हे उक्थशः, उक्थशासौ उक्थशासः, उक्थशोभ्यामित्यादि ।

---

नैमित्तिकस्याप्यपाय इति न्यायात् जगमुष् इति स्थिते अत्र सूत्रयति ।

२३१ । हन । हन् च गम् च इत्यादि च-सः । उङिति लुप्तषोक्तं दम् (१) । न ङः अङः तस्मिन् । न भवति णुर्यस्मिन् तस्मिन् । घस इत्यत्र सामान्य-घसग्रहणं, तेन घसधोः अद आदिष्टस्य घसस्य । सुहिन्निति सुपूर्व्वात् हिंसि ध कि हिंसे क्विप्, इदित्त्वान्नुण्, नसब्मह्व इत्यत्र ध्रुवर्ज्जनात् न र्घः, स्यान्तलुप् । ध्वदिति ध्वन्स-धोः क्विप्, स्रसध्वस् इति दङ् । एवं स्रन्स-धोः क्विप्, स्रत् ।

---

(१) "अल्लोप इति सिद्धे उङ्लोपकरणं हिंसादृङ्लोपिन इति सूत्रे एषां प्राप्त्यर्थ" मिति गङ्गाधरः ।

२३२। पुंसोऽसुङ् घौ।

(पुंसः ६।, असुङ् ।१।, घौ ७)।

पुंसोऽसुङ् स्यात् घौ परे, उङावितौ।

पुमान् पुमांसौ पुमांसः, पुम्भ्यां पुंभ्यामित्यादि।

२३३। सेर्डोशनस् पुरुदंसोऽनेहसोऽधेः।

(सेः ६।, डा ।१।, उशनस् पुरुदंसस् अनेहसः ५।, अधेः ६।)।

एभ्यः परस्य सेर्डा स्यात् नतु धेः। उशना।

२३४। धेर्ङ-ङनौ वोशनसः।

(धेः ६।, ङ ङनौ १॥, वा ।१।, उशनसः ५।)।

उशनसः परस्य धेर्ङ ङनौ वा स्तः, ङ इत्। हे उशन हे उशनन् हे उशनः, उशनसौ उशनोभ्याम्।

अनेहा, हे अनेहः, अनेहसौ अनेहसः। एवं पुरुदंसा।

वेधाः, हे वेधः, वेधसौ वेधसः इत्यादि।

(१८६) अधोरित्युक्तेः, सुवः सुवसौ।

२३२। पुंसः। ङिदन्त्यस्य विधानार्थः। उदित् नुमर्थः। पुम्भ्यामिति मभि टान्तत्वात् वा यम्, तेन पुंभ्यामित्यपि।

२३३। सेर्डा। उशना च पुरुदंसा च अनेहा च (१) तत् तस्मात्। डित्त्वात् टिलोपः।

२३४। धेः। ङश्च ङश्च तौ (२)। डित्त्वात् टिलोपः।

(१) उशना दैत्यगुरुः। पुरुदंसा इन्द्रः। अनेहा कालः।

(२) यदुक्तं सम्बोधने तूशनसस्त्रिरूपं सान्तं तथा नान्तमथाप्यदन्तम् इति।

२३५। अदसः सेरौः।

(अदसः ५।, सेः ६।, औः १।)।

अदसः परस्य सेरौः स्यात्। असौ।

२३६। मात् स्वर्घावुऊ।

( मात् ५।, स्वर्घौ १॥, उ-ऊ।१॥)।

अदसो मात् परौ स्वर्घावुदूतावाप्नुतः। अमू।

२३७। एरी व्वे। ( एः १।, ई।१।, व्वे ७।)।

अदसो मात् परो व्वे निष्पन्न एकार ई स्यात्। अमी। अमुम् अमू अमून्। ( १२४ ) टाटमयास्त्रियान्तु ना। अमुना

---

२३५। अदसः। पूर्व्वसूत्रात् वाऽनुवर्त्त्य तस्य व्यवस्थावाचित्वात् साकोऽदसः सेरौ वा स्यात्। तेन असकौ असुकः अमुक इति। स्त्रियाम् असकौ असुका अमुका इति। क्लीवे असुकम् अमुकम् अद इति (१)।

२३६। मात्। स्वश्च घश्च तौ, उश्च ऊश्च तौ। पृथङ्निर्द्देशात् न सन्धिः। अत्रापि वाऽनुवर्त्त्य तस्य व्यवस्थावाचित्वात् असुक इत्यत्र सादपि उकारः।

२३७। एरी। एरिति किम्—अमूः स्त्रियः अमूनि कुलानि इत्यादौ न स्यात्॥ * ॥

इति हसन्तपुंलिङ्गपादः॥ * ॥

---

(१) "क्लीवे तु सेर्लुकि कृते लुकि न तन्नेति निषेधात् त्यदां तदोरित्यस्य दोमोऽदसःसेत्यस्य च अप्राप्तौ अदः अदकः कुलमिति दुर्गादासः।

अमूभ्याम् अमीभिः, अमुष्मै अमूभ्याम् अमीभ्यः, अमुष्मात् अमूभ्याम् अमीभ्यः, अमुष्य अमुयोः अमीषाम्, अमुष्मिन् अमुयोः अमीषु।

इति हसन्त-पुंलिङ्ग-पादः।

---

## हसन्त-स्त्रीलिङ्ग-शब्दः।

### २३८। नहो धङ् भौ।

(नहः ६।, धङ् ।१।, भौ ७)।

नह्रो हस्य धङ् स्यात् भौ परे।

उपानत् उपानद् उपानहौ उपानहः, उपानद्भ्याम्।

(२१२) चुङिति कङ्। उष्णिक् उष्णिहौ, उष्णिग्भ्यामित्यादि।

### २३९। दिव औङ् सौ।

(दिवः ६।, औङ् ।१।, सौ ७)।

दिव औङ् स्यात् सौ परे। द्यौः दिवौ दिवः।

---

२३८। नहो। धकारेऽकार उच्चारणार्थः, होढ इत्यस्य बाधकम्।

२३९। दिव। गौणेऽपि अयं विधिस्तेनातिद्यौरित्यादि। सावित्ति विपर्य्यासौ, तेन विमलद्यु दिनमित्यादौ स्यात् (१)।

(१) "अव्युत्पन्नोऽयं दिव्शब्दः स्वर्गवाची। क्विबन्तस्य द्योः स्मृटावित्यूटि द्युः द्युवावित्यादी' ति मधुसूदनः। 'द्यौः स्वर्गः। दीव्यतीति क्विप्, संज्ञानुरोधात् न षस्य जट्"—इति गङ्गाधरः। विमलद्यु इत्यत्र विमला द्यौ र्यस्मिन्निति वाक्ये

२४०। **वाम्याङ्।** (वा।१।, अमि ७।, आङ्।१।)।

दिव आङ् स्यात् वा अमि परे। द्यां दिवं दिवौ दिवः, दिवा।

२४१। **उहस्युङ्।** (उ-हसि ७।, उङ्।१।)।

दिव उङ् स्यात् उवर्णे हसि च परे। द्युभ्याम्।

गीः गिरौ गिरः। एवं पूः।

(१५८) स्त्रियां त्रिचतुर इति चतसृ। चतस्रः चतस्रः चतसृभिः चतसृभ्यः चतसृभ्यः चतसृणां चतसृषु।

(१३४, २५०) टेरत्वे मत्यांप्। का के काः इत्यादि, सर्व्वावत्। एवं यद्।

(२०४) इदमोऽयमितीयम्। इयम् इमे इमाः, इमाम् इमे इमाः, अनया आभ्याम् आभिः, अस्यै आभ्याम् आभ्यः, अस्याः

२४०। वा। पूर्व्ववद्गौणेऽपि, तेन अतिद्याम् अतिदिवमित्यादि (१)।

२४१। उह। उश्च हश्च तत् तस्मिन्। वेति नानुवर्त्तते, क्लीबे नो लुब्वा धौ इति वा-ग्रहणात् (२)। उवर्णे यथा दिव जहुं द्युहुं

विमलदिव् शब्दस्य गौणत्वेऽपि मार्शिति विषयसप्तमीविधानात् सेर्लुक्यपि औङादेशे विमलद्यौ इति स्थिते क्लीबे स्व इति ह्रस्वः।

(१) "समानार्थस्य द्योशब्दस्य द्यामिति सिद्धेऽपि अयमारम्भः पूर्व्वाचार्य्यानुरोधादिति केचित्। वस्तुतस्तु तत्र। आम्शसोरिति सूत्रे। मुख्यस्यैव ग्रहणम्, अत्र तु गौणमुख्ययोरिति भेदः। तेन अतिदिव इत्यस्य अमि अतिद्याम् अतिदिवम्, तत्र तु अतिद्यो इत्यस्य अतिद्यावमिति" गङ्गाधरः।

(२) विभाषाद्वयमध्यवर्त्तित्वात् नित्यत्वमित्यर्थः।

आभ्याम् आभ्यः, अस्याः अनयोः आसाम्, अस्याम् अनयोः आसु।

स्रक् स्रजौ स्रजः, स्रग्भ्याम्।

( १३४, २५० ) टेरत्वे आप्। स्या त्ये त्याः इत्यादि, सर्व्वा-वत्। एवं तद् एतद्।

वाक् वाचौ वाचः, वाग्भ्याम्।

अप् शब्दो व्यान्तः। (१६५) नमञ्मह्व इति घः। आपः, अपः।

२४२। भ्यपो दङ्। (भि ७।, अपः ६।, दङ् ।१।)।

अपो दङ् स्यात् भि परे। अद्भिः अद्भ्यः अद्भ्यः अपाम् अप्सु।

दिक् दिशौ दिशः, दिग्भ्यामित्यादि। एवं दृक्।

त्विट् त्विषौ त्विषः, त्विड्भ्यामित्यादि।

सजूः सजुषौ सजुषः, सजूर्भ्यां सजूःषु। एवम् आशीः।

---

दूर्व्वतिरित्यादि। उ-साहचर्य्यात् ह्रस्वेऽपि दान्त एव तेन दिवि भवं दिव्यमित्यादौ न स्यात् (१)। दायन्नमित्यादौ तु स्यादेव।

२४२। भ्यपः। दे अकार उच्चारणार्थः, ङ इत्। गौणेऽप्ययं विधिस्तेन स्वद्भ्यामित्यादौ स्यात्। अधिकारात् स्यादेर्भ्येव, तेन अपां भारः अब्भार इत्यादौ न स्यात्। सजूरिति जुषधोः क्विप्, जुषा सह वर्त्तमानः सजूः, रङि व्यंनचतयोरिति घः। आशी-रिति आङ्पूर्व्व शास-धोः क्विप् तस्मिन् ङङ् इत्, दान्तत्वात्

(१) न ह्रं तमार्विति दान्तत्वनिषेधात्। उक्तञ्च गङ्गाधरेण 'उवर्णे परं दान्ते स्थितस्य वर्णेर सम्भवस्तदाह- पर्यात् हस्तेऽपि दान्तत्वमेवेत्यर्थ' इति।

(२३५) अदसः सेरौः। असौ अमू अमूः, अमूम् अमू अमूः, अमुया अमूभ्याम् अमूभिः, अमुष्यै अमूभ्याम् अमूभ्यः, अमुष्याः अमूभ्याम् अमूभ्यः, अमुष्याः अमुयोः अमूषाम्, अमुष्याम् अमुयोः अमूषु।

इति हसन्त-स्त्रीलिङ्ग-पादः।

न षत्वं, हसन्तत्वाद्रङ्, व्यनच्तयीति घः। अयं मूर्द्धन्यान्त इति केचित् (१) तन्न, स्त्रीत्वाशीर्हिताशंसाहिदंष्ट्रयोरित्यमरकोषादौ दन्त्यसान्ते पाठात् ॥ * ॥

इति हसन्त-स्त्रीलिङ्ग-पादः ॥ * ॥

---

(१) "आङ्पूर्व्वात् शास च लुशासने इत्यस्मात् क्विपि शासुङिङ्हसङे इत्यनेन आकारस्य इकारे पदसंज्ञाभावादेव पदान्तत्वाभावे शासवसघसेति षत्वम्। ततो लिङ्गसंज्ञायां स्यादेरुत्पत्तौ सस्य जातस्य षस्य रङ् स्यात्। अतएव सजुषशब्दं साधयित्वा एवमाशीरित्याह। अन्यथा हसन्तत्वेनैव रङि सिद्धे पाणिनिकातन्त्रयोः पृथगाशीर्ग्रहणमनर्थकं स्यात्। दुर्गसिंहोऽप्येवम्। श्रीपतिदत्तोऽपि सजुषाशिषोस्तु मूर्द्धन्यषस्यैव डकारापवादे रेफ इत्याह। ननु विभक्त्युत्पत्तेरादौ षत्वमसत्यमथास्तामिति चेत् सत्यं, आदौ षत्वे सुष्टुणातीति सुषम्णा, ष्टह्नातीति षाह्नीत्यादौ दीर्घार्थं षाकारलोपार्थञ्च तत्तत्सूत्रेषु मूर्द्धन्यषकारस्य पृथग्ग्रहणं गौरवं स्यादिति विभक्त्युत्पत्तेरादौ षत्वं न क्रियते। केचित्तु "विष्णौ च वेधाः स्त्रीत्वाशीर्हिताशंसाहिदंष्ट्रयो"रित्यमरसिंहेन दन्त्यान्तमध्ये पठितमाशीः शब्दं मत्वा आशीरित्यादौ हसन्तत्वादेव रङ् इत्याहु"रिति दुर्गादासः।

## हसन्त-क्लीबलिङ्ग-शब्दः।

(१६८) स्यमो लुगिति। (१८४) स्नस्ध्वमवस्विति दङ्। स्वनडुत् स्वनडुहौ। (१८२) अनड्वचतुरोऽणाणाविति। स्वनड्वांहि। पुनस्तद्वत्। शेषं पुंवत्। चत्वारि।

ब्रह्म।

२४३। क्लीबे नो लुब्वा धौ।

(क्लीबे ७, नः ६।, लुप् ।१।, वा ।१।, धौ ७।)।

नपुंसके नस्य लुप् स्यात् वा धौ परे। हे ब्रह्म हे ब्रह्मन्, ब्रह्मणी ब्रह्माणि। अहः अह्नी अहनी अहानि, अहोभ्याम्।

किं के कानि। इदम् इमे इमानि।

असृक् असृजी असृञ्जि, असानि असृञ्जि, अस्ना असृजा असभ्याम् असृग्भ्यामित्यादि।

ऊर्क् ऊर्जी ऊर्न्जि ऊर्जि। सुवल्न् सुवल्नी सुवन्ल्नि सुवल्नि।

(१६४) नुमयमित्यत्र झमन्तरल्यौगादौ तु वा नुम्।

उकारितो नु विन्दुमात्रस्य नाप्या।

त्यत् त्ये त्यानि। एवं यत् तत् एतत्। (२१०) अन्वौ तु एनत्। गवाक् गोची गवाञ्चि। तिर्य्यक् तिरश्ची तिर्य्यञ्चि।

---

२४३। क्लीबे। अप्राप्ते विभाषेयम्।

नुरित्यादि—यंयम्यत इतिवत् विभागमसन्देहनिरासार्थमि-

एवं परे। यक्कत् यक्कती यक्कन्ति, यकानि यक्कन्ति, यकभ्यां यक्कद्भ्यामित्यादि। एवं शकृत्। ददत् ददती।

२४४। द्विः शतु र्नुण् सौ।

(द्विः ५।, शतुः ६।, नुण् ।१।, शौ ७।)।

द्विः परस्य शतु र्नुण् स्यात् वा शौ परे। ददन्ति ददति। एवं जक्षत् जाग्रदादयः। तुदत्।

२४५। आदीपोः।

( आत् ५।, ई-ईपोः ७॥ )।

अवर्णात् परस्य शतु र्नुण् स्याद्वा ईकारे ईपि च परे।

तुदन्ती तुदती तुदन्ति। भात् भान्ती भाती भान्ति। पचत्।

---

दमृक्षम्। गवागिति—एवं गोऽक् गो अगित्यपि। एवं पर इति— अमुमुयक् अमुमुद्रीचो अमुमुयञ्चीत्यादि।

२४४। द्विः। अप्राप्ते विभाषेयम्।

२४५। आत्। ईश्च ईप् च तौ तयोः। वाशब्दस्य व्यवस्थावाचित्वात् स्यतन्तसामान्यस्यापि, तेन भविष्यन्ती भविष्यतीत्यादौ वा नुण्। तथा च—यास्यन्त्याः प्रियभवनं समुत्सुकायाः, अव्याक्षेपो भविष्यन्त्या इति प्रयोगाः (१)।

---

(१) प्रकरणात् ई इति क्लीबस्यैव। अन्यथा तुदत इदं तुदतीयं इत्यादावपि प्रसक्तिः स्यादिति गङ्गाधरः। क्यादेराकारलोपेऽपि स्थानिवत्त्वात् क्रीणन्ती क्रीणतीत्यादि इत्यप्ययमाह। कातन्त्रे तु चतुष्टयवृत्तौ १०८ सूत्रव्याख्याने क्रीणतीति पङ्क्ती।

## २४६ । अप्यनो नित्यम् ।

( अप्-यन: ५।, नित्यम् १। ) ।

अपो यनश्च परस्य शतु नित्यं नुण् स्यात् ई-ईपो: परयो: ।

पचन्ती पचन्ति । दीव्यत् दीव्यन्ती दीव्यन्ति ।

स्वप् स्वपी । ( १६५) नमब्महन्नांऽधो धं: । स्वाम्भि, स्वपा । ( २४२ ) भ्यपो दङ् । स्वद्भि: ।

(२२८) सपेति रङ् । धनु: धनुषी धनूंषि । एवं हवि: । पय: पयसी पयांसि, पयसा पयोभ्याम् । अद: अमू अमूनि । द्वौ प्रीवत् ।

इति हसन्त-क्लीवलिङ्ग पाद: ।

---

२४६ । अप् । अप् च यन् च तत् तस्मात् । पूर्व्वसूत्रात् वाऽनुवर्त्त्य तस्य व्यवस्थादाचित्वात् विच्छायन्ती विच्छायतीत्यत्र विकल्प: (१)। अनायन्तात्तु तुदादित्वात् शे विच्छती विच्छन्तीति पूर्व्वेणैव विकल्प: । स्वबिति शोभना आपो यस्मिन् तत् । अर्च्चायां नाऽकारस्त्य: (२) ॥ ॐ ॥

इति हसन्त नपुंसकलिङ्ग-पाद: ॥ ॐ ॥

---

(१) दुर्गादासस्तु विच्छ श गतौ इत्यस्य विच्छास्तुतिपणो वाय इति आयपक्षे शपि विच्छायन्तीति नित्यमित्याह ।

(२) नार्च्चायां स्वतेरितिनिषेधात् पद्यपर इत्यनेन अ प्रत्ययो न स्यादित्यर्थ: ।

## अव्ययशब्दः।

२४७। व्याल्लुक् तेः। (व्यात् ५।, लुक् ।१।, तेः ६।)।

व्यात् परस्याः तेः लुक् स्यात्। स्वः प्रातः च वा ह्या हे उच्चैः उच्चकैः धिक् धकित् प्र परा हरिवत् कृत्वा।

---

२४७। व्यात्। व्यमव्ययम् अव्यक्तलिङ्गमित्यर्थः। अव्यक्तलिङ्गत्वात् नपुंसकत्वं प्रतिपादितम्(१)। एतेन शास्त्रान्तरे अव्ययस्य क्लीवत्वविधानं व्यर्थमिति। न च व्यानां लिङ्गकृतप्रयोगवैलक्षण्याभावात् अलिङ्गत्वमिति वाच्यम्। युष्मदस्मदोस्तदभावेनालिङ्गत्वे तद्विशेषणानां त्रिलिङ्गत्वानुपपत्तेः। अतएवोक्तं डतिव्यणान्त इत्यादि। तथा च "षट्संज्ञकास्त्रिषु समा युष्मदस्मत्तिङव्यय"मित्यमरः (२)। व्यविशेषणानां तु क्लीवत्वैकत्वे एव "क्रियाव्ययानां भेदकान्येकत्वेऽपि" (३) इति क्लीवलिङ्गसंग्रहे अमरकोषात्। तथा च सनातनं स्वरपि येन संनोहरमिति। लुक्करणात् स्वः ह्य इत्यादौ अत्वसोऽधोरिति न घं।

---

(१) सामान्यत्वान्नपुंसकमित्युक्तेरित्यर्थः। यदुक्तं "सदृशं त्रिषु लिङ्गेषु सर्व्वासु च विभक्तिषु। वचनेषु च सर्व्वेषु यन्न व्येति तदव्यय"मिति। यन्न व्येति विशेषरूपं न प्राप्नोति तदव्ययमिति। विभक्तिमुत्पाद्य तल्लुक्करणं पदत्वार्थमिति।

(२) अमरकोषे लिङ्गादिसंग्रहवर्गस्यान्तिमा कारिकेयम्। अस्यार्थः—संख्यावाचकानां ष-नकारान्तानां कतिशब्दस्य च षडिति संज्ञा। तथाच ष्णान्ताः षट् कतिचेति परसूत्रम्। ते त्रिषु समा लिङ्गकृतविशेषरहिता इत्यर्थः। तथा युष्मदस्मत्तिङन्तमव्ययञ्च त्रिषु सममित्यर्थः।

(३) क्रियाणामव्ययानाञ्च भेदकानि विशेषणानि एकत्वे, चापिकारात् क्लीवे स्युरित्यर्थः।

२४८ । उदः सः स्थास्तम्भोः ।

( उदः ५।, सः ६।, स्थास्तम्भोः ६॥) ।

उदः परयोरनयोः सस्य लुक् स्यात् । उत्थानम् उत्तम्भः ।

२४९ । वातोऽवाप्योः ।

(वा ।१।, अतः ६।, अवाप्योः ६॥) ।

अवाप्योरकारस्य लुक् स्यात् वा । वगाहः अवगाहः, पिधानम् अपिधानम् ।

न गौणानुकरणयोः । श्यात्परस्याः क्तौ लुक् न स्यात् गौणानुकरणयोः । प्राप्तं स्वर्येस्ते प्राप्तस्वरः, अतिस्वगौ नराः, प्रात, प्रोपात् । अनयोः किं—परमश्च तत् स्वश्चेति तस्मात् परमस्वः भ्रष्ट इति ।

२४८ । उदः । स्थाश्च स्तम्भश्च तौ तयोः । सिंहावलोकित न्यायेन वा-ग्रहणात् तस्य व्यवस्थावाचित्वात् स्कन्दते रोगेऽपि, (१) तेन उत्कन्दो नाम रोग इत्यत्र स्यात् ।

२४९ । वातः । अवश्च अपिश्च तौ तयोः । अभिधानात् अवस्य तु तंस गाहस्वेव, अपेर्नह्य धाञोरेव अकारलुक् तेन वतंसति अवतंसति, वतंसः अवतंसः, वगाहः अवगाहः, पिनद्धम् अपिनद्धं, पिधानम अपिधानम् इत्यादौ स्यात् । न तु अवगच्छति अपिजयति इत्यादौ । अवमाहचर्य्यात् गिमंज्ञस्यापेरेव, तेन विप-

१ रोगेऽर्थे स्कन्दधातोरपि सलोप इत्यर्थः ।

## स्त्रीत्यः ।

२५० । स्त्रियामत आप् ।

( स्त्रियाम् ७।, अतः ५।, आप् ।१। ) ।

स्त्रीलिङ्गे स्थितादकारान्तादाप् स्यात् । मेधा, सर्व्वा ।

---

मपि धास्यति, अपि नह्यति मलिनमित्यादौ न स्यात्, गर्हायां गित्वाभावात् । एतत्तु भागुरिमतेनोक्तं, तथाच—

वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोः ।

टापञ्चापि हलन्तानां क्षुधा वाचा दिशा गिरा ॥ इति ॥

इति व्यपादः ॥ ॥

इति हसन्ताध्यायः समाप्तः ॥ ॥

---

२५० । स्त्रिया । स्त्रियामित्यापादमधिकारः । अत इत्यनेन लाक्षणिकादपीति, तेन स्या सा इत्यादौ सर्व्ववदाप् स्यात् । तटादीनान्तु यदा स्त्रीत्वं विवक्ष्यते, तदैवाबादयः स्युः, न तु पुंस्त्वक्लीवत्वविवक्षायामिति । आबादयस्तु साधुत्वार्थमेव विधीयन्ते । मेधेति—मेधृ ञ मेधायाम्, अस्मात् सेमत्वात् सरोरित्यः, पश्चादाप् (१) ।

(१) लिङ्गानां स्त्रीत्वविवक्षायां स्याद्युत्पत्तेः प्रागेव यथासम्भवमाबादयः स्युः । त्यदादीनान्तु टेरत्वे कृत्याबिति सम्प्रदायः ।

२५१। हसाद्वा। (हसात् ५।, वा ।१। )।

स्त्रियां हसन्तादाप् स्याद्वा। वाचा वाक्, दिशा दिक्।

२५२। मनो डाप्। (मनः ५।, डाप् ।१। )।

स्त्रियां मनन्तात् डाप् स्याद्वा। सीमे सीमानौ, पामे पामानौ।

२५३। हेऽनः। (हे ७।, अनः ५। )।

---

२५१। हसा। यद्यपि सामान्येनोक्तं तथाप्यभिधानाद्विशेषतो ज्ञेयम्। तेन—

"क्षुधा वाचा दिशा क्रुञ्चा विपाशा च स्रजा रुजा।
गिरोष्णिहा देवविशा पक्षे क्षुद्वाग्दिगादयः॥"

वाशब्दस्य व्यवस्थावाचित्वात् क्वचिन्न स्यात् क्वचिन्नित्यं तेन, द्विपात् त्रिपात् चतुष्पादित्यादौ न स्यात्। द्विपदा, त्रिपदा, चतुष्पदा (१) ऋगित्यादौ ऋग्विषये नित्यं स्यात् (२)।

२५२। मनो। मन्नित्यनर्थकस्यापि ग्रहणम्। तेन सुधर्म्मे सुधर्म्माणौ सभे, बहुपटिमे बहुपटिमानौ स्त्रियौ। तथाच रामायणे "स्वभावश्चैव नारीणामेषु लोकेषु दृश्यते। विरुद्धधर्म्माश्रयपला भ्रातृभेदकराः स्त्रियः"।

२५३। हे। वाशब्दस्य व्यवस्थावाचित्वात् डाबभावपक्षेऽपि

(१) २२४ सूत्रस्य टीका द्रष्टव्या।

(२) "कश्चिद्विकल्पमेतदिच्छति। द्विपदी द्विपदा द्विपादृक्' इति संक्षिप्तसारे तद्धितपादे ५ सूत्रस्य टीकायां गोयीचन्द्रः।

स्त्रियां ङे स्थितादनन्तात् डाप् स्याद्वा। बहुयज्वे बहु-यज्वानौ।

२५४। ङीप् चाम्वस्यात्।

( ङीप् ।१।, च ।१।, अम्वस्यात् ५। )।

मस्य-वस्यान्यपरादनन्तात् ङे स्थितात् स्त्रियामीप् डाप् च स्याद्वा। बहुराज्ञ्यौ बहुराजे बहुराजानौ।

२५५। काप्यनाशीरकेऽदिदयत्तत्त्विपादेः।

( कापि ७।, अनाशीरके ७।, अत् ।१।, इत् ।१।, अयत्तत्-त्विपादेः ६। )।

---

आबीपोर्निषेधः। तेन बहुयुवानौ सुमघवानौ पृथ्व्यावित्यादौ न स्यात्। ङे किम्—अतियज्वानौ।

२५४। ङीप्। म च वच म्वं, म्वञ्च तत् स्यश्चेति म्वस्यः, न म्वस्यः अम्वस्यस्तस्मात्। तुल्यविषयत्वादुपधानः सदानोऽल्लोप इत्यत्नापस्तत्रैवायं विधिस्तेन बहुयुना पूः, सुमघवा द्यौरित्यादौ न स्यात्, श्वयुवमघोनेत्यादिना पावुत्वेऽल्लोपाभावात्। बहु-सोम्न्यौ पृथ्व्यावित्यादौ न मन्संख्येति न ङीप्निषेधः, तस्याङ-विषये चरितार्थत्वात्। तथाच तनुमवजितलोकपालधाम्नीमिति। पक्षे बहुसोमानौ बहुसोमे इत्यादि। बहुराज्ञाविति बहवो राजानो ययोर्नगर्य्योस्ते इति वाक्यम्, एवं बहुतक्ष्णौ बहुतक्षे बहु-तक्षाणावित्यादि।

२५५। काप्य। कादाप् काप् तस्मिन्, आशिषि अकः

आशीरर्थाकवर्जे कापि परे अकारः इकारः स्यात्, नतु यत्-तत्-क्षिपादेः । सर्व्विका कारिका । आशीरके तु जीवका । यदादेस्तु यका सका, क्षिपका ध्रुवका चटका ।

आशीरकः, नास्ति आशीरको यस्मिन् सः अनाशीरकस्तस्मिन्, कापीत्यस्य विशेषणम् (१) । क्षिप् आदिर्यस्य स क्षिपादिः, यच्च तच्च क्षिपादिश्च तत्, न तत् अयत्तत्क्षिपादिस्तस्य, पुंस्त्वं सौत्रत्वात् । जीवकेति आशिषीत्यनेनाकः । क्षिपकेति क्षिप-धातोरिजुड्त्वात् कः क्षिपस्ततः स्वार्थे कः पश्चादाप् ।

क्षिपादिर्यथा—

क्षिपका ध्रुवका चैव चटका धारकेष्टका ।
करकाधित्यका प्रोक्ता चरकोपत्यकेड़का ।
अलका यक्षपुर्य्यान्तु पिटका वामकेत्यपि ।
अष्टका तु पितर्य्यर्थे तारका भट्टगंशयोः ।
वर्त्तका शकुनौ प्रोक्ता वर्णभेदे च वर्णका ।
अत्य प्रकृतिकाः (२) सर्व्वे नरिकामामिके विना ।

एषु किम्—अष्टिका तारिका वर्त्तिका वर्णिका । शकुनौ वर्त्तिकेत्यपि कश्चित् । आकृतिगणोऽयम् ।

(१) अत्र मूले अनाशीरके इति बहुटीकाकार-सम्मतः पाठः । तर्कवागीशेन तु अनाशीरककेति पाठं मत्वा आशीरकस्य क आशीरककः नास्ति आशीरकको यस्मिन्निति विग्रहः कृतः, किन्तु नास्ति आशीरको यस्मिन्निति वाक्ये अनाशीरके इत्यनेनैवेष्टसिद्धेरस्माभिस्तदुपेक्षितम् ।

(२) अत्यप्रकृतिकाः—नास्ति त्यप्रकृतिः प्रत्ययस्वरूपः ककारो येषां तादृशाः शब्दाः प्रकृतिककारयुक्ता इत्यर्थः क्षिपादौ ज्ञेया इत्यर्थः । ध्रुवका ञि ध्रु गि स्थैर्य्ये

२५६। द्वैषसूतपुत्रवृन्दारस्वज्ञाजभस्त्राधुत्यक्योर्वा।

(द्वैष—धुत्यक्योः ६॥, वा ।१।)

द्वादेर्धुत्यवर्जयोः कययोश्चाकार इकारः स्याद्वा कापि।

द्विके द्वके, चटकिका चटकका, आर्यिका आर्यका।

धुत्ययोस्तु नाथिका क्षत्रिका।

---

२५६। द्वैष। धुश्च त्यश्च तौ, न तौ अधुत्यौ, कश्च यश्च तत्, अधुत्ययोः क्य, पश्चात् द्वश्च, एषश्च, सूतश्च, पुत्रश्च, वृन्दारश्च, स्वश्च, ज्ञश्च, अजश्च, भस्त्रा च तत्, तच्च अधुत्यक्य च तौ तयोः। द्विके इति

---

इत्यस्मात् पचादित्वादौन क्रटादित्वाद्गुणाभावे भ्रुव तस्मात् स्वार्थे कण्। चटका—चट भेदे पचादित्वादन्, स्वार्थे कण। "चटकः कलविङ्कः स्यात् तस्य स्त्री चटका तयोः। पुमपत्ये चाटकैरः स्त्र्यपत्ये चटकैव ही"त्यमरः। इष्टका—इषधोर्नाम्नीति तकः। करका वर्षोपलः। क्ष ज न व धे इत्यस्मान्नाम्नीत्यकः। अधित्यका उपत्यका अधू-पाभ्यामूर्द्धासन्नयोस्त्यकन्नित्यमरटीका। एड़का—एड़कोमेष', "ईड़्यते काम्बलिकैः ईड़ डः लस्तुनौ नाम्नीत्यकः निपातनाद्गुण इत्यमरटीकायां भरतः। अस्य अजादि-पाठाच्चेप्। पिटका विस्फोटः पिटकस्त्रिष्वित्यमरोक्त-पिटकशब्दस्य स्त्रियां रूपम्। वामका—वामका सिंहपर्णीति जटाधरः। वाकस् इति भाषा। अमरे तु वासिके-त्यस्ति। अष्टका—पितरि श्राद्धकालत्वात् पितृसम्बन्धित्वे अर्थे वाच्ये सति। स च श्राद्धकालो गौणचान्द्र पौष-माघ-फाल्गुनमासीय कृष्णाष्टमीरूप इति। अश्नन्ति पितरोऽस्यामिति अशधातो र्नाम्नीति तकप्रत्ययः। अन्यत्र अष्टिका-खारी परि-माणविशेषः। तारका भं नक्षत्रं, दृगंशः कणीनिका। अन्यत्र तारिका दासीति काशिका। वर्त्तका शकुनिः पक्षी। अन्यत्र वर्त्तिकेति दीपाश्रयः। प्राचां मते वर्त्तका शकुनिः, उदीचान्तु वर्त्तिकेति काशिका। ७।३।४५। अतएवात्र दुर्गा-दासेन शकुनौ सा तु वर्त्तकेत्युक्तम्। वर्णका प्रावरणभेद इति काशिका। अन्यत्र वर्णिका नटादीनां वर्णविशेषकारिका रचना। "ग्रन्थविशेषस्य व्याख्या स्तोत्रकर्त्री चे'ति तत्त्वबोधिनी। नरिका स्त्री। नरं कायति कै शब्दे, कामयते वा डः। नर्विकेत्यपि पाठः। मामिका - मम इयमिति ण्णे ममकादेशः।

हि श्री टेरत्वे पश्चादाप् तत श्रीरी श्रक् पश्चादिः । एवम् एषका एषिका। एषेति निर्देशात् एतिके इति पूर्व्वेण नित्यम् । चटकिकेति चटकाशब्दात् स्वार्थे कः धुभिन्नत्वादिर्व्वा । आर्य्यिकेति धुभिन्नत्वादिर्व्वा । एवं भ्रातृव्यका भ्रातृव्यिका (१) इत्यादि । नायिकेति नौञधोर्णकः आप्,धुवर्ज्जनात् पूर्व्वेण नित्यम् । आङ्पूर्व्व-ध्यैधोर्म्मनोपादित्वात् धस्य ढः आढ्या ततः स्वार्थे कण् आढ्यिका । धुवर्ज्जनात् पूर्व्वेण नित्यम् । यथासंख्याभावज्ञापनार्थं नायिकेति धोर्यकारेणोदाहृतम् । कस्य यथा-शिचां कायति कै शब्दे शिचाका, शिचाका एव शिचाकिका इत्यादि । क्वत्यिकेति क्व भवा इत्यर्थे त्यत्राद्यचिरेति त्यप्रत्ययः ततः स्वार्थे कण् । एवम् इहत्यिका अत्र-त्यिका दाचिणात्यिका इत्यादि । त्य इति स्वरूपस्य निषेधात् दूरे-त्यिका दूरेत्यका(२) इत्यादौ स्यादेव । अत्र स्वज्ञाजानां गौणेऽपि, तेन बहुस्विका बहुस्वका, बहुज्ञिका बहुज्ञका, बह्वजिका बह्वजके-त्यादि । द्वादीनां केवलानामेव (३) तेन परमद्विके(४) इति पूर्व्वेण नित्यम् । अन्ये तु न मे स्त्रेरिति सूत्रयित्वा नेच्छन्ति, परमद्वके परमेषका इत्यादीत्याहुः । भस्त्रका (५) भस्त्रिका इति परसूत्रेणैव सिद्धे भस्त्राग्रहणात् निर्भस्त्रिका, निर्भस्त्रका इति गौणेऽपि स्यात् इति परे ।

(१) भ्रातृ शब्दात् पत्येऽर्थे व्य प्रत्ययस्तस्य स्त्रियां रूपम् ।

(२) अत्र दूरादेत्यप्रत्यय इति कार्त्तिकेयः ।

(३) समासान्तर्य्यभिन्नानामित्यर्थः ।

(४) परमे द्वे इति कर्म्मधारयः ।

(५) भस्त्रा वायु-यन्त्रविशेषः, याँता इति भाषा ।

२५७। वाच्चापोऽनुक्तपुंस्कस्य।

( वा ।१।, आत् ।१।, च ।१।, आप: ६।, अनुक्तपुंस्कस्य ६ )

आप: स्थाने जातोऽकार इदाच्च स्याद्वा कापि, न तूक्त-पुंस्कस्य। गङ्गिका गङ्गाका गङ्गका। उक्तपुंस्कस्य तु शुभ्रिका।

२५८। ष्टिन्नृन्नश्वाहनदादेरीप्।

( ष् ट् उ ऋ इत्, न ऋ अश्व वाह नदादे: ५।, ईप् ।१। )।

षकारेत् टकारेत् उकारेत् ऋकारेतो नान्ता-दृदन्ता दश्वो वाहो नदादेश्च ईप् स्यात् स्त्रियाम्।

---

२५७। वाच्च। चकारात् इदित्यनुवर्त्तते। न उक्तपुंस्कं तस्य। गङ्गिकेत्यादि गङ्गाशब्दात् स्वार्थे क: केऽक: स्व इति स्व:। पूर्व्वसूत्रे भस्त्राग्रहणात्, भस्त्राका, निर्भस्त्राका इत्युप्यन्ये। शुभ्रि-केति उक्तपुंस्कत्वान्नित्यम्। एवमतिगङ्गिकेत्यादि।

२५८। ष्टि। ष च ट च उश्च ऋश्च तत्, ष्टृ इत् यस्य स:, नट आदिर्यस्य स: नदादि:, पश्चात् ष्टिश्च न च ऋश्च अश्व च वाह च नदादिश्च तत्तस्मात्, पुंस्त्वं सौत्रत्वात्। अत्र ष्टिन्नदादिभ्य: मुख्य एव, अन्यस्मात् गौणागौणयोरिति। तेन बहुगार्ग्यी अतिकुरुचरा बहुनदा सुमत्स्या इत्यादौ न स्यात्। विदुषी, सुविदुषी (१) पचन्ती, बहुपचन्ती इत्यादौ स्यात्। स्तनन्धयीति धेटष्टित्त्वात्।

(१) शोभना विद्वांसो यस्यां पुर्य्यामिति। एवं बहव: पचन्तो यस्यामिति।

## २५९ । यथोर्लोपोऽयुक्तौ पौ ।

( यथोः ६॥, लोपः १।, अयुक्तौ ७।, पौ ७। ) ।

इवर्णावर्णयोर्लोपः स्यात् अयावक्तौ पौ परे ।

प (१)—वैष्णवी वराकी ।

## २६० । क्यङ्च्वौ चानात्यपत्यणास्य ।

(क्य ङ्य-च्वौ ७।, च ।१।, अनाति ७।, अपत्यणास्य ६।) ।

अपत्यार्थ-णास्य लोपः स्यात् अयावक्तौ पौ परे, क्य-ङ्य च्वौ च, नत्वाकारे । गार्गी ।

---

२५९ । यथोः । इश्च अश्च तौ तयोः, युश्च क्तिश्च तत्, न तत् यस्मिन् अयुक्ति, तस्मिन् अयुक्तौ, पावित्यस्य विशेषणं, पृथगुद्- करणात् प्रेष्ठः प्रेयानित्यादौ न स्यात् । वैष्णवीति विष्णुर्देवता यस्या इत्यर्थे णः । वराकीति तृजधौः षाकः । अयुक्तौ किम् ? ऊर्णायुः रामेणित्यादि ।

२६० । क्यश्च ङ्यश्च च्विश्च तत्तस्मिन्, पुंस्त्वं सौत्रत्वात् । न आत् अनात् तस्मिन् । अयुक्तिपावित्यनुवृत्तस्यैव विशेषणम् । गार्गीति गर्गस्यापत्यमित्यर्थे णाः । क्ये गार्गीयति, ङ्ये गार्गायते, च्वौ गार्गीकरोति इत्यादि । अपत्ये किम् ? मैत्रायते (२) । अनादिति किम् ? गार्ग्यायणः वात्स्यायनः ।

(१) पकारेत उदाहरणमाह । एवमन्यत्र ।

(२) मित्रस्य भावः मैत्रं तदिवाचरतीति ङ्यः ।

२६१। सूर्य्यागस्त्यस्य तिष्यपुष्यस्य णामत्स्यस्येयेपो भण्यां ईपि यः।

( सूर्य्यागस्त्यस्य ६।, तिष्यपुष्यस्य ६।, णामत्स्यस्य ६।, ईयेपोः ७॥, भण्यो ७।, ईपि ७।, यः ६। )।

एषां यस्य लोपः स्यात् ईयेपोः परयोः, नक्षत्रणे ईपि च।

सौरी आगस्ती चातुरी।

---

२६१। सूर्य्यश्च अगस्त्यश्च तत्तस्य, तिष्यश्च पुष्यश्च तत्तस्य, णाश्च मत्स्यश्च तत्तस्य, ईयश्च ईप् च तौ तयोः, भं नक्षत्रं, तत्र णाः तस्मिन्। सूर्य्यागस्त्यस्य ईयेपोः, तिष्यपुष्यस्य भण्ये, णामत्स्यस्य ईपि यलोप इत्यर्थः। सौरीति सूर्य्यो देवता अस्या इत्यर्थे णाः, ययोर्लोपः, षित्त्वादीपि अनेन यलोपः। एवमागस्ती(१)। चातुरी चतुरस्य भाव इत्यर्थे ब्राह्मणादित्वात् ष्णाः, सामान्यणाग्रहणात् अनेन यलोपः। एवं मैत्री औचितीत्यादि। त्रयीति–त्रयाणां पूरणीत्यर्थेऽयट्। भूषणीति–भूष्यतेऽनया षेऽनट्। विदुषीति–विदेः शतुः क्वसुः। श्रीमतीति-श्रीरस्ति अस्या इत्यर्थे मतुः। भवतीति–भाधोर्डवतुः। पच दिव तुद-भा एतेभ्यः शतृ। दण्डोऽस्या अस्तीत्यर्थे इन्। अर्व्वणस्तुङ् ईपि। राजन्शब्दस्य ईप्यलोपः। श्वन् शब्दस्य ईपि वस्य उः। मघोनस्तुङ् वा ईपि, पक्षे वस्य उः। क्रुधोस्तृन् कर्त्री। क्रोष्टोः स्त्रियां तृन् ईप् क्रोष्ट्री। प्रत्यच् शब्दात् ईपि अचोऽल्लोपः स्वस्य घेश्च। प्रत्यञ्ची पूजार्थे न न-

(१) अगस्त्यो देवता अधिष्ठाता अस्या इति णः, दक्षिणा दिक्।

ट—वयी भूषणी। उ—विदुषी श्रीमती भवती। (२४६) अप्‌यनोनित्यम्, ऋ—पचन्ती, दीव्यन्ती। (२४५) आदीपोः, तुदन्ती तुदती, भान्ती भाती। न—दण्डिनी अर्व्वती राज्ञी शुनी, मघवती मघोनी। ऋ—कर्त्री क्रोष्ट्री। अन्च—प्रतीची प्रत्यञ्ची, तिरश्ची तिर्य्यञ्ची, अमुमुईची अदमुईची उदीची। वाह—भारौही श्वेतौही श्वेतवाही शाल्यूही। नटी मत्सी गौरी।

---

लोपः। ईपि तिर्य्यच् अमुमुयच् अदमुयच् उदच्—एषां तिरश्चाद्यादेशाः। भारवाहशब्दादीपि वाहः वा औ। श्वेतवाहीति श्वेतात्तु वा इत्युक्तेः। शाल्यूहीति अनादूः। नटीत्यादि। मत्स्यस्य ईपि ण्यामत्स्यस्येति यलोपः। नटादिर्यथा—

नट-मह देहं तर-दर-चोरं,
देव गरी पुर-तट-नट चेलम्।
अनडुत्-कोल-महद्दृहद्दर्थं
गवय-मुकय-मत्स्य-मनुष्यम्।
देहल-गड्जं-मण्डप-मण्डं
निष्कल-विकलं पुष्कल-पिण्डम्।
गाह-पृथु-प्लव शठ-भष सूचं
कंकय-पृथिवं भौट पिशङ्गम्।
पाण्डर-गौरं पुन्नानन्दं
शस्कुल कुवल-द्रुण तर्क्कारम्।
कन्दर-कदरामलकं मूषः
वदरी धातक वल्लक-पूपम्।

नाट-मठाढ़क-मालत-सूपं
पिप्पल-वेतस-कन्दल-बिल्वम्।
आरट-मारट पट-शुष्कगण्डं
द्रोण-पुणौ कण-काकण-पावम्।
तृप-शम-काकल-कदल-कवाटं
कोपातक-पुटमंतस-वराटम्।
शल्लक-मण्डल-कूट-मूलाटं
सूर्द-हरीतक--गुर्द-सपाटम्।
सुषरोई-विभीतक माकन्दं
वयसि-किशोरस्तरुण-चिरण्टम् (१)।
वर्कर-तल्लून कुमार-वधूटं
नामनि केवल-(२) भेषज-पापम्।
शारङ्गावर-भोग-समानं (३)
रेचक देवक-भिक्षुकवर्गम्।

---

(१) चिरण्ट वधूट शब्दौ यौवनवाचिनौ इति सिद्धान्तकौमुदी। चिरण्टी ऊढ़ा अनूढ़ा वा पित्रादिगृहेऽपिता। चिरं पित्रादिगृहे अटति, पृषोदरादिरित्यमरटीका।

(२) संक्षिप्तसारेऽपि नाम्नीत्युक्तं (तद्धित पादे २४ सूत्रम्) तत्र केरल इति। केरली ज्योतिर्विशेषस्य नाम। काशिकायान्तु संज्ञाच्छन्दसोरित्युक्तम् (४।१।३०)। केवलेति पाणिनिः (४।१।३०) केवली ज्ञानभेद इति मेदिनी, ग्रन्थविशेष इति हेमचन्द्रः।

(३) शारङ्गशब्दः काशिकायां हन्तगादिर्दृश्यते ४।१।४०)। अवर इति संक्षिप्तसारे। काशिकायान्तु अपर इति दृश्यते ४।१।३०)। समानी छन्दोविशेषस्य नाम, इति गोयीचन्द्रः।

कौखौगौघौटौठौडौब्य-
स्तौथौप्रौद्दौवौचौपौष्ठः ।
शोटी च दीर्घजिह्वश्च भागधेय रजस्वली ।
मामकार्य्यकृतौ (१) शृङ्गः मातङ्गश्च सुमङ्गलः ।
अथ भौलिङ्गिवालम्बिभौरिक्यौन्दाहमालयः ।
अयःस्थूणीद्राहमालिभौलिकिः, श्रोणिरोगयोः —
कटाश्मरी, विपाद्यादिः पुच्छः प्रोक्तोऽग्रहायणः ।
सूर्म्मं मोधर्म्म मोधाम-मातामह पितामहाः ।
यूथाधिकार-लवणं कुण्डलाटव-माठनम ।
उपमानात् पक्षपुच्छाङ्गैत्र रोहिणरेवती ॥

ऋष्यादिपञ्चानां जातिवाचित्वेऽपि युङ्त्वात्, पिशङ्गादित्र-याणां वर्णवाचित्वेऽपि अन्तोदात्तत्वात्, शष्कुलाद्येकपञ्चाशतो जाति-वाचित्वेऽपि नित्यस्त्रीत्वादप्राप्ते पाठः। द्रोणशब्दोऽम्बुवाहिन्यां २ कूटशब्दः शालायां नित्यस्त्रीलिङ्गः। अवयस्यपि तरुणी तलुनी त्यन्यः। पुत्त्रशब्दोऽत्र दुहितृअर्थः, तथाच — सुता च दुहिता पुत्त्रीति त्रिकाण्डशेषः। स्वमते कौव्यादीनां पाठः। औन्दाहमालि भौ-लिङ्गि आलम्बि औद्राहमालि इत्येषां शार्ङ्गरवाधनार्थः पाठः (३)। भौरिकि भौलिक्यो: क्रौड्यादिपाठात् (४) भौरिक्या भौलिक्या

(१) मामकी देवताविशेषस्य नामेति गोयीचन्द्रः।

(२) अम्बुवाहिन्यां—काष्ठादिकृत जलाधार-नौकाकृति-जलसेचन्यामित्यमर-टीका। द्रोणी नद्यादन्यामिति गोयीचन्द्रः।

(३) [illegible] सूत्रस्य टीका द्रष्टव्या।

(४) [illegible] सूत्रस्य टीका द्रष्टव्या।

## २६२ । णच्यवसाद्वनो रङीप् वा तु हे ।

(णच्यवमात् ५।, वन: ५।, रङ् ।१।, ईप् ।१।, वा ।१।, तु ।१।, हे ७।) ।

---

इत्यपि । कटो योगि: । अश्मरी रोगभेद: । विषाद्यादिपुच्छो यथा—विषपुच्छी शरपुच्छी कबरपुच्छी मणिपुच्छी । अग्रे हायनमस्या: अग्रहायणी । अधिकारोऽस्त्यस्या:, अग्रे आदित्वाद: अत्र पाठादीप् अधिकारी । उपमानात् पक्षपुच्छी यथा—शुकपक्षी सिंहपुच्छी । रोहिणी रेवती च नक्षत्रम् । आकृतिगणोऽयम् ।

नृजातेरित: । इदन्तान्मनुष्यजातेरीप् स्यात् । कुन्ती अवन्ती दाक्षी औदमेयी । विशेषविधेर्युङो न निषेध: । इत: किम् ? दरत् (१) । नृजाते: किम् ? तित्तिरि: वेडालि: ।

ईपि ण्यास्य वा णायनो लोहितादेस्तु नित्यम् । ण्यास्य णायन: स्याद्वा ईपि लोहितादेस्तु नित्यम्, ण इत् । गार्ग्यायणी वात्स्यायनी, पक्षे गार्गी वात्स्येत्यादि । लौहित्यायनी कात्यायनी । लोहितादिर्गर्गादौ ज्ञातव्य: ।

आसुर माण्डूक कौरव्याणां ङायनो वा । एषां ङायनो वा स्यात् ईपि, ङ इत् । आसुरायणी माण्डूकायनी कौरव्यायणी अनएव कौरव्यादीप् । पक्षे आसुरी माण्डूकी कौरव्या । इदं नेच्छन्त्यन्ये । कथं कौरवी सेनेति ? इदमर्थे ण्यादीप् ।

२६२ । णच् । ण च अच् अव इति तत्तस्मात् । वनो नान्तत्वादीपि सिद्धे अत्र विधानम्, ईप्येव रङ्विधानार्थं, तेन बहुधीवे

(१) विट् इति काशिका वैश्येत्यर्थ: ।

णादचः स्वमाच्च विहितात् वन ईप् स्यात्, वनो रङ् च स्त्रियां हे तु वा। अवावरी धीवरी हरिदृश्वरी बहुधीवरी बहुधीवा।

२६३॰। स्वबोधः-संख्यादिदाम-वयोऽर्थहायनाद्धे।

(स।६।, नः।१।, च।१।, ऊधस्-सङ्ख्यादिदाम वयोऽर्थहायनात् ५।, हे ७। )।

---

बहुधीवानौ इत्यादौ न रङ्। (१) णाचस्वमाद्वनोरङोर्प्राप्ति कृते अवावरी धीवरी बहुधीवरी २ बहुधीवेत्यादि सिद्धावपि बहुगत्वरी बहुसृत्वरीत्यादि सिद्धार्थं वा तु हे इति कृतम, ईप्चाम्स्यादित्य-म्बस्यादित्युक्तेः। अवावरीति ओण् अपसारणे, अस्मादन्, विड्व-नोर्ङा, ओ अक्। धीवरीति धा-धीः क्वनिप्, दामागङ्गाकपिवेति ङी। हरिदृश्वरीति हरिं पश्यति स्मेति क्वनिप्।

२६३। स्वबोधः। स इति लुप्तषष्ठ्यकं, न इति प्रोक्तं, स्वः। वयोऽर्थं हायनः, अथवा वयोऽर्थो यस्य स चासौ हायनश्चेति सः। दाम च वयोऽर्थहायनश्च तौ, संख्या आदिर्ययोस्तौ, तौ च तौ तौ चेति संख्यादिदामवयोऽर्थहायनौ, ऊधश्च संख्यादि-दामवयोऽर्थहायनौ च तत्तस्मात्। ऊधसः संख्यादिदाम्नः संख्यादिवयोऽर्थहायनाच्च स्त्रियामीप् स्यात्, ऊधसः सस्य नश्च।

---

(१) ईपि रङ इत्यत्रौ बहुव्रीहि समासे ईपःवाम्बस्येत्यनेन ईपो वैकल्पिकत्वेन रङोऽपि वा भविष्यति, तत कथं वा तु हे इत्युक्तमित्याशङ्क्याह णाजति।

(२) बहुधीवरीति बहवो धीवानः कैवर्त्ताः यस्यामिति।

अथवा: सङ्ख्यापूर्व्वात् दाम्नो वयोऽर्थ-हायनाच्च ङीप् स्यात् ङे, मस्य च नः स्यात् । पीनोध्नी द्विदाम्नी द्विहायनी ।

२६४ । जातेरतोऽस्त्री-युङ्-सत्काण्डप्राक्प्रान्त-शतैकादिपुष्प सम्भस्त्राजिनैकशणपिण्डादिफल- नादि-मूलात् ।

( जातेः ५।, अतः ५।, अस्त्री—मूलात् ५। ) ।

---

पीनोध्नीत्यादि-पीनमूधो यस्याः सा, द्वे दामनी ( रज्जू ) यस्याः सा (१) द्वौ हायनौ वयो यस्याः सा इति वाक्यम् । ङे किम् ? अतिदामा (२) । संख्यादेः किम् ? सुदामा । वयोऽर्थे किम् ? त्रि-हायना शाला । (३)

२६४ । जाते । य उङ् यस्य सः, सच्च काण्डश्च प्राक् च प्रान्तश्च शतञ्च एकश्च तत्, तत् आदिर्यस्य तत्, तच्च तत् पुष्पञ्चेति तत्, सं च भस्त्रश्च अजिनञ्च एकञ्च शणश्च पिण्डश्च तत्, तत् आदिर्यस्य तत्, तच्च तत् फलञ्चेति तत्, न आदिर्यस्य तन्नादि, नादि च तत् मूलञ्चेति तत् । पश्चात् स्त्री च युङ् च सदाद्यादि-पुष्पञ्च समाद्यादिफलञ्च नादिमूलञ्च तत्, न तत् अस्त्रीयुङ्-

(१) यां गां द्वाभ्यां रज्जुभ्यां बध्नाति सेत्यर्थः ।

(२) दाम अतिक्रान्ता, या बद्धा सती रज्जुं छिनत्तीत्यर्थः ।

(३) कालकृता शरीरावस्था वयः । दुर्गादासस्तु प्राणिनो गतपरमायु र्वय इत्याह । वयांसि च चत्वारीत्येके, यदाहुः—आद्ये वयसि नाधीतं द्वितीये नार्ज्जितं धनं । तृतीये न तपस्तप्तं चतुर्थे किं करिष्यसीति ॥ त्रीणीत्यन्ये, यदाहुः पिता रक्षति कौमारे भर्त्ता रक्षति यौवने । पुत्रस्तु स्थाविरे भावे न स्त्री स्वातन्त्र्यमर्हतीति ।

जातिवाचिनोऽकारान्तात् स्त्रियामीप् स्यात् नतु स्त्री-युडादेः। मृगी हंसी शीतपाकी। स्त्री-युडादेस्तु मक्षिका वेश्या सत्पुष्पा संफला अमूला। जातेः किं —मन्दा।

आकृतिग्रहणा जाति र्लिङ्गानाञ्च न सर्व्वभाक्।
सकृदाख्यातनिर्ग्राह्या गोत्रञ्च चरणैः सह॥

गार्गी कठी कौथुमी।

- - -

सत्काण्डप्राक्प्रान्तशतैकादिपुष्पमभस्त्राजिनैकशणपिण्डादिफलना-दिमूलं तस्मात्। मृगीति—मुख्य एवायं विधिः, तेन बहुमृगा भूः, बहुहंसा पुष्करिण्यादौ न स्यात्। शीतपाकीति शीतेन पाको यस्याः सा इत्यत्र हेन जातिकत्त्वर्त्तऽतो जातेरगौणत्वम्। एवं सोदनपाकी शोवनी शङ्कुकर्णीत्यादि। मक्षिकेति—एवं पिपी-लिका बलाका इत्यादि। वेश्येति—एवं क्षत्रिया इत्यादि। सत्-पुष्पेति—एवं काण्डपुष्पा प्राक्पुष्पा प्रान्तपुष्पा शतपुष्पा एक-पुष्पा। एभ्यः किम्? शङ्खपुष्पी चोरपुष्पीत्यादि। सम्फलेति—एवं भस्त्रफला अजिनफला एकफला शणफला पिण्डफला। एभ्यः किम्? पूतिफली तालफलीत्यादि। अमूलेति—न सन्ति मूलानि यस्या इति वाक्यम्। नञः किम्? बहुमूली शतमूली। जातेः किम्? घनपुष्पा स्थूलफला, निर्मूला श्रुतिः, समूला स्मृतिः।

अथ जातिवाचकशब्दज्ञापनार्थं जातिलक्षणमाह, आकृ-तीति। आक्रियते व्यज्यतेऽनया इत्याकृतिः अवयवसंस्थानादिः।

गृह्यतेऽनेनेति ग्रहणं, असामान्यसिद्धत्वेन स्त्रीत्वाभावान्नेष्टम्। आकृतिः ग्रहणं यस्याः सा। यद्वा गृह्यते इति ग्रहणम्, आकृत्या ग्रहणं यस्याः सा आकृतिग्रहणा संस्थानव्यङ्ग्या इत्यर्थः। तथाच मृगसिंहव्याघ्रादिषु शृङ्गशटादिसंस्थानव्यङ्ग्या मृगत्वादिजातिः। एतेन गुणक्रिययोर्जातिर्निराकृतेति। ब्राह्मणत्वादिजातेर्न संस्थानव्यङ्ग्यत्वं, तत्संस्थानस्य जात्यन्तरसंस्थानसाम्यात्। अतो लक्षणान्तरमाह—लिङ्गानाञ्च न सर्व्वभागिति। या लिङ्गानां पुंस्त्रीक्लीवानां सर्व्वाणि रूपाणि न भजते सापि जातिः। तथाचात्रिलिङ्गशब्दवाच्यापि जातिरित्यर्थः। तेन ब्राह्मणक्षत्रियवैश्यशूद्रादीनां स्त्रीपुंसयोर्वर्त्तमानत्वादसर्व्वलिङ्गभाक्पदवाच्या ब्राह्मणत्वादिजातिः। तटत्वादेस्त्रिलिङ्गभाग्वाच्यत्वान्न जातित्वं, तटीत्यत्र नदादिपाठादीप्(१)।

ननु देवदत्तत्वादेरसर्व्वलिङ्गभाग्वाच्यत्वेन कथं न जातित्वमित्यत आह सकृदाख्यातनिर्ग्राह्येति। सकृदेकवारमाख्याता उपदिष्टा सती निर्ग्राह्या निश्चयेन ग्राह्या इत्यर्थः। तथाचासर्व्वलिङ्गभाक्षु ब्राह्मणादिषु उपदेशव्यङ्ग्या जातिरित्यर्थः। उपदेशो हि एकस्यां व्यक्तावेकदा कृतोऽनेकव्यक्तिषु तत्तत्प्रत्ययनिमित्तं

(१) अत्र 'तटत्वादिजातेस्त्रिलिङ्गभाक्पदवाच्यत्वेऽपि संस्थानव्यङ्ग्यत्वात् पूर्व्वलक्षणेन जातित्वं व्यवस्थापितम्। अथवा नदादिपाठादीपि'ति पाठान्तरम्। अत्र गङ्गाधरोऽपि "एवं तटादेरपि जातित्वं संस्थानव्यङ्ग्यत्वादि"त्याह। सिद्धान्तकौमुद्यामपि "जातेरस्त्रीविषयादयोपधात्" (४।१।६३) इति सूत्रस्य वृत्तौ आकृतिग्रहणा जातिः अनुगतसंस्थानव्यङ्ग्येत्यर्थं इत्युक्त्वा तटोत्युदाहृतम्। तर्कवागीशेन तु नदादौ तटशब्दः पठितः। कातन्त्रटीकायां संक्षिप्तसारेऽप्येवमिति।

भवन् सकलव्यक्तिव्यापक इहाभ्युपगम्यते। यथा एकस्मिन् ब्राह्मणे सकृदुपदिष्टेनैकेन धर्म्मेणायं ब्राह्मणोऽयं ब्राह्मण इत्यनेकव्यक्तिषु प्रतीतिः, न तथा देवदत्तादौ, तस्य संज्ञाशब्दत्वेनैकमात्रवृत्तित्वात्। एतत्तु सर्व्वस्या जातेरुपयुक्तं(१) तथाहि शुक्ले कृष्णे वा गवादि-पिण्डे सकृदुपदिष्टा गोत्वादिजातिः पिण्डान्तरेऽपि गौरयमित्यादिज्ञान-निर्ग्राह्या भवति, उपदेशस्य तथाभूतसाधनत्वात्। एतेन जातिरेका निरवयवा नित्यानेकव्यक्तिसमवायिनीति।

पारिभाषिकीं जातिमाह, गोत्रञ्च चरणैः सह इति। पुत्र-पौत्राद्यपत्यमिह पारिभाषिकं गोत्रम्। यथा गार्ग्यः वात्स्य इत्यादिः। गार्ग्यत्वादेर्न संस्थानव्यङ्ग्यत्व, तत्संस्थानस्य जात्यन्तर-संस्थानसाम्यात्, न वा सर्व्वलिङ्गभाग्वाच्यत्वम्, गार्ग्यः गार्गी गार्ग्यं कुलम् इत्यादिप्रयोगात्। अतः पृथगुक्तम्। अस्य पारि-

(१) एतत् सकृदाख्यातनिर्ग्राह्येति द्वयोरपि जातिलक्षणयोर्योजनीयमित्यर्थः। यः लक्षणद्वयेन लक्षितापि सकृदाख्यातनिर्ग्राह्या भवति सा जातिरिति निष्कर्षः। उक्तञ्च संक्षिप्तसारे तद्धितपादे ४८ सूत्रस्य टीकायां गोयीचन्द्रेण—पूर्व्वोक्तलक्षणद्वयेन व्यवस्थिताया एव जातेः स्वरूपमाह सकृदाख्यातनिर्ग्राह्येति एतेन जातेरेकत्वं नित्यत्वं प्रत्येकं परिसमाप्तिश्च स्वरूपं दर्शितवान्। तथाहि एकस्मिन् मयूरे सकृदाख्याता जातिर्देशान्तरवर्त्तिन्यपि स्वल्पेऽपि महत्यपि मयूरान्तरे निश्चयेन ग्राह्या भवति। तस्मादेका नित्या प्रत्येकं परिसमाप्ता च। सा यदि ह्येका न स्यात्, सकृदाख्याता पिण्डान्तरेऽपि न गृह्येत। यदि च नित्या न स्यात्, पिण्डविनाशे जातेर्विनाशात् पिण्डान्तरे जातिर्नोपलभ्येत। यदि प्रत्येकं परिसमाप्ता न स्यात् तदा यत्राख्याता तस्मिन्नपि पिण्डे सर्व्वात्मना न गृह्येत, किं पुनः पिण्डान्तरे। अंशेन हि परिसमाप्तौ सत्यां अंश एव गृह्येत, न जाति। न हि जात्यंशो जातिर्भवति अनेकत्वप्रसङ्गादिति।

## २६५। गुणाद्वोतोऽखरु-स्योङ:।

(गुणात् ५।, वा ।१।, उत: ५।, अ-खरु-स्योङ: ५।)।

भाषिकजातित्वात् गार्ग्यमानिनी वात्स्यायनमानिनीत्यादौ पुंवद्भाव:; न तु वैयाघ्रपदीभार्य्य इत्यादौ, जातिस्वाङ्गेप्लमानिनीत्युक्ते:। चरणं शाखा, वेदैकदेश: कठादिशब्द:, स तु क्रियावचन: (१) ; कठादिरूपचरणस्याध्ययनं क्रियासम्बन्धेन वर्त्तमानत्वात्। तथाच कठादिशब्दोऽध्ययनविशेषमाचक्षाणो यदा तदध्ययनसम्बन्धात् अध्येतृपुरुषेषु वर्त्तते, तदा क्रियैवास्य प्रवृत्तिनिमित्त, मेव पारिभाषिकी जाति:, अस्यापि पारिभाषिकजातित्वात् कठी चरकी कठमानिनी कठीभार्य्य इत्यादि: स्यात्।

लक्षणचतुष्टयाव्याप्यत्वात् मन्देति न जाति:। गार्गीति—गर्गस्यापत्यं स्त्री। गोत्रविहितयो: षुणगौर्यङादिशि युङ्त्वादीप्निषेधे सिद्धे पुनरजादौ यङन्तानां पाठात् नेह युङ्त्वादीप्निषेध: (२)। कठीति—कठो ब्राह्मण: वेदैकदेशस्तेन प्रोक्तम् अधीते य: सोऽपि कठस्तस्मात् स्त्रियामनेनेप् (३)। एवं कौयुमी।

२६५। गुणात्। स्य उङ् यस्य स:। खरु: स्वेतार्थ:।

---

(१) कठादिशब्दस्तदध्ययनवाचीत्यर्थ:। अतएव सिद्धान्तकौमुद्यां ४।१।६३। सूत्रस्य वृत्तौ "अपत्यप्रत्ययान्त: शाखाध्येतृवाची च शब्दो जातिकार्य्यं लभते इत्यर्थ" इत्युक्तम्।

(२) एतद्विवरणं २७७ सूत्रस्य टीकायां द्रष्टव्यम्।

(३) कठशाखाध्ययनविशिष्टा स्त्रीत्यर्थ:। यद्यपि स्त्रीणामध्ययनं प्रतिषिद्धं तथापि पुराकल्पे ह्येतदासीत्। तदाह यम:—पुराकल्पेषु नारीणां मौञ्जीबन्धनमिष्यते। अध्यापनञ्च वेदानां सावित्रीवचनं तथा॥ इति तत्त्वबोधिनी।

गुणवाचकादुकारान्तात् स्त्रियामीप् स्याद्वा, ननु खरोः स्योऽङ्ग। मृद्वी मृदुः। खरु स्योऽङ्गम् —खरुः पाण्डुः। गुणात् किं —

सत्त्वे निविशतेऽपैति पृथग्जातिषु दृश्यते।
आधेयश्चाक्रियाजश्च सोऽसत्त्वप्रकृतिर्गुणः॥

धेनुः।

खरुश्च स्योङ् च तत्, न तत् अखरुस्योङ् तस्मात्। गुणवाचकादिति—गुणं वक्ति गुणवाचकः, ण्वे णकः। वतुल्लोपादभेदोपचाराद्वा (१) तद्वति द्रव्ये वर्त्तमानादुकारान्तादित्यर्थः। मृद्वीति—मार्द्दवगुणविशिष्टा इत्यर्थः।

अथ गुणवाचिशब्दज्ञापनार्थं गुणलक्षणमाह, सत्त्व इत्यादि। सत्त्वं द्रव्यं, तत्र निविशते तदाश्रयति, अपैति ततः सत्त्वादपगच्छति। यथा श्यामो गुणः पूर्व्वमाम्रादिफलमाश्रयति, पश्चात् पक्वदशायां ततोऽपगच्छति। पृथग्जातिषु दृश्यते इति—पृथक् नाना जातयो येषां तेषु दृश्यते। यथा हंसादिषु यः शुक्लादि गुणो दृष्टः, स शङ्खादिषु दृश्यते। एतेन सर्व्वेण जातिर्न गुणः। न हि द्रव्यसमवायिनी (२) जातिः सत्त्वादपगच्छति, जन्मनः

(१) वतुल्लोपादित्यस्यायमाशयः सूत्रे गुणादित्यत्र गुणवन्तमाचष्टे इति वाक्ये ञौ वतुल्लोपे ञेर्लुक्त्वात् गुणि इति नामधातोः पचादित्वादनि गुण स्तस्मादित्यर्थः। अत्र 'गुणवचनेभ्यो मतुपो लुगिष्ट' इति पाणिनीयवार्त्तिकञ्च।

(२) समवायः सम्बन्धविशेषस्तद्वर्त्तीत्यर्थः। स च सम्बन्धः घटादीनां कपालादौ द्रव्येषु गुणकर्म्मणोः। तेषु जातेश्च सम्बन्धः समवायः प्रकीर्त्तित इत्युक्तलक्षणः।

प्रभृत्याविनाशादाधारस्यापरित्यागात्। नापि जातिः पृथग्जातिषु दृश्यते, ब्राह्मणत्वादेर्गवादिष्वसमवेतत्वात्(१)। इदन्तु स्वरूपकथनम्(२)। नापि सत्ता(३) गुणः, द्रव्यगुणकर्म्मसु वर्त्तमानत्वात्, न च सा द्रव्यादपैति। नन्वेवं कर्म्मापि गुणः, सत्त्वं यदा सक्रियम्भवति तदा सत्त्वे निविशते, यदा निष्क्रियं भवति तदा सत्त्वादपैति, पृथग्जातिष्वपि दृश्यते, यथा गमनादिक्रिया मनुष्येषु दृश्यते तथा गवादिष्वपि दृश्यते, अतो निराकर्त्तुमाह आधेय इत्यादि। आधेय उत्पाद्यः, क्रिया व्यापारस्तस्माज्जातः क्रियाजः, न क्रियाजोऽक्रियाजः नित्य इत्यर्थः। तथाचोत्पाद्यं घटादिरूपम् अनुत्पाद्यं परमाण्वादिरूपम्(४)। कर्म्मणस्तूत्पाद्यत्वमेव नानुत्पाद्यत्वं, तस्य जन्यत्वात्। एवं(५) घटादेर्महत्त्वादिकमुत्पाद्यम्, आकाशादेर्महत्त्वादिकमनुत्पाद्यमिति। एवं सति द्रव्यमपि गुणः; द्रव्यं(६) हि

(१) समवायसम्बन्धेन वर्त्तमानत्वाभावात्।

(२) गुणस्येति शेषः।

(३) द्रव्यगुणकर्म्मवृत्तिजातिविशेषः। तथाप्रोक्तं भाषापरिच्छेदे - सामान्यं द्विविधं प्रोक्तं परञ्चापरमेव च। द्रव्यादित्रिकवृत्तिस्तु सत्ता परतयोच्यते इति। सामान्यं जातिः।

(४) परमाणुः पृथिव्यादिभूतचतुष्टयानां द्व्यणुकानामवयवः। स च नित्यः निरवयवः। ततः सूक्ष्ममपि नास्ति। तथाचोक्तं--नित्यानित्या च सा द्वेधा नित्या स्यादणुलक्षणा। अनित्या तु तदन्या स्यात् सैवावयवयोगिनीति। परमाणुद्वयात्मकं द्व्यणुकं, त्रसरेणुस्त्रिंशत परमाणु-परिमाणम्। तथाच वैद्यक परिभाषा जालान्तरगते सूर्यकरे ध्वंसी विलोक्यते। त्रसरेणुस्तु विज्ञेयास्त्रिंशता परमाणुभिरिति।

(५) घटादे रूपवदित्यर्थः।

(६) घटपटादिकम्। तथाच—क्षित्यप्तेजोमरुद्व्योम-काल-दिग्देहिनो-मन इति नव द्रव्याणि।

## २६६। पात्स्त्रीणादि-स्वाङ्गतोऽक्तेर्वा।

(पाद्—स्वाङ्गत: ५।, अक्ते: ५।, वा।१।)।

द्रव्यारम्भकेऽवयवभूते (१) निविशते, तदवयवसंयोगविनाशादपैति, पृथग्जातिषु दृश्यते, अवयविद्रव्यस्योत्पाद्यत्वं निरवयवद्रव्यस्यानुत्पाद्यत्वम्। अत आह असत्त्वप्रकृतिरिति। सत्त्वं द्रव्यं प्रकृतिः स्वभावो यस्य सः सत्त्वप्रकृतिः, न सत्त्वप्रकृतिरसत्त्वप्रकृतिः, द्रव्यभिन्न इत्यर्थः। एवं सत्यपि व्यवच्छेदफलकत्वात् (२) सत्त्वे एवेत्यवधारणं द्रष्टव्यम्, अन्यथा अभावेऽतिव्याप्तिः स्यात्। घटाभावस्य घटे निवेशात्, घटसन्निधाने कृते तदपगमात्, पृथग्जातिषु दर्शनात्, ध्वंसस्य उत्पाद्यत्वादत्यन्ताभावस्यानुत्पाद्यत्वात् (३)। तथाच द्रव्यभिन्नस्य यस्य क्वचिदधिकरणे द्रव्ये द्रव्यमात्रेऽभिनिवेशः, ततोऽपगम इति द्वयं, निवेशमात्रं क्वचिदधिकरणे (४) पृथग्जातिषु दर्शनं, क्वचिदुत्पादनीयत्वं, क्वचिन्नित्यत्वं, स गुण इत्यर्थः। यथोक्तधर्म्मानाक्रान्तत्वात् धनुरित्यत्र नेप्।

२६६। पात्स्त्री। पादित्यनेन संख्यासूपमानादित्यादिना

(१) द्रव्यसमवायिकारणे कपालादौ।

(२) व्यवच्छेद इतरव्यावृत्तिः। तथाच द्रव्यभिन्नत्वे सति द्रव्येतरावृत्ति-त्वादित्यर्थः।

(३) अतिव्याप्तिर्लक्षणदोषविशेषः। स च अलक्ष्ये लक्षणगमनरूपः। इह हि अभावे न गुणलक्षणलक्ष्य, तत्र लक्षणगमने अतिदोषः स्यादित्यर्थः। गुण-लक्षणे द्रव्यभिन्नत्वे सति द्रव्यमात्रवृत्तिरित्युक्तौ अभावे लक्षणानुसरणदोषं दर्शयति घटेति। प्रतियोगित्वसम्बन्धेन घटाभावो घटेऽस्ति।

(४) नित्यद्रव्ये आकाशादौ।

पाद: शोणादे: स्वाङ्गात् इकारान्ताच्च स्त्रियामीप् स्याद्वा, नतु क्तेः। त्रिपदी त्रिपात्, शोणी शोणा चण्डी चण्डा, विम्बोष्ठी विम्बोष्ठा। स्वाङ्गात् किं—

स्वाङ्गं स्यादद्रवं मूर्त्तं प्राणिस्थमविकारजम्।
दृष्टं तत्रातत्स्थमपि तद्वत्ताद्दृशि च स्थितम्॥

दिष्टस्य ग्रहणम्। शोण आदिर्यस्य स:, पाच्च शोणादिश्च स्वाङ्गञ्च इच्च तत्तस्मात्। न क्तिरक्तिस्तस्या:, अर्थवशादितो विशेषणम्(१)। त्रिपदी—त्रय: पादा यस्या: सा इति वाक्यम्, एवं द्विपदी द्विपात् चतुष्पदी चतुष्पादित्यादि। शोणीति अनुदात्तान्तवर्णादित्यनेन(२) नित्ये प्राप्तेऽनेन विकल्प:। चण्डीति अप्राप्तौ विकल्प:।

शोणादिर्यथा—

शोण-साधारणाराल-विशाल-हय-शङ्कटा: (३)।
कृपाण-कृपणोदारा: कमलो विकटोऽञ्चति:।
अङ्कत्यंहति-कल्याण-यष्टि-वस्ति-विशङ्कटा:।
सहाय-भरुजौ चण्ड: पुराणोऽङ्गादिपश्चिमा:।
नदीभेदे चन्द्रभागा वर्षाभूस्तु प्लवस्त्रियाम्।
अङ्गान्त-दन्त-कण्ठञ्च शृङ्ग-कर्णोष्ठमित्यपि।
पुच्छ-नेत्रं तथा गात्र-जङ्घमङ्गादिरीरित:॥

(१) अर्थपर्य्यालोचनया पादादिभि: सह सम्बन्धासङ्गतेरित्यर्थ:।

(२) मारी सखीति सूत्रस्य टीकायां वार्त्तिकं द्रष्टव्यम।

(३) सर्व्वेषु पुस्तकेषु तालव्यादिरयम्। किन्तु काशिका-कातन्त्र-सिद्धान्तकौमुदी-संक्षिप्तसारेषु शोणादौ, अमरकोषे शब्दकल्पद्रुमे च तालव्यादि-शङ्कट-शब्दोन दृश्यते। दन्त्यादिस्तु देवी-विशेष-वाचकस्तस्य सङ्कटेति रूपमिति केचित्।

बहुखेदा द्रवत्वात् । सुज्ञाना अमूर्त्तत्वात् । सुमुखा शाला अप्राणिस्थितत्वात् । सुशोफा विकारजत्वात् ।

सुकेशी सुकेशा रथ्या, अप्राणिस्थस्यापि प्राणिनि दृष्टत्वात् ।

हयशब्दस्य जातिवाचित्वेऽपि युङ्त्वात्, अस्वति अङ्गति अं इति एषां त्याद्यन्तप्रतिरूपकत्वात्, यष्टिवस्त्वोः क्त्यन्तत्वात्, अङ्गाद्यन्तानां स्वाङ्गवाचित्वेऽपि स्योङः स्वाङ्गस्याजादौ पाठात्, शेषाणां सर्व्वथैवाप्राप्तेः पाठः । परेतु गौरादौ हयमाहुस्तत्र, हयया शतयोजनगामिन्येति हरिवंशे दर्शनात् । अङ्गादिपर्य्यिमाः यथा— मृदङ्गी मृदङ्गा स्थूलान्त्री स्थूलान्त्रा । छगलान्त्री ओषधिरिति नित्यं, नदादेराकृतिगणत्वात् । चारुदन्ती किन्नरकण्ठी तीक्ष्णशृङ्गी चारुकर्णी बिम्बोष्ठी कल्याणपुच्छी सुनेत्री(१) सुगात्री दीर्घजङ्घीति । पक्षे चारुदन्तेत्यादि । चन्द्रभागी चन्द्रभागा नदी । एकदेश-विकृतमनन्यवद्भवतीति न्यायात् चान्द्रभागी चान्द्रभागा च ।

तथाच—

चन्द्रभागा चान्द्रभागी चान्द्रभागा च चन्द्रिका ।
चन्द्रभागी च सर्वोक्ता नदीयंश्चा प्रकीर्त्तिता ॥

इति हट्टचन्द्रः । वर्षाभ्वी वर्षाभूः भेकी । स्वाङ्गादुदाहरति,

(१) अङ्गादिगणे तर्कवागीशेन पठितो नेत्रशब्दः काशिका-संक्षिप्तसार-सिद्धान्तकौमुदी कातन्त्रटीकासु न दृश्यते । प्रत्युत हृष्टमुग्धबोधे सुनेत्रा इत्येव न तु सुनेत्रीत्युक्तं न्यायपञ्चाननपादैः । प्रयोगरत्नमालायान्तु कवादिप्रकरणे "दन्तोष्ठ-कण्ठ-गात्राङ्ग-हृत्कर्णोदरादिकात्" इति ५।१५ सूत्रस्य वृत्तौ "आदिना जङ्घा नासा नेत्राणां ग्रहण" मित्युक्तम् ।

सुस्तनी सुस्तना प्रतिमा, प्राणिवत् प्राणिसदृशे स्थितत्वात्।

राज्ञी राजिः। क्लेम-बुद्धिः मतिः।

---

सुमुखीति—शोभनं मुखं यस्याः सा इति वाक्यम्। स्वाङ्गाङ्गीत्य एवास्य विषयः। एवं दीर्घनखी दीर्घनखा तुङ्गनासिकी तुङ्ग-नासिका इत्यादि।

अथ स्वाङ्गलक्षणमाह स्वाङ्गमित्यादि। द्रवो घर्मादिस्त-द्भिन्नं, मूर्त्तं काठिन्यादिस्पर्शविशेषवत्, प्राणिनि तिष्ठतीति प्राणि-स्थम्, विकारो दोषस्तस्माज्जातं विकारजं, न विकारजमविकार-जं यत् तत् स्वाङ्गं स्यात्। दृष्टमित्यादि—अतत्स्थं अप्राणिस्थमपि तत्र प्राणिनि दृष्टं चेत्तदा स्वाङ्गम्। तादृशि प्राणिसदृशे प्रतिमादौ स्थितं स्तनादिकञ्च तद्वत् प्राणिस्थवत् स्वाङ्गमित्यर्थः। अद्रवादि-पदानां व्यावृत्तिमाह बहुस्वेदेत्यादि। राज्ञी राजिरिति राज-धोरिस्त्यः। एवं—

श्रोणी मसी सूची शारी वीची वेणी मणी कटी।
श्रेणी च रजनी पक्षे श्रोणिरित्यादयः क्रमात्॥

अक्तेरित्यनेन क्त्यर्थस्योपलक्षणत्वात् अकरणिः अजीवनिः काङ्गारिमकार्षीः सर्व्वां कारिमकार्षमित्यादौ न स्यात्। क्त्यन्ता-दपि कश्चित्। मा गान्म्लानीं मृणालीति तु म्लानशब्दात् भावे ष्णे कृते षित्त्वादीप्। परे तु र्गयहणादीकारान्तादपि, तेन श्री लक्ष्मीत्यादि, तथाच—तां श्रीमिव समायान्तीमित्यादिप्रयोग इत्याहुः। निषेधो यज्जातीयस्य विधिरपि तज्जातीयस्येति न्यायात् क्तिदिकारादेव, तेन सुगन्धिः युवजानिरित्यादौ न स्यात्।

संख्यापूर्व्वसंख्यापि सुपद्मालादौ, यथा—द्वे षष्टी व्याप्याधीष्टो भृतो भूतो भावी वा द्विषाष्टिकः, द्विसाप्ततिकः। द्विषष्ठ्यादिशब्दाः संख्यासु वर्त्तमानाः कालाधिकारीय-त्यमुत्पादयन्ति (१)। संख्यादि शानवर्ज्जितं परिमाणमसंज्ञायां सुपद्मालादौ पठ्यते। यथा—द्वौ कुड़वौ मानमस्य द्विकौड़विकः, द्वाभ्यां सुवर्णाभ्यां क्रीतं द्विसौवर्णिकम्। अनामनि इति किं? पाञ्चलोहितिकः पाञ्चकपालिकः। अशान इति किं? द्वाभ्यां शानाभ्यां क्रीतं द्वैशानम्। अत्र केचित् वा कुलिजस्य ग्रहणं, तेन द्विकौलिजिकं द्वैकुलिजिकमित्याहुः। अभविष्यति संख्यादि वर्षं सुपद्मालादौ पठ्यते। द्वे वर्षे व्याप्याधीष्टो भृतो भूतो वा द्विवार्षिकः त्रिवार्षिकः। भविष्यति तु त्रीणि वर्षाणि व्याप्य भावी, त्रैवर्षिकः। तथाच—

> यस्य त्रैवर्षिकं (२) धान्यं निहितं भृत्यवृत्तये।
>
> अधिकं वापि विद्येत स सोमं पातुमर्हति॥ इति महावृत्तिः।

---

(१) कालाधिकारे यः प्रत्ययो विहित एभ्यः स एव स्यात्। अतएव ठञेकादित्यस्य टीकायां "कालेभ्य" इति वक्ष्यमाणवार्त्तिकेन ठिणकः।

(२) वर्षस्याभविष्यति ७।३।१६। इति पाणिनिः। संख्याया उत्तरस्य वर्षशब्दस्याचामादेरचो वृद्धिर्भवति। द्विवर्षं अधीष्टो भृतो भूतो वा द्विवार्षिकः। त्रिवार्षिकः। अभविष्यतीति किम्? यस्य त्रैवर्षिकं धान्यं निहितं भृत्यवृत्तये। अधिकं वापि विद्येत स सोमं पातुमर्हति। त्रीणि वर्षाणि भावीति त्रैवर्षिकमिति काशिका।

सिद्धान्तकौमुद्यां तद्धितेषु कालाधिकारे पूर्व्वोक्तसूत्रस्यैषा वृत्तिः "उत्तरपदस्य वृद्धिः स्या"दिति। द्विवार्षिकः। भविष्यति तु द्वैवर्षिक इत्युदाहृतम्।

वर्षस्याभविष्यति इति संक्षिप्तसारे सन्धिपादे ४२ सूत्रम्। द्वे वर्षे अधीतो पन्थः द्विवार्षिकः। भविष्यति तु द्वे वर्षे भावि द्वैवर्षिकम् इति वृत्तिः। अत्र गोयीचन्द्रः—संख्यावाचकात् परस्य वर्षशब्दस्य तद्धिते णिति परे उत्तरपदस्यादौ

जे इति जातार्थो निर्द्दिश्यते, तत्र यो विहितस्तस्मिन् प्रोष्ठपदाशब्दः सुपद्मालादौ पठ्यते। यथा—प्रोष्ठपदा नाम नक्षत्रं, ताभिर्युक्तः काल इत्यर्थे ष्णः, तस्याविशेषे लुप् (१) प्रोष्ठपदा, तत्र जात इत्यर्थे ऋतुनक्षत्रात् ष्णः, प्रोष्ठपादः। ज इति किं? प्रोष्ठपदासु भवः कुशलो वा इत्यर्थे ष्णे प्रोष्ठपदः। प्रोष्ठपदा इति निर्द्देशात् तत्पर्य्याय-भाद्रपदाशब्दस्यापि ग्रहणं, तेन भाद्रपादः, अजे तु भाद्रपद इति। अथ प्रवाहणः ष्णेय इत्यादिप्रयोगाः प्रदर्शिताः। केऽपीत्यादि आहुरिति शेषः, तेन अयाथातथ्यं अयाथापुर्य्यं, परमते तु आयथातथ्यम् आयथापुर्य्यमित्यपि।

---

वृद्धिर्भवति. अभविष्यदर्थे चेत्तद्धितो विहितः। द्विवार्षिक इति तु पूर्व्ववत् टिकण्

* यस्य त्रैवर्षिकं धान्यं स सोमं पातुमर्हतीति भाव्यर्थेऽत्र तद्धितः।

मुद्रितस्य कस्यचित् सुपद्मव्याकरणपुस्तकस्य वृद्धिप्रकरणे "दिवः परस्यामद्राणा"मिति १० सूत्रस्य वृत्तौ द्वैवार्षिकं भक्तं, त्रैवार्षिकं धान्यमिति, तथाविधस्य कस्यचित् कलाप-व्याकरण-पुस्तकस्य च चतुष्टयवृत्तौ "वृद्धिरादौ सणे" इति ४३२ सूत्रस्य टीकायां भाविन्यर्थे तु द्वे वर्षे भावि द्वैवार्षिकमिति लिपिकरप्रमादः, अन्यथा अभविष्यदर्थे संख्यादिवर्षशब्दस्योत्तरपदवृद्धिं नियम्य भविष्यदर्थकप्रत्युदाहरणे पुनस्तस्यैवोत्तरपदस्य वृद्धेः सर्व्वथैवासङ्गतेः, काशिका-सिद्धान्तकौमुदी संक्षिप्तसार-मुग्धबोधटीकाकार-कृष्णनाथन्यायपञ्चानन-कृतवृहन्मुग्धबोधमतविरुद्धत्वाच्च।

यस्य त्रैवर्षिकं धान्यमिति श्लोकस्तु ब्रह्मवैवर्त्तपुराणे षष्टितमाध्याये श्रीकृष्णजन्मखण्डे नारदं प्रति नारायणवाक्ये यस्य त्रैवार्षिकं धान्यं निहितं भूतिसिद्धये इति कृत्वा पठितः, विद्यासागरेण च उत्तरचरितस्य प्रथमाङ्के सोमपीतीत्यस्य व्याख्यायां तथैवोद्धृतः पाठः। एवं मनुसंहिताया एकादशाध्याये ७म श्लोके "यस्य त्रैवार्षिकं भक्तं पर्य्याप्तं भृत्यवृत्तये" इति पाठो दृश्यते। अतोऽत्र यदुरहस्यं तत् सुधीभिश्चिन्त्यमिति।

(१) ढचे कादित्यस्य टीकायां "अविशेषे लुबि"ति वार्त्तिकसूत्रं द्रष्टव्यम्।

४२३। क्षुद्रागोधाभ्यो वैरारौ।

( क्षुद्रा-गोधाभ्यः ५।॥, वा ।१।, एरारौ १॥ )।

नाटेरः नाटेयः, गौधारः गौधेरः गौधेयः।

गार्ग्यः वात्स्यः जामदग्न्यः पाराशर्य्यः।

---

४२३। क्षुद्रा। क्षुद्राश्च गोधाश्च तास्ताभ्यः। अनिर्द्देशो-गणार्थः। एयस्य एरविधानसामर्थ्यात् वै वा णेयस्य स्थितिः। क्षुद्रादिभ्य एयस्य एरो वा स्यात्। क्षुद्रादयस्त्वङ्गहीनाः शील-हीनाः सह गोधया। गोधादिभ्य एयस्य आरो नित्यं स्यात्, वा शब्दस्य व्यवस्थया।

गोधादयस्तु---गोधा जड़ो मृगी चैव पण्डः काकी च मूषिका।

नाटेर इति—नद्या अपत्यम् इति वाक्यं, पक्षे नाटेयः। एवं यदा कुलटाशब्दोऽसतीवाचकस्तदा कौलटेरः कौलटेयः, शीलहीनत्वात्। अङ्गहीनायास्तु काणाया अपत्यं काणेरः काणेयः। एवं कौञ्जेरः कौञ्जेय इत्यादि। गौधार इति—गोधाया अपत्यम् इति वाक्यं, क्षुद्रादिपाठात् गौधेरः, अत्रादौ पृथक् पाठात् गौधेय इति। जड़स्यापत्यं जाड़ारः, मृग्या अपत्यं मार्गारः, पण्डस्यापत्यं पाण्डारः, काक्या अपत्यं काकारः, मूषिकाया अपत्यं मौषिकारः, बाह्वादित्वात् मौषिकिः।

चटकाभ्यामैरो, लुक् तु स्त्रियाम्। चटकाच्च चटकायाश्च परस्य णेयस्य ऐरः स्यात्। स्त्र्यपत्ये ऐरस्य लुक्। अतएव

चटकात् ष्णेयः (१)। चटकस्य चटकाया वा अपत्यं चाटकैरः। स्त्रियान्तु चटकस्य चटकाया वा अपत्यं स्त्री चटका।

गार्ग्य इत्यादि—ननु गर्गादि-नड़ादिभ्यां गोत्र एव ष्णाय-ष्णायनौ, तत् कथमपत्यसामान्ये विहित (२) इति चेत् सत्यं, जामदग्न्यः पाराशर्य्य इत्युभाभ्याम् अनन्तरे ष्णास्य, द्रौणायन इत्यत्र ष्णायनस्य च दर्शनात् सामान्येनोक्तम्, अन्यत्रान्तर एवेति भावः (३)। गर्गस्य गोत्रापत्यं गार्ग्यः, अनन्तरे तु अतः ष्णिः गार्गिरित्यादि।

गर्गादिर्यथा—

> गर्गो वत्साकृती (४) रेभो व्याघ्रपादवटः (५) शठः।
> अजो विलस्त्यग्निवेशौ (६) जरमाणो धनञ्जयः॥
> हृचो विश्वावसुः शङ्को वर्म्म-धूम-पुलस्तयः (७)।
> संस्कृतिर्वेदभृद्दीनयोगोवाजस्वसे (८) मधुः॥
> विप्रेऽथ लोहितो मण्डुर्जिगीषुर्गुहलुर्लतुः।
> कपि-बोध-वतण्डास्त्वाङ्गिरसेऽप्यथ कौशिके॥

---

(१) स्त्रते चटका च चटकश्च ताभ्यामित्येकशेषः। अत्राद्दिगणे चटकशब्दस्या-नुक्तत्वेऽपि इह सूत्रकरणादेव तस्मात् ष्णेय इत्यर्थः।

(२) ष्णाय इति शेषः।

(३) अनन्तरे अव्यवहिते पौत्राद्दौ गोत्रे वाच्ये इत्यर्थः।

(४) वत्स, आकृति।

(५) व्याघ्रपाद्, अवट।

(६) विलस्ति, अग्निवेश।

(७) वर्म्मन्, पुलस्ति।

(८) संस्कृति, वेदभृत् दीनयोग, अस्मात् वाजयत्कः।

बभ्रु-शंसित-सुम्विन्द्र(१)-मनायी-मनु-कच्छपाः।
मन्तुः शङ्कुः कतस्तण्डस्तक्षो (२) वच-मङ्कु च।
तनुः कुरुकतश्चैव तलुक्ष-शकलेन्द्रहः (३)॥
कण्वोऽगस्ति-विरोहितौ वृषरङ्गमूर्व्वौ गणः (४) पिप्पलू:
कृष्णो भण्डिल-शण्डिलौ च चिकितौ दल्भस्तितिक्षो(५) भिषक्।
गोकक्षाररकावुलूक-मुषलौ स्थूरा सुलाभ्येकलू (६)
जीतो मन्वित भिक्षुजाऽश्मरथ गोलुन्दं तथा कुण्डिनौ॥
अनडुद्यज्ञवल्कौ च पर्णवल्कः पराशरः।
जतूकर्णः शर्कराक्षः पूतिमाषश्च पिङ्गलः।
मुद्गलो वृहदग्निश्च कुटीभृज्जमदग्नि च।
लोहितादिश्च कण्वादिर्गर्गादौ परिकीर्त्तितः॥

गर्गस्याऽनन्तरापत्यमिति वाक्यं, ण्योऽत्र ययोर्लोप इति अकारलोपे त्रिः। स्त्रियां षित्त्वादीपि गार्गी, ष्णायनपक्षे गार्ग्यायणी। एवं सर्व्वत्रोहनीयम्। इह पुलस्तिशब्दपाठात् ण्ये पुलस्त्यः। पुलस्त्य-शब्दस्य तु ण्ये पौलस्त्या इति। यद्यपि वेदभृच्छब्दाट्टेषिणो कृते पश्चात् स्वार्थे ण्यो वैदभृत्य इति सिध्यति, तथापि ण्ये लुकि वेदभृत इति सिद्धार्थः पाठः, तत्र तु वैदभृत्या इति। वाजशब्दोऽपि गर्गादिः, तेन वाजस्यापत्यं वाज्यः; ये तु

---

(१) सुम्नु, इन्द्र।
(२) कत, तण्ड, तक्ष।
(३) शकल, इन्द्रह।
(४) वृषगण, रङ्गगण।
(५) दलभ, तितिक्ष।
(६) गोकक्ष, अररक, उलक, मुषल, स्थूरा, सुलाभिन्, एकलू।

४२४। ओदौतोऽञ्वत् तक्वद्रय-क्यङ्याः।

( ओत्-औतः ५।, अञ्वत् ।१।, तक्वद्रय-क्य-ङ्याः-१।।। )।

ओदौद्भ्यां परस्तसंज्ञः क्वत्संज्ञकश्च यः क्यङ्यौ च अञ्वत् स्यात्।

बाभ्रव्यः। 'नाड़ायनः गार्ग्यायणः दाचायणी। पैतृष्वस्रीयः मातृष्वस्रीयः। रैवतिकः आश्वपालिकः। यादवः आङ्गिरसः।

---

सौवाजिः। एतेनान्येषां मेऽपि सौगार्ग्य इत्यादि। माधव्यो विप्रः, अन्यत्र माधवः।

शकलान्ताल्लोहितादेः (१) ष्णास्य स्त्रियां ष्णायन्नित्यम्। तेन लौहित्यायनीत्यादि। कपेरन्तरापत्यं काप्यः, स्त्रियां काप्यायनी। एवं बौध्यः बौध्यायनी, वातण्ड्यः वातण्ड्यायनी। अनाङ्गिरसे तु कापेयः बौधिः, वातण्डः शिवादित्वात् ष्णः। अनाङ्गिरसेऽपि गर्गादित्वात् ष्णः, वातण्ड्यः, स्त्रियां वातण्ड्यायनी वातण्डीति कश्चित्।

४२४। ओदौ। ओच औच तत्तस्मात्, अञिव अञ्वत्, तश्च क्वश्च तौ तक्वतौ, त-क्वतोर्यः तक्वद्रयः, तक्वद्रयश्च क्यश्च ङ्यश्च ते। बाभ्रव्य इति—बभ्रोरपत्यं ष्णः, न्वोर्लोपोताविति उवर्णस्यौकारः, यस्याञ्वद्भावात् यलायवायाव इत्यवादेशः। कौशिक एवाभिधानम्, अन्यत्र बाभ्रवः। तनुस्थाने तन्तुरिति पठत्यपरः। कतो मुनिविशेषः, तस्यान्तरापत्यं कात्यः, स्त्रियां कात्यायनी।

---

(१) गर्गादौ लोहितशब्दादारभ्य शकलशब्दपर्यन्तेभ्यः शब्देभ्य इत्यर्थः।

कण्वादेः प्रयोजनमग्रे वक्ष्यते। गर्गादेराकृतिगणत्वात् वामरथ-शब्दः कण्वादौ ज्ञातव्यः। वामरथस्यापत्यं वामरथ्यः, द्वे तु वामरथ्यौ, बहुषु वामरथाः, स्त्रियां वामरथ्यायनी वामरथी, वामरथ्यस्यापत्यं युवा वामरथ्यायनः, वामरथ्यस्य छात्रा वामरथाः। सङ्घाङ्कघोषलक्षणानि वामरथानि, (१) वामरथशब्दादणोऽप्युपचारात् (२)।

कुर्वादेरषिन्नोराजश्वशुरात्त्वनित्मनोस्तु संश। कुर्वादेर्गोत्रेऽगोत्रे च ण्योऽषित् स्यात्, ण्य इत्यर्थः, गोराजश्वशुरेभ्यस्तु अनित् इत्शून्यो, य इत्यर्थः, मनोस्तु ययोगे संश, न इत्। कुरोरपत्यं कौरव्यः कौरव्यौ कौरव्या इत्यादि, स्त्रियां कौरव्यायणी कौरव्या। केचित् कौरव्यायणीति नित्यमाहुः। एवं लाक्षण्यः लाक्षण्यौ लाक्षण्याः। स्त्रियां लाक्षण्या इत्यादि।

कुर्वादिर्यथा—

कुरु कवि गर्गर-गणिका-कूटं, शकल शलाका सत्यंकारम्।
शाकः शुभ्रो मति-मञ्जूषं, तक्षा लक्षण-वड़भीकारम्।
एरका-मुर-केशोरि रथकारश्च पट्टिका।
पिण्डीमूलेन्द्रजाली वाक् शकम्भूरविमारकः (३)।

---

(१) वामरथस्यापत्यं वामरथ्यस्तस्येमानि (संघाङ्कघोषलक्षणानि) इति वामरथानि। अत्र वामरथ्यशब्दात् संघादिषु वाच्येषु "ष्णि ष्णत्र-ट्रात् संघाङ्कघोषलक्षणे" इति वक्ष्यमाणवार्त्तिकेन इदमर्थे ष्णः, तस्मिन् अपत्यष्णत्रस्य लोपे वामरथानीति। वार्त्तिकन्तु विकारसंघेति सूत्रस्य टीकाशेषे द्रष्टव्यम्।

(२) ननु वामरथशब्दस्य गर्गादित्वात् कथमपत्यसामान्ये ष्णत्र इत्यत आह वामरथशब्दादिति। उपचारात्—गोत्रत्वारोपादित्यर्थः।

(३) पिण्डीमूल, इन्द्रजालि, वाच्, शकम्भू. अविमारक।

एकजित् श्यावनायश्च पितृमत्-पथिकारिणी ।
हन्ता भर्त्ता शूर्पणायो दामोष्णीषिरिनस्तथा (१) ।
भर्वः श्यावरथः श्यावपुत्रः सेनान्तदा मताः ।
कारवः, क्षत्रिये सम्राट्, केशिन्याः केशिनो भवेत् ।
ण्ये भ्रातुर्वम् च तस्यैव (२) वेणः केनचिदीरितः ।
यमादित्यादितिश्चैवाऽपश्वाद्यादिपतिर्दितिः (३) ।

पश्वादिर्यथा—

पश्वश्व-कुल-राष्ट्राश्व-गण-वास्तु-धनं वसु ।
विद्या-शत-नर-क्षेत्रं प्राण-धान्य-सभा-जगत् ॥

रथकारशब्दोऽत्र जातिवचनः, शिल्पिवचनस्तु कारुत्वेनैव प्राप्तः । शके भवतीति शकन्धूरिह पाठबलान्नकारागमः । हारिषेण्यः वैष्वक्सेन्यः, बाह्वादित्वात् हारिषेणिः वैष्वक्सेनिः । एवं तान्ववाय्यः तान्ववायिरित्यादि । सम्राजोऽपत्यं साम्राज्यः, क्षत्रियः । अन्यत्र बाह्वादेराकृतिगणत्वात् साम्राजिः । केशिन्या अपत्यं केशिन्यः, ण्ये केशिनादेशः, अन्यथा पुंवद्भावे (४) केश्यः स्यात् । भ्रातुरपत्यं भ्रातृव्यः (५) ण्यस्य वम्, पितृष्वस्रादित्वात् भ्रात्रीयः । कस्य-

---

(१) दामोष्णीषि, इन ।

(२) भ्रातृशब्दात् ण्ये सति तस्य णस्यैव वम् भवति, न इत् ।

(३) यम, आदित्य, अदिति, पश्वादिगण-भिन्नशब्दपूर्व्वक-पतिशब्द, दिति ।

(४) पुंवद्भाववार्त्तिकसूत्रं ३२८ सूत्रस्य टीकायां द्रष्टव्यम् ।

(५) भ्रातृव्यौ भ्रातृज-द्विषौ इत्यमरः । भ्रातुः शत्रुरपत्यञ्च भ्रातृव्यौ । अत्र द्विट्पक्षे रूढ़िकल्पनं, तेन सामान्यद्विडेव न तु भ्रातृद्विट् । भ्रातृपुत्रः शत्रुपुत्रश्च भ्रातृव्याविति महेश्वरः । तस्मात् भ्रातृशब्देन भ्राता शत्रुश्चेति मन्तव्यम्—इति प्रयोगरत्नमालाटीका ।

चिन्मते वेणशब्दस्य कुर्व्वादित्वात् वैण्यः, तथा च — वैण्यं पृथुं हैहय-मर्ज्जुनञ्च इति । वेणाच्छन्दसीति पाणिनिसूत्राच्छान्दसमिदम् । यमस्यापत्यं याम्यः । आदित्यस्यापत्यम् आदित्यः, ण्ये ण्यलोपः(१) अदितेरपत्यम् आदित्यः । प्रजापतेरपत्यं प्राजापत्यः, एवं वैश्वपत्यः । दितेरपत्यं दैत्यः । पश्वाद्यादपतस्तु—पाशुपतः जागत्पत इति कुर्व्वादि । गोरपत्यं गव्यः । राज्ञोऽपत्यं राजन्यः, क्षत्रियेऽभिधानम्, अन्यत्र राजनः.मन्वर्ज्जेत्यादिना नियमेन न नलोपः, अनघन् इति नियमान्न उङ्लोपः । श्वशुरस्यापत्यं श्वशुर्य्यः, संज्ञायां बाह्वादित्वात् श्वाशुरिः । मनोरपत्यं मनुष्यः, ये सन्, न इत् । नाड़ायन इति—नड़स्यान्तरापत्यम् इति वाक्यम् ।

नड़ादिर्यथा—

नड़ भण्डित रोहिण शङ्ख पुटं
पद (२) काण चरं गिरि चक्र कुटम् ।
बिद काश वनं कुल धूम जलं
किर चित्र सुरं खड़ लोह नरम् ॥
भड़िलो भड़लो भड़ितः प्रकृति-(३)
स्वपलो नमकः खदिरो मिमतः ।
चरकः शकटः शलभो बदरः
स्थिरकः खरपः सुमनोऽज-जनाः ॥

---

(१) अदितिशब्दस्य कुर्व्वादौ पाठात् ण्ये आदित्यः, आदित्यशब्दस्यापि तत्र पाठात् पुनर्ण्ये यवोर्लोप इत्यकारयकारयोर्लोपः ।

(२) पाद इति पाणिनीये ।

(३) प्रकृतिरित्यत्र प्रकृत इति संक्षिप्तसारे, प्रकृत इति पाणिनीये ।

सायक दासक किङ्कर दुर्गं
कातर काखल (१) पिङ्गल धूम्रम् ।
भण्डिल कोशल सुपक विशालम्
आतप चूप(२)मख विशम्पम् ॥

ओजः खरप पञ्चाल वामोदश्च धरित्रिणः ।
अश्मा गोमी च गोलाश्च (३) जलन्धर युगन्धराः ॥
कुमारः शिंशपा काव्यो वीचार्हाविति शेतिकौ (४) ।
आनडुह्यार्ज्जुनो दण्डी श्यामो वाग्मी च सम च ॥
इन्द्रामुण्यौ निगुः (५) काश्यो राजन्य तिक पिञ्जराः ।
द्वीपः प्राणो दास मित्र मुञ्जार्क लण शूद्रकाः ॥
अनुग्रीवः अविष्ठा च विश्वानरश्च हंसकः ।
मण्डपाकश्मल(६)स्तम्भ-खर्ज्जूर-चमसश्च ऋतक् ।
ग्रीष्मो हस्ती वैल्य(७)वाप्यौ सुकृत्यः शोण-कामुकौ ।
ब्राह्मणोडुम्बरालोह द्रोण जीवन्त पर्व्वताः ॥
खनाऽश्वलाग्रदण्डं (८) स्यात् शलङ्कु स्तु ह्यकौशिके ।
वाशिष्ठे तु वणो विप्रे क्षष्णो जातस्तु पूरुषे ॥

---

(१) कातल इति पाणिनीये ।

(२) पाणिनीये संक्षिप्तसारे च चूप इत्यत्र ह्रस्वउकारो दृश्यते ।

(३) गोलाङ्क इति पाणिनीये ।

(४) वीच, अर्ह, इतिश, इतिक ।

(५) निगु इति पाणिनीये ।

(६) अकश्मलशब्दः पाणिनीये संक्षिप्तसारे च न दृश्यते ।

(७) वैल्य इति पाणिनीये संक्षिप्तसारे च ।

(८) खन, अश्वल, अग्र, दण्ड ।

दर्भे आग्रायणे भर्गस्त्रैगर्त्ते शुनकस्तथा।
वात्स्ये ऋषावग्निशर्म्मा स्याच्छरद्वांस्तु भार्गवे॥
भारद्वाजे तु आत्रेयो भरद्वाजः शपस्तथा।
आत्रेयेऽथ ष्णायने च क्रोष्टोरुलुक् सदा मतः।
ष्णान्ता ष्णन्ताश्च गोत्रार्था ट्वान्ताश्च हरितादयः॥

शिंशपाया अपत्यमित्यर्थे—आदाच्चो णित्ते शिंशपा दित्य-वाट्-श्रेयो-दीर्घसत्र-देविकानाम्। शिंशपादीनां णित्ते परे आद्यचः स्थाने त्रि-प्रसङ्गे आत् स्यात्। शांशपायनः (१)। आनडुह्य इति—गर्गादिष्णान्तः। अर्ज्जुनस्यान्तरापत्यम् आर्ज्जुनायनः। बाह्वादि-त्वादार्ज्जुनिः। एवं सात्ययनः सातिः, पञ्चानामपत्यं पाञ्चायनः, बाह्वादित्वात् पाञ्चिः। वेण्य इति—वेणो नाम राजर्षिस्तस्यापत्यं वृद्धेकोशलाजादेरिति (२) ष्यङ्, वैण्यस्तस्यापत्यं युवा वैण्यायनः। अतएव ष्य-ट्ठ-चत्रियार्षेभ्य इति न लुक्। द्रौणायणोऽश्वत्थामा इति तु पुत्त्रे पौत्त्रत्वोपचारात्। शलङ्कोरन्तरापत्यं शालङ्कायनः ष्णायने उतो लोपः। इदमकौशिके, कौशिके तु बाह्वादिः। वाणायनो वाशिष्ठः, अन्यत्र वाणिः। कार्ष्णायनो विप्रः, अन्यत्र कार्ष्णिः। जातस्यान्तरापत्यं जातायनः पुमान्। पुरुष इति

(१) शिंशपाया विकारः शांशपो दण्ड इत्यपि। दित्यो लाङ्गलं, तं वहतीति दित्यवाट् वृषभः तस्यायं दात्यौहः। दात्यूह इति कात्यायनः। दितिं वहतीति दितिवाट् कश्यपस्तस्माज्जात इत्यर्थे दात्यूह इति कश्चित्। डाउक् इति ख्यातो जलचरपक्षिविशेषः। श्रेयसि भवं श्रायसम्। दीर्घसत्रे भवं दार्घसत्रम्। देविका नदी, तत्र भवं दाविकमुदकं (प्रयोगरत्नमाला १५६६ सू)।

(२) कुञ्जादेरिति ४२८ सूत्रस्य टीका द्रष्टव्या।

किं ? जाताया अन्तरापत्यं जातेयः। प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणमित्यस्य ज्ञापकमिदम्। दार्भायणः आग्रायणः (१) अन्यत्र दार्भिः। भार्गायणस्त्रैगर्त्तः (२), अन्यत्र भार्गिः। शौनकायनो वात्स्यः, अन्यत्र शौनकः, शिदादित्वात् ट्णः। आग्निशर्म्मायणः ऋषिः, अन्यत्र बाह्वादित्वात् आग्निशर्म्मिः। शारद्वतायनो भार्गवः, अन्यत्र शारद्वतः, विदादित्वात् ट्णः। आत्रेयायणो भारद्वाजः, अन्यत्रात्रेयिः। भारद्वाजायनः शापायनश्चात्रेयः, अन्यत्र भारद्वाजः—ऋषि-ष्णः, शापिः—अतः ष्णिः। क्रोष्टोरपत्यं क्रौष्टायनः, उतो लुक् ष्णायने। इदमकौशिक इति कश्चित्। गोत्रविहितष्णान्ता गोत्रविहितष्णान्ताश्च नड़ादौ पठ्यन्ते, तस्मादेव नियमात् यूनि प्रत्ययः। मूले गार्ग्यायण इति गर्गस्यान्तरापत्यं गार्ग्यः, तस्यापत्यं युवा इत्यर्थे ष्णायनः, आति न ष्णस्य लोपः(३)। एवं वात्स्यायन इत्यादि। मूले दाक्षायण इति दक्षस्यान्तरापत्यम् इति दाक्षिस्तस्यापत्यं युवा दाक्षायणः, एवं प्लाक्षायण इत्यादि। स्त्रियां गर्गस्यापत्यं यूनी गार्ग्यायणी दाक्षीति स्त्रियां युव-त्यनिषेधात्। दाक्षायणी तु दक्षस्यापत्यं दाक्षायणः, स्त्रियां षित्त्वादीप्। गोत्रार्थ इति किं ? सोमो देवता अस्य सौम्यस्तस्यापत्यं सौम्यिः। सुतङ्गमस्य निवासः सौतङ्गमिस्तस्यापत्यं सौतङ्गमः, शेष-ष्णः। एवं ट्णान्ता हरितादयः। हरितस्यान्तरापत्यं हारितः, विदाद्यन्तर्गण-

---

(१) आग्रायणो मुनिभेदः।

(२) त्रिगर्त्तस्य मुनेः पुत्राद्यपत्यं त्रैगर्त्तः।

(३) क्यकङ्पूर्वेत्यत्र आकारवर्ज्जनात्।

त्वात् ढक्, तस्यापत्यं युवा हारितायनः। परस्त्रिया अपत्यं(१) पारशवस्तस्यापत्यं युवा पारशवायन इत्यादि।

पैलादेः (२) ष्णायनस्य लुक्। पैलादेः परस्य ष्णायनस्य यूनि विहितस्य लुक् स्यात्। पीलाया अपत्यं पैलस्तस्यापत्यं युवा पैलः। एवमुदीचोऽपत्यम् औदच्चिस्तस्यापत्यं युवा औदच्चिरित्यादि। पैलादिर्यथा—

पैल औदच्चि-औलिङ्गि सात्यकामिश्च सात्यकिः।
औदव्रज्यौदमज्जाौदशुद्धि(३)र्गालङ्कयस्तथा।
गोपामञ्ज्यौदमेघी च दैवस्थान्यौदगायनी।
श्वाफल्कौदचिती राहचतिर्वैज्ज्जिहायनिः।

पैङ्गलायनि वाल्कायनि पैङ्गायनि वारुणि। ष्णान्तानामेषां "प्राचां ष्णेखावैद्ग्रादे"रित्यनेन लुकि सिद्धे अप्राच्यार्थं पृथगुपादानम्।

प्राचां ष्णेखावैद्ग्रादेः। प्राचां गोत्रे यः ष्णिस्तदन्तात् यूनि विहितस्य ष्णायनस्य लुक् स्यात्, न तु वैद्ग्रादेः। पन्नागारस्यापत्यं पान्नागारिस्तस्यापत्यं युवा पान्नागारिः। वैद्ग्रादेस्तु

---

(१) परस्त्रीशब्दस्य परशादेशः। अत्र गोयीचन्द्रः—अत्र परस्त्रीशब्देन भिन्नजातीया स्त्री वाच्या, रूढश्चायं शब्दः। ब्राह्मणेनोढायाः शूद्राया अपत्यं पारशवः, अन्यत्र तु पारस्त्रैणेयः।

(२) अत्र वाल्यादेरित्यपि पाठः। वालस्यान्तरापत्यं वालिः तस्यापत्यं युवा वालिरित्युदाहरणञ्च।

(३) काशिकायां दृहन्मुग्धबोधे च उदमज्जिरिति पाठो दृश्यते सिद्धान्तकौमुद्यान्तु उदशुद्धिरिति।

विङ्गस्यान्तरापत्यं वैङ्गिः तस्यापत्यं युवा वैङ्गायनः। धारणस्यान्तरापत्यं धारणिः तस्यापत्यं युवा धारणायन इत्यादि।

वैङ्ग्यादिर्यथा—

वैङ्गि धारणि वाल्मीकि प्राणाहतिश्च दैवतिः।
तौल्वल्यासुरि-दैवोद्दि पौशि-वैल्वकि-वैरकि॥
कारेणुपालि-वैकर्णी कालिङ्ग्याहिंसकौ तथा।
चापेटक्यासिवन्धी पौष्करसादिश्च नैयमिः।
दैवमत्यान्तरहतौ तथा दैवयजिर्म्मतः॥

न भरत गोत्राच्च। प्राच्यात् भरतगोत्राच्च यूनि विहितस्य लुक् स्यात्। अर्ज्जुनस्यान्तरापत्यम् आर्ज्जुनिस्तस्यापत्यं युवा आर्ज्जुनायनः। पूर्व्वस्य बाधकोऽयम्।

पैतृष्वस्रीय इत्यादि। पितृष्वसुरपत्यमिति वाक्ये णीयः, णित्त्वाद्वृिः, स्त्रियां पैतृष्वस्रीया, पैतृस्वस्रीयाभार्य्य (१) इत्यादि। पितृष्वस्रादिर्यथा—

पितुःस्वसा तथा मातुः, स्वसा, भ्रातुरणिद् भवेत्।
कुल्मायां णायनिश्चैव सौवीरगोत्रसम्भवः॥

भ्रातृशब्दात् णीयोऽणित्, तेन भ्रात्रीयभार्य्य इति (२)॥

सौवीरगोत्रसम्भवो णायनिः (३) कुल्मायां पितृष्वस्रादौ पठ्यते, तस्मादपि णणिस्रीयः। यमुन्दस्यापत्यं यामुन्दायनिः तस्यापत्यं

---

(१) अत्र युवक्तविकारार्थवर्ज्जणित्तान्तत्वाच्च पुंवद्भावः।

(२) अत्र णित्तान्तत्वाभावात् पुंवद्भावः।

(३) सौवीरगोत्रापत्येऽर्थे सम्भूतो यो णायनिप्रत्ययस्तदन्ताः शब्दा इत्यर्थः।

सुवाऽणिञ्यः, यामुन्दायनीयो जाल्मः, रेवत्यादित्वात् यामुन्दायनिकः । एवं सौयामायनीयः सौयामायनिकः, वार्ष्यायणीयः वार्ष्यायनिकः । तथाच—

यमुन्दश्च सुयामा च वार्ष्यस्तेभ्यः फिञः (१) स्मृताः ।
सौवीरेषु च कुत्सायां द्वौ योगौ शब्दवित् स्मरेत् ॥

इति महावृत्तिः ।

द्वौ चौयण्विकौ । णित्त्वाभावे पूर्व्ववत् प्रयोजनम् (२) ।

रैवतिक इति—रेवत्या अपत्यम् इति वाक्यं, यचोरित्यादिना ईकारलोपः त्रिश्च, स्त्रियां रैवतिकी । आश्वपालिक इति अश्वं पालयतीति अश्वपालः षण्, तस्यापत्यमिति वाक्यम् ।

रेवत्यादिर्यथा—

रेवत्यश्व-मणि-द्वारपूर्व्वपालोऽथ कुत्सने (३) ।
गोत्रस्त्रियश्च (४) बाहुल्याद्वृद्धाः सौवीरगोत्रजाः ॥
कर्णग्राह-वृकग्राहौ कुक्कुटाचस्तथैव च ।
वृकवञ्ची सवर्णा च परे शिष्टप्रयोगतः ॥

अश्व-मणि-द्वारेभ्यः पालो रेवत्यादौ पठ्यते । जयादित्यस्तु अश्वपाली मणिपाली द्वारपालीति स्त्रीलिङ्गमङ्गीकरोति । न्यासे तु द्वारपालादीनामदन्तनिर्देशः । अथानन्तरं गोत्रविहितत्यान्ताः

---

(१) पाणिनीये फिञ्प्रत्ययः, तच्छिशागीयमते णायनिः ।

(२) पुंवद्भावसिद्धिरित्यर्थः ।

(३) पितृसंविज्ञाने मात्रा व्यपदेशोऽपत्यस्य कुत्सेति काशिका ।

(४) पौत्रप्रभृत्यपत्यं गोत्रं, तथाभूता याः स्त्रियः गोत्रस्त्रियः ।

स्त्रीलिङ्गाः कुत्सायां रैवत्यादौ पठ्यन्ते। यथा—गार्ग्या अपत्यं युवा गार्गिको जाल्मः, ग्लुचुकायन्या अपत्यं युवा ग्लौचुकायनिको जाल्मः, मिमतादित्वात् गार्गः ग्लौचुकायनश्च जाल्मः। गोत्रेति किम्? कारिकेयो जाल्मः। स्त्रियः इति किम्? औपगविः। कुत्सायामिति किम्? गार्गेयो माणवकः (१)। कुत्सन इत्येव, तेन सौवीरगोत्रे ये वृद्धास्तेऽपि कुत्सायां बाहुल्याद्रैवत्यादौ पठ्यन्ते। भगवित्तस्यापत्यं भागवित्तिस्तस्यापत्यं युवा भागवित्तिको जाल्मः, बाहुल्यात् पक्षे यथाप्राप्तं भागवित्तायनो (२) जाल्मः। तृणविन्दोरन्तरापत्यं तार्णविन्दवः तस्यापत्यं युवा तार्णविन्दविकः। आकशापस्यान्तरापत्यम् अश्वादेराकृतिगणत्वात् आकशापेयः, तस्यापत्यं युवा आकशापेयिकः। अन्ये तु अश्वादिपठितत्वात् आकशायनशब्दस्यैव आकशायनेयिको जाल्मः इति वदन्ति, तन्न।

तथाचाहुः—

भागपूर्व्वपदो वित्तिर्द्वितीयस्तार्णविन्दवः।
तृतीयस्त्वाकशापेयो गोत्रात् (३) ठग्बहुलं ततः (४)॥

इति परे।

---

(१) अत्रापि गार्ग्या अपत्यं युवेति वाक्यम्। "मातामहादेरुपलक्षणार्थोऽयं प्रयोग इति नास्ति कुत्सा" इति काशिका।

(२) गोत्रप्रत्ययान्तानां नडादौ पाठादत्र फायनः।

(३) गोत्रात् गोत्रविहितप्रत्ययान्तात्।

(४) ततस्तस्मात् भागवित्त्यादिप्रत्ययात्।

४२५ । मन्वर्ज्जान्वर्म्मोच्चस्येनोऽनोऽध्वात्मनो-पत्यण्योऽविकारण्णाभावकर्म्मय ईने न न-लोपः ।

( मन्वर्ज्जान्वर्म्मोच्चस्येनः ६।, अनः ६।, अध्वात्मनः ६।, अपत्यण्ये ७।, अविकारण्णाभावकर्म्मये ७।, ईने ७।, न ।१।, न-लोपः १। ) ।

---

ठक् णिकः । वृद्धग्रहणमिह स्त्रीनिवृत्त्यर्थम् (१) । सौवीर-गोत्रजा इति किम् ? औपगविर्जाल्मः । कुत्सायामिति किम् ? भागवित्तायनो माणवकः ।

शेषानुदाहरति यादव इति—यदुर्नाम कश्चित्, तस्यान्तरा-पत्यार्थे ण्णः । आङ्गिरस इति—अङ्गिरसोऽपत्यम् इति वाक्यम् (२) । मुनौ तु शिवादित्वात् (३) । एवम् औपगवः माधवः मारीच इत्यादि ।

४२५ । मन् । मनं वर्ज्जयतीति मन्वर्ज्जः, स चासौ अन् चेति मन्वर्ज्जान्, स्यादिन् स्येन्, मन्वर्ज्जान् च वर्म्मा च उच्चा च स्येन् च तत्, मन्वर्ज्जान्वर्म्मोच्चस्येन् तस्य । अध्वा च आत्मा च तत्तस्य । न विकारोऽविकारस्तस्मिन् ण्णः अविकारण्णः, भावश्च कर्म्म च ते भावकर्म्मणी, न भावकर्म्मणी अभावकर्म्मणी,

---

(१) सौवीरगोत्रजा इत्युक्तेरपत्यप्रत्ययान्ताः सौवीरगोत्रोत्पन्नवाचकाः शब्दा उच्यन्ते । ते चापत्यप्रत्ययान्तत्वादादादस्वरवृद्धौ वृद्धसंज्ञका भवन्ति, तथापि वृद्ध-ग्रहणं, तथाविधस्त्रीलिङ्गशब्द-निवृत्त्यर्थमिति भावः ।

(२) अत्र अङ्गिरा नाम कश्चित् ।

(३) शिवादौ कुर्वण्यन्धकवृष्ण्य इत्युक्तेः ।

मन्वर्ज्जस्यानो वर्म्मण: उक्ष्ण: स्यात् परस्येनय अपत्यार्थ-ष्णे, अनो विकारार्थवर्ज्जे ष्णे भावकर्म्मार्थवर्ज्जे ये च, अश्वाश्मनो-रीने, न-लोपो न स्यात्। याज्वन: भाद्रवर्म्मण: औक्ष्ण: चाक्रिण:।

ग्रैव: वाग्मिष्ठ:।

---

तयोर्य: अभावकर्म्मय:, पश्चात् अविकारष्णश्च अभावकर्म्मयश्च तत्तस्मिन्। याज्वन: इति--यज्वनोऽपत्यम् इत्यर्थे ष्ण: न्वोर्लोपीती तेऽच्ये इति प्राप्तनलोपोऽनेन निषिध्यते। मन्वर्ज्ज इति किं? भाद्रसाम: सौसाम:। अपत्यष्ण इति किं? चर्म्मणा परिवृतो रथ: चार्म्मणो रथ: (१)। मन्वर्ज्जमित्युक्त: वर्म्मणो वर्ज्जने प्राप्ते वर्म्मग्रहणादाह भाद्रवर्म्मण: इति--भद्रवर्म्मणोऽपत्यम् इति वाक्यम्। एवं शार्ब्ववर्म्मण इत्यादि। औक्ष्ण इत्यादि--यद्यपि मन्वर्ज्जेत्यनेन नलोपप्रतिषेधादुक्ष्णोऽपि प्रतिषेध: सिध्यति, तथा-प्युक्ष्ण: पृथग्ग्रहणमेवं ज्ञापयति, अपत्यष्णातिरिक्ते ष्णे नलोप-निषेधो न भवति, तेन औक्षं पदमित्यत्रानोऽविकारष्णे (२) निषेधो न स्यात्। चाक्रिण इति--चक्रिणोऽपत्यम् इति वाक्यं, स्येनो न नलोप:। अस्य सूत्रस्य योगविभाग: कर्त्तव्य:, तेन क्वचिद-न्यत्रापि (३)। तथाहि--

---

(१) अत्र मनन्तत्वान्नलोपे प्राप्ते अपत्यार्थष्णाभावान्न नलोप:।

(२) औक्षमित्यत्र इदमर्थविहितष्णे इत्यर्थ:।

(३) अप्रतिषिद्ध-नलोपोऽपि न स्यादिति शेष:।

ब्रह्मणो जातावपत्यणे। ब्रह्मणोऽपत्यण्वि नलोपो न स्यात् जातौ। ब्रह्मणोऽपत्यं ब्राह्मणो जातिः (१)। अपत्यण इति किं? ब्राह्मी नामौषधिजातिः। जातौ किं? ब्रह्मणोऽपत्यं ब्राह्म इति।

पणि गणि गाथि केशि विदथिनो वा तु हितनाम्नः। एषामपत्यण्वि नलोपो न स्यात् हितनाम्नस्तु वा। पणिनोऽपत्यं पाणिनः, एवं गाणिनः गाथिनः कैशिनः वैदथिनः। हितनाम्नोऽपत्यं हैतनाम्नः हैतनामः।

इनोऽकलाप्यादेरनपत्ये। इनो नस्य लोपो न स्यात्, न तु कलाप्यादेः अनपत्यणे परे। स्राग्विणः मैधाविनः। अपत्ये तु मैधाव इत्यादि। कलाप्यादेस्तु कलापिन इदं कालापम्। कलाप्यादिर्यथा—

> कलापी पीठसर्पी च कुथुमी तैतिली तथा।
> आजली लाङ्गली स्यात् सब्रह्मचारिशिखण्डिनौ।
> कलाप्यादौ शिलाली च नव शब्दाः प्रकीर्त्तिताः॥

कर्म्मचर्म्मणोरताच्छील्यकोषयोः। ताच्छील्यभिन्ने कर्म्मणः कोषभिन्ने चर्म्मणो नलोपो न स्यादनपत्यणे। कार्म्मणं चार्म्मणम्। अताच्छील्यकोषयोरिति किम्? कार्म्मः कर्म्मशीलः, चार्म्मः कोषः।

दण्डिहस्तिनः णायने, जिह्माशि-वाशिनोस्तु णेयणायन्योः। नलोपो न स्यात्। दण्डिनोऽपत्यं दाण्डिनायनः, एवं हास्तिनायनः। जैह्माशिनेयः वाशिनायनिः।

---

(१) अत्र अनन्तस्यापि अपत्यणे न नलोपः।

अथर्व्वण: णिके। अथर्व्वणा ऋतो ग्रन्थ: अथर्व्वा, तमधीते वेत्ति वा आथर्व्वणिक:।

शैव इत्यादि। शिवस्यापत्यमिति वाक्यम्।

शिवादिर्यथा—शिव तक्ष गङ्गा ककुभो मयूरो
वतण्ड भूमी मुनि सन्धि यस्का:।
पृथा विपाशा तृण कर्ण कुम्भा
मण्डूक बोधानभिमान चण्डा:॥
तक्षाक खञ्जारक रेख कर्णा:
खञ्जालको लक्ष सुपिष्ट पौला:।
खदूरको भूरि नभाक पिष्टा:
पञ्जारको वृष्णिक कोकिलेला: (१)॥
पटको वर्त्तन: शोफो विरूपाक्ष: कलम्धन:।
मञ्जीरको जरत्कारु कहोड़ालेख (२) पौवरा:॥
अयस्थूणो वधिरक उलेया प्रोष्ठ-वर्त्तुलौ।
श्रुघा जटिलको गोफिलिकोल्कुर्य्या भलन्दन:॥
खर्ज्जूरकोऽनभिम्लान: ककुत्स्थ: पौष्णिकस्तथा।
ऋष्टिषेण कुठाराय्यभ्रेना लोहितिकापि च॥
ऊर्णनाभस्त्रिपिटक: सपत्नी प्रोष्ठिकस्तथा।
त्वक्ष: साल्वा जलहृद: कुबेरश्चकवृष्णय:॥
अहहा मानुषी संज्ञा नदीसंज्ञा मता इह।
भारद्वाजे तु शुङ्ग: स्यादात्रेये च्छगलो मत:॥

---

(१) कोकिला, इला। (२) कहोड़, आलेख।

वात्स्ये विकर्णोऽथ चौरङ्कदः परिषिकोऽपि च ।
दशरथः कनीनश्च कन्यायाः णे भवेत्तथा ॥
त्रिवेण्यास्त्रिवणो विश्रवसस्तु रवणोऽपि च ।
विश्रवणो भनोर्व्वा सन् गणसूत्रप्रमाणतः ॥

इह्वादन्तानां पाठः णिञ्बाधनार्थः। इञिकारान्तानां स्त्रीत्या-न्तानाञ्च ण्येयबाधनार्थः। तक्षन्—शब्दस्य कारुवाचकत्वात् ण्यिबाधनार्थः। तक्ष्णोऽपत्यं ताक्ष्णः, मनवर्ज्जान् इति अनन्तत्वात् नलोपो न स्यात्, कुर्व्वादित्वात् ताक्ष्ण्यः। गङ्गाया अपत्यं गाङ्गः, शुभ्रादित्वात् गाङ्गेयः, तिकादित्वात् गाङ्गायनिः। पीलाया अपत्यं पैलः, शुभ्रादेराकृतिगणत्वात् पैलेयः। परे तु क्वचित् अपवादविषये उत्सर्गोऽभिनिविशत इति न्यायात् इत्याहुः। एवं सात्त्वाशब्दस्याप्युदाहरणीयम्। जरत्कारुशब्द अवन्तस्तन्वादिपाठात्। ऋष्टिषेणशब्दस्य सेनान्तत्वात् ण्यणि-बाधनार्थः। कुरुवंशोत्पन्ना ऋषिवाचका अन्धकवंशोपन्ना वृष्णि-वंशोत्पन्नाश्च सर्व्वे शिवादौ पठ्यन्ते। कुरोः—नाकुलः, साहदेवः। ऋषेः—मूले वाशिष्ठ इति—वशिष्ठस्यापत्यम् इति वाक्यम्, एवं वैश्वामित्रः। अन्धकस्य—श्वाफल्कः, तौवंसः। वृष्णेः—वासुदेवः, आनिरुद्ध इत्यादि। ननु सर्व्वेषां व्याकरणानां माहेशमूलक-त्वेनाधुनिककुर्वृष्यन्धकवृष्णिवंशवाचकानां कथं शिवादौ पाठ इति चेत् सत्यं, शिवस्य सर्व्वज्ञत्वात् तत्र तेषां सङ्कलनम्। यद्वा ऋषेरनादित्वात् कुर्वृष्यन्धकवृष्णिवंशा एवानादयः, अतएव तेभ्यस्त्यविधानमित्यदोषः। अङ्गानां मानुषीसंज्ञानां तावत्—

चिन्तिताया अपत्यं चैन्तितः औचितः गौतमः। अनृष्यानां नदीसंज्ञकानां तावत्—यमुनाया अपत्यं यामुनः, इरावत्या अपत्यम् ऐरावतः नार्मद इत्यादि। अनृषा इति किं? वासवदत्तेयः चान्द्रभागेयः (१)। शुङ्गस्यापत्यं शौङ्गो भारद्वाजः, अन्यत्र शौङ्गिः। छगलस्यापत्यं छागलः आत्रेयः, अन्यत्र छागलायनिः। विकर्णस्यापत्यं वैकर्णो वात्स्यः, अन्यत्र वैकर्णिः। कन्याया अपत्यं कानीनः कर्णः व्यासश्च। त्रिवेण्या अपत्यं त्रैवणः। विश्रवसोऽपत्यं रावणः वैश्रवणश्च। मनोरपत्यम् इत्यर्थे णः, तस्मिन्मनोः सन् वा, न इत्, मानुषः पक्षे मानव इति।

विदादेर्गोत्रेऽनृषेश्चानन्तर्ये ट्णः। (२) विदस्यान्तरापत्यं वैदः। एवम् और्व्वः। स्त्रियां षिश्वादीप् वैदी इत्यादि।

विदादिर्यथा—

विद उर्व्वौ भरद्वाजः किलातः कुशिको हरित्।
विश्वानरः कश्यपोऽपस्तम्बो वृष-रथीतरौ॥
कूचवारशरद्वन्तौ रथन्तरगविष्ठिरौ।
ऋष्टिषेणश्च किन्दर्भौ मठरो विश्वविष्टपि॥
पुनर्भूर्दुहिता पुत्रः प्रतिबोध-ननान्दरौ।
हर्य्यश्वः प्रियको धेनुर्बध्योग-शुनकावपि॥

---

(१) अत्र चन्द्रभागा-पर्य्याय-चान्द्रभागा-चान्द्रभागीशब्दयोरन्यतरस्मात् ष्णेयः। अन्यथा इष्टत्वं न स्यात्।

(२) विदादेर्गोत्रापत्यार्थे ट्णः स्यात्। अनृषिरित्यस्मिर्गणभेदे द्रष्टव्या।

ऋतभागश्च किन्दासो व्ययस्काकान्धिका अपि।
मद्राकुलः पृदाकुश्च निषादोऽथ परस्त्रियाः—
परशुष्टे, गोपवनः शिग्रु भामज-विन्दवः।
अश्वावतार-श्यामाक-श्यापर्णाः समुदीरिताः॥

अत्र ये शब्दा ऋषिवाचकास्तेभ्योऽनन्तरापत्य एव ट्ठः। अतएव पौत्रः पौनर्भवः दौहित्र इत्यादि। ननु कथं कुशिकस्यानन्तरापत्यं कौशिको विश्वामित्रः, कथं वा व्यवहितापत्ये इन्द्रहूर्नाम सप्तमः काश्यपानाम् ब्वेऽलुक्? इति (१) चेत् सत्यं, क्वचिदपवादविषयेऽप्युत्सर्गोऽभिनिविशत इति न्यायात् ऋषिण्येन (२) भवितव्यम्, अथवा तस्येदमित्यर्थे ण्येन। परस्त्रिया अपत्यं पारशवः, ट्ठे परशादेशः। अत्र परस्त्रीशब्देन भिन्नजातीया स्त्री वाच्या, अतएव पारशवो विदुरः। तथाच—पारशवः पुमान्, परस्त्रीतनये शस्त्रे द्विजाच्छूद्रासुतेऽपि च इति मेदिनीकारः। अर्थान्तरे तु पारस्त्रैणेयः। बाह्वादेराकृतिगणत्वात् विदस्यान्तरापत्यं वैदिरित्यादौ ष्णिः, न तु ऋषिण्यः। यद्यपि शिवादित्वात् ष्णे कृते वैद इत्यादि सिद्ध्यति, तथापि विदादेः पृथक् ट्ठविधानं मयड्बाधनार्थम्।

---

(१) काश्यपानामित्यत्र कश्यपशब्दस्य विदादिपाठात् विदादेर्गोत्रे इति वार्त्तिकबलेन बहुवचनविहितस्य ट्ठप्रत्ययस्य वक्ष्यमाणगर्गयस्कविदादीत्यादिसूत्रेण कथं न लुग्भवतीत्याशङ्क्याह क्वचिदित्यादि। गर्गयस्केत्यादिसूत्रे तर्कवागीशेन विदादेः परस्य ट्ठप्रत्ययस्यैव लुग्भवतीति वक्ष्यते। अत्र तु ऋषिण्येन इदमर्थण्येन वा साधितत्वान्न लुगित्यर्थः।

(२) शिवादित्वादिति शेषः।

उत्सादेश्च। उत्सादेष्टुः स्यात्, पृथग्योगादपत्यसामान्ये। उत्सस्यापत्यम् औत्सः, जानपद इत्यादि।

उत्सादिर्यथा—

उत्सो जनपदविनद्धौ धन्वा, विकच-महानद-तरुणं धेनुः।
भरत-महानस-पृथिवी-देवं, पङ्क्तिर्जगती कुरु-पञ्चालम्॥
उदपान महाप्राण-ककुभस्तलुनो महान्।
इन्द्रावसान-विकर-त्रिष्टुबुष्णिगनुष्टुभः॥
उशीनरः सुवर्णश्च भल्लकीयो रथन्तरः।
बृहन्मध्यन्दिनश्चाथ सत्वतो नुण् भवेदिह॥
उदस्थानन्तु देशेऽस-वक्कयो(१)ऽंशे वृषन्मतः (२)।
ग्रीष्मोऽवृत्ते समाख्यातः शेषं ज्ञेयं प्रयोगतः॥

इह कुरुशब्दस्य पाठात् कुरोरपत्यम् इत्यर्थे कौरव इति जयादित्यः। सत्वत्शब्दो वत्वन्तस्तस्य टु नुण्, सत्वतोऽपत्यं सात्वन्तः। पाठबलात् उदस्थाने भव औदस्थानो देशः। अदेशे तु उदस्थानः कश्चित् तस्यापत्यम् औदस्थानिः। वृषद्शब्दोऽंशे वाच्ये टुः वार्षदः, अनंशे तु वार्षदः ष्णः। ननु ष्णटुयोः को विशेष इति चेत् सत्यं, ष्णान्तवार्षदस्य सङ्घे वार्षदकः। टुान्तस्य तु वार्षद इति विशेषः। अवृत्त इति—वृत्तं छन्दः, न वृत्तम् अवृत्तं तस्मिन्, ग्रैष्मः। अवृत्त इति किं? ग्रैष्मी त्रिष्टुबिति ऋतुनक्षत्रा-दिति ष्णः, तस्याद्विकारे मयट् ग्रैष्ममयं, टुान्ताद्विकारे ग्रैष्ममिति विशेषः।

---

(१) अर्थे असमासे वक्कयः। (२) पाणिनीये वृषदित्यत्र वृषदिति पाठः।

४२६। सङ्ख्यासम्भद्रान्मातुडुर् णे।

( सङ्ख्या-सं-भद्रात् ५।, मातुः ६।, डुर् ।१।, णे ७ )।

द्वैमातुरः।

४२७। नन् पुंस्त्रियोः। ( नन् ।१।, पुंस्त्रियोः ६॥ )।

पौंस्नः स्त्रैणः।

४२८। कुञ्जादेर्णायन्योऽस्त्रीब्वेऽपत्ये।

कुञ्जादेः ५।, णायन्यः १।, अस्त्रीब्वे ७।, अपत्ये ७। )।

कुञ्जादेरपत्यार्थे णायन्यः स्यात्, न तु स्त्रियां, न च ब्वे।

कौञ्जायन्यः ब्राध्नायन्यः। स्त्रीब्वे तु कौञ्जायनी कौञ्जायनाः।

---

४२६। संख्या च सम् च भद्रश्च तत्तस्मात्। संख्यावाचकात् समो भद्राच्च परस्य मातृशब्दस्य डुर् स्यात् णे, डित्त्वादन्त्यस्य। सौत्रत्वान्न विः। द्वैमातुर इति—द्वयोर्मात्रोरपत्यमिति वाक्यं, शेषात् णः. एवं षाण्मातुरः।

४२७। नन्। पुमांश्च स्त्री च ते तयोः। अनयोर्नन् स्यात् णे।

४२८। कुञ्जादेः। स्त्री च ब्वं च स्त्रीब्वं, न स्त्रीब्वम् अस्त्रीब्वं तस्मिन्। अपत्यग्रहणं, पूर्व्वेन सामान्यविधानात्। अयं (१) नडाद्यन्तर्गणः णायन्येन णायनो बाध्यते, तेनानन्तरापत्ये कौञ्जिः। कौञ्जायन्य इति—कुञ्जस्यान्तरापत्यमिति वाक्यम्। एवं ब्राध्नायन्यः।

---

(१) अयं कुञ्जादिः।

कुञ्जादिर्यथा —

कुञ्जो ब्रध्नो बुधो लोम-भस्म-शङ्खाः शठो गणः ।

शाकः शुभ्रा विपाशा च शुण्डा स्कन्धः प्रकीर्त्तितः ॥

तिकादेर्णायनिर्वृषादेस्तु यम् च ।

तिकादेरपत्ये णायनिः स्यात्, वृषादेस्तु णायनेर्यम् च, म इत् । तिकस्यापत्यं तैकायनिः, कितवस्यापत्यं कैतवायनिः ।

तिकादिर्यथा —

तिक-कितवौरस-तैतिल नीड़,

भौरिकि भौलिकि-बभ्यारभ्रम् ।

चौपयतः कुरु-संज्ञा यस्तं

गङ्गा लाङ्गट-शूद्र यमुन्दम् ।

खल्यका लोमको रूप्य-ग्राम्य-ध्वाजयता उरः ।

शाल्या वालशिखा वैकयतः शैकयतस्तथा ॥

चैटयतः स्वग्रामोऽथ कौरव्यः क्षत्रिये मतः ।

गोकक्ष्यश्चन्द्रमाः चैतयतो रत्नान्तदा मताः ॥

द्व्यचः णान्ता देवरथोऽमित्रोदन्यं (१) प्रकीर्त्तितम् ।

क्षत्रियार्थ-कौरव्यः पठ्यते (२), तेन जनपद-ण्यान्तस्य ग्रहणं न तु कुर्व्वादि-ण्यान्तस्य, स तु ब्राह्मणवचनस्तस्मात् णोर्लुगेव । जनपद-ण्यान्तात्तु कुरोरपत्यं युवा कौरव्यायणिः क्षत्रियः । रत्नान्तात्तावत्—गोरत्नस्यापत्यं गौरत्नायणिः, आश्वरत्नायणिरित्यादि । द्व्यचः णान्तात्तावत्—कर्त्तुरपत्यं कार्त्तः, तस्यापत्यं

---

(१) अमित्र, उदन्य । (२) इह कुरुशब्देनेति शेषः ।

कार्त्तायणिः। अन्यत्र कर्त्तृशब्दो ब्राह्मणवचनः, तेनात्र .अब्राह्म-णात् णायनेर्न लुक्। एवं कैशायनिः, ग्रैवायनिः। इञच इति किम्? औपगविः, अतः णिः।

वृषादिर्यथा—वृषे दशु कोशल छाग. कर्म्मारराः।

वृषादेस्तावत्—वार्षायणिः दागव्यायनिः कार्म्मार्य्यायणिः, कुर्व्वादित्वात् कार्म्मार्य्यः। कौशलशब्दोऽत्र जनपदवचनः। ननु कथं कौशल्यायनिवल्लभामिति भट्टिः। उच्यते—वृजानेरित इति ईपि कौशल्यायनी, तस्या अपत्यं युवा इत्यर्थे आबादित्वात् णेय-स्तस्य लुकं विधाय स्त्रीत्यस्य लुकि कौशल्यायनिरिति परे। वस्तुतस्तु तिकादेराकृतिगणत्वात् णायनिरिति। तथा च कौशल्यकार्म्मार्य्या-भ्याञ्चेति पाणिनिसूत्रम्।

वृद्धादनपत्यान्ताद्वा पुत्रान्ताद्वाकिनादेस्तु कंञ्च। अनपत्यान्ता-द्वृद्धसंज्ञकात् णायनिर्व्वा स्यात्, पुत्रान्तात् वाकिनादिभ्यश्च, तेषां तु कन् च स्यात् न इत्। आम्रगुप्तस्यापत्यम् आम्रगुप्तायनिः नापि-तायनिः। एवं त्यादायनिः, तवापत्यं त्वादायनिः, युवयोर्युष्माकं वा अपत्यं यौष्मदायनिः। कथं भावतायनिः? वाशब्दस्य व्यवस्थावा-चित्वात्। पक्षे आम्रगुप्तिः नापितिः त्यादस्तस्यापत्यं युवा त्यादा-यनिः। वृद्धादिति किं? दैवदत्तिः याज्ञदत्तिः औपगवः। अनपत्या-दिति किम्? औपगविः। पुत्रान्तात्—गार्गीपुत्रकायणिः। गार्गीपुत्रायणिरिति पूर्व्वेणैव सिद्धे कन्विधानार्थः पाठः, णायन्य-भावपक्षे गार्गीपुत्त्रिरिति रूपत्रयम्। वाकिनादेस्तावत्—वाकिन-कायनिः वाकिनायनिः वाकिनिः।

वाकिनादिर्यथा—

वाकिनश्चर्म्मि गारेधौ काको-लङ्का तथैव च।
कार्कव्यवर्म्मिणावत्र बुधैः सप्त प्रकीर्त्तिताः (१)॥

परे तु कनं न विकल्पयन्ति, तन्मते वाकिनादेर्द्वैरूप्यम्।

श्वब्रह्मादायनिर्व्वा। वाशब्दो बहुलार्थः। श्वसंज्ञकभिन्नादायनिर्व्वा स्यात् अपत्ये। ग्लुचुकस्यापत्यं ग्लुचुकायनिः, पक्षे ग्लौचुकिः। आहिचुम्बकायनिः आहिचुम्बकिः। बाहुल्यात् क्वचिन्न भवति, तेन दक्षस्यापत्यं दाक्षिः प्लाक्षिरित्यादि।

यूनि लुक् णायनेः णस्य। णायनेः परस्य यूनि विहितस्य णस्य लुक् स्यात्। तिकस्यापत्यं तैकायनिः तस्यापत्यं युवा तैकायनिरित्यादि।

कुलाददादिनो (२) येनणेयका दादेस्त्वीनः। दादिभिन्नात् कुलात् य ईन णेयक एते स्युः दपूर्व्वादीन एव। कुलस्यापत्यं कुल्यः कुलीनः कौलेयकः, बहुकुल्यः बहुकुलीनः बाहुकुलेयकः, बहुत्वस्यादत्वात्(३)। दादेस्तु आढ्यकुलीनः श्रोत्रियकुलीनः।

---

(१) वचनं शक्तः सोऽस्यास्तीति वाकिनः, अतएव निपातनादिनन्। अगारे एधते इति गारेधः पृषोदरादित्वादादिलोपः, शकन्ध्वादित्वात् पररूपम्, गारेधकायनिः। चर्म्मिवर्म्मिशब्दाभ्यां ग्रोह्यादित्वादिनिः चर्म्मिवर्म्मिणोर्नलोपश्चेति गणसूत्रम्, चार्म्मिकायणिः वार्म्मिकायणिः। इति तत्त्वबोधिनी।

(२) अदादिनः—दं पदम् आदिर्यस्य तत् दादि, न दादि अदादि तस्मात् अदादिनः। कुलशब्दविशेषणत्वात् क्लीवत्वमिति।

(३) बहुकुलादिषु ईषदूनं कुलमिति वाक्ये बहुप्रत्यये तत्पूर्व्वकस्य बहुकुलशब्दस्य पदादिभिन्नत्वादित्यर्थः।

दुर्म्महद्भ्यां णेयक-णीनौ वा। आभ्यां परात् कुलात् णेयक-णीनौ क्रमाद्वा स्याताम्। दौष्कुलेयकः, अत्रादित्वात् दौष्कुलेयः, पक्षे दपूर्व्वत्वात् दुष्कुलीनः। माहाकुलीनः, उत्सादित्वात् माहाकुलः पक्षे महाकुलीनः।

क्षत्रादियो जातौ। क्षत्रशब्दाज्जातावपत्ये इयः स्यात्। क्षत्रियः जातिः। जाताविति किम्? क्षात्रिः।

सौवीरगोत्रात् फाण्टाहृति मिमतात् ण-णायनौ। सौवीरगोत्रात् फाण्टाहृतेर्मिमताच्च ण-णायनौ स्याताम्। फाण्टाहृतेरपत्यं युवा फाण्टाहृतः। सौवीरगोत्रत्वात् यूनस्य विषयः, फाण्टाहृतायनिः। एवं मिमतस्यापत्यं मैमतः मैमतायनिः। परे तु अल्पाच्तरस्य व्युत्क्रमनिर्द्देशात् (१) यथासंख्यमिच्छन्ति, तन्मते फाण्टाहृतः मैमतायनिरित्येव। सौवीरगोत्रादिति किम्? फाण्टाहृतायनः मैमतायनः।

देवपृथिवीभ्यां यण्णौ वा। आभ्यां क्रमेण य-णौ वा स्यातामपत्ये। देवस्यापत्यं दैव्यः, पृथिव्या अपत्यं पार्थिवः, स्त्रियां दैव्या पार्थिवा, उत्सादित्वात् दैवः पार्थिवः, दैवी पार्थिवी।

स्थामान्तादो लोमान्तात्तु व्वे। स्थामन् इत्यन्तादः स्यात्, लोमान्तात्तु व्वे। अश्वत्थामा नाम कश्चित्, तस्यापत्यम् अश्वत्थामः उडुलोम्नोऽपत्यानि उडुलोमाः। व्वे किम्? औडुलोमिः औडुलोमौ।

---

(१) सूत्रे मिमतफाण्टाहृतेरित्यनुक्त्वा फाण्टाहृतिमिमतादित्युक्तेरित्यर्थः।

कुर्वाद्राज्ञि च ट्णः, ष्णस्तु, हाङ्-मगध-कलिङ्ग-शूरमसात्। अपत्ये राज्ञि च देशतुल्याख्यक्षत्रियात् ट्णः स्यात्, हाङ्-मगधादेस्तु ष्णः। पञ्चालानामपत्यं राजा वा इत्यर्थे पाञ्चालः, वैदेहः। हाजादेस्तु आङ्गः वाङ्गः सौह्मः मागधः कालिङ्गः शौरमसः। कुर्वादिति किम्? पञ्चालस्य ब्राह्मणस्यापत्यं पाञ्चालिः।

वृद्धेत्कोशलाजादादगान्धारि-शाल्वेयात् ण्यङ्। गान्धारिशाल्वेयभिन्नात् वृद्धादिकारान्तात् कोशलादजादाच्चापत्ये राजनि च ण्यङ् स्यात्। ट्णष्णयोरपवादः। वृद्धात्—आम्बष्ठस्यापत्यं राजा वा आम्बष्ठ्यः, सौवीरस्यापत्यं राजा वा सौवीर्य्यः। इकारान्तात्—कुन्तेर्जनपदक्षत्रियस्यापत्यं राजा वा कौन्त्यः, अवन्तेरावन्त्यः, कोशलस्य कौशल्यः, अजादस्य आजाद्यः, स्त्रियामजादित्वादाप्, आम्बष्ठ्या कौशल्या आजाद्या। कौन्त्यावन्त्ययोस्तु कुन्ती अवन्ती। कुरुकुन्त्यवन्तिभ्योऽपत्य त्यस्य लुकि नृजातेरित इति ईप्। ङित्त्वात् पतिपुत्रादौ यङ ई, आम्बष्ठीपतिः आम्बष्ठीपुत्र इत्यादि। गान्धारि-शाल्वेयात्तु गान्धारः शाल्वेयः, पूर्व्वेण ट्णः।

कुरुन्यादिभ्यो ण्यः पाण्डोर्डिश्च। कुरोर्निपूर्व्वशब्देभ्यो जनपदेभ्यो ण्यः स्यात् अपत्ये राज्ञि च, डिश्च पाण्डोः। कुरोर्जनपदस्यापत्यं राजा वा कौरव्यः, कथं माघे—"कुकुरकौरवक्षत्रियः," तथा वेणीसंहारे—"संरक्ष्यतां कौरवा" इति? उच्यते—जनपदाविवक्षायां, विषयो देश इत्यर्थे ष्णो वा (१) तस्येदमित्यर्थे

(१) विकारसङ्घेति सूत्रस्य टीकायां सङ्घाभिकारात् परं "विषये देशे" इति वार्त्तिकसूत्रं द्रष्टव्यम्।

४२८। गर्ग यस्क विदादि भृग्वत्रि कुत्साङ्गिरो वशिष्ठ गोतम रूढाल्लुग् ब्वेऽस्त्रियाम्।

( गर्ग—रूढात् ५।, लुक् ।१।, ब्वे ७।, अस्त्रियां ७। )।

वा। कथमक्षत्रिये "कौरव्याः पशव" इति ? उपचारात्। न्यादेः— निधनस्यापत्यं राजा वा नैधन्यः नैपुण्यः नैषध्यः। पाण्डोर्जनपदस्य क्षत्रियस्यापत्यं राजा वा पाण्ड्यः, ड्विति टिलोपः। रूढ इति किं? महाभारते पाण्डोरपत्यं पाण्डवः। न हि तत्र पाण्डुर्देशः।

उडुम्बरादेः (१) ष्णिः। रूढादपत्ये राज्ञि चेति। ट्णस्य बाधकः। उडुम्बरस्य जनपदस्य क्षत्रियस्यापत्यं राजा वा औडुम्बरिः तैलखलिः।

उडुम्बरस्तिलखलो मद्रकारो युगन्धरः।
भूलिङ्गः शरदण्डस्य कलकूटोऽश्वकस्तथा।
प्रत्यग्रथो नव प्रोक्ताः परे शिष्टप्रयोगतः॥

केकय-प्रलय-मित्रयूनां णित्ते यादेरियः। एषां यादेर्भागस्य णित्ते इयादेशः स्यात्। केकयस्यापत्यं कैकेयः, प्रलयादागतं प्रालेयं हिमं, मित्रयोर्भावः मैत्रेयिका, गोत्रचरणाख्यकः।

४२८। गर्ग। गर्गश्च यस्कश्च विदश्च ते आदयो येषां ते गर्गयस्कविदादयः, ते च भृगुश्च अत्रिश्च कुत्सश्च अङ्गिराश्च वशिष्ठश्च

(१) उडुम्बरादेरित्यपि पाठः।

देशतुल्याख्यः क्षत्रियो रूढ़ः । एभ्यः परेषामुक्तानां त्यानां ब्वे विहितानां लुक् स्यात्, न तु स्त्रियाम् ।

गर्गाः वत्साः, यस्काः लज्जाः, विदाः उर्व्वाः, भृगवः अत्रयः कुत्साः अङ्गिरसः वशिष्ठाः गोतमाः, अङ्गाः वङ्गाः कलिङ्गाः । स्त्रियान्तु भार्गव्यः ।

---

गोतमश्च रूढ़श्च तत्तस्मात् । रूढ़शब्दस्य व्युत्पत्तिमाह देशतुल्याख्य इत्यादि । तथाच गर्गादि-ष्णाः, यस्कादि-ष्ण-ष्णायन-ष्णि-ष्णेयाः, विदादि-टूः, अत्रि-ष्णेयः, भृगुकुत्साङ्गिरोवशिष्ठगोतम-ष्णाः, रूढ़-ष्णा टू णङ् ण्य ष्णि इत्येषां ब्वे लुगित्यर्थः । क्रमेणोदाहरति गर्गा इत्यादि । कद्वयोस्तु गार्ग्यः गार्ग्यौ, यास्कः यास्कौ, वैदः वैदौ, आत्रेयः आत्रेयौ, भार्गवः भार्गवौ, कौत्सः कौत्सौ, आङ्गिरसः आङ्गिरसौ, वाशिष्ठः वाशिष्ठौ, गौतमः गौतमौ, आङ्गः आङ्गौ इत्यादि । एवं ब्वे लुकि से गर्गाणां धनं गर्गधनम् अङ्गधनमित्यादि । ब्वे विहितानां त्यानामिति किम् ? गार्ग्यश्च वात्स्यश्च आग्निवेश्यश्च ते गार्ग्यवात्स्याग्निवेश्याः । एवं गार्ग्यौ च वात्स्यौ च आग्निवेश्यौ च ते गार्ग्यवात्स्याग्निवेश्या इत्यादौ लुग् न स्यात् । परैकदेशिनस्तु एकवचनान्तानामपि द्वन्द्वसमासार्थवाक्ये समासे एकार्थाभावात् सहभावविवक्षायां बहुत्वे लुगित्याहुः । तेन गर्गवत्साग्निवेशा इति उदाजह्रुः, प्रियवाङ्गा इति प्रत्युदाजह्रुरिति । गर्गविदादौ उक्तौ ।

यस्कादिर्यथा—

यस्को लह्य-तथाऽयस्थूण-भलन्दन-त्वणकर्णाः (१)।
भण्डित भड़िल-खरपा भण्डिल-भड़िलौ सदामत्तः।
क्रोष्टुमायो कहियोगः कम्बलहार-कर्षकौ।
क्रोष्टुमानो विषपुटोपरिमेखल-पादकाः (२)।
कर्णाटकः क्रोष्टुपादस्तथा कटुकमन्थकौ (३)।
वकसक्थः शीर्षमायः पिण्डीजङ्घस्तथैव च।
जङ्घारथ-शीर्षमान-लब्जा रक्षोऽसुरस्तथा।
उरकाशोऽजवस्तिश्च विशिः कुद्रिरिमे त्रयः॥

यस्कादयः षट् शिवादयः, भण्डितादयः पञ्च नड़ादयः, अजवस्त्यादयस्त्रयः अत्रादयः। शेषाणामदन्तत्वात् णिः। यस्कादेराकृतिगणत्वात् पुष्करसच्छब्दोऽपि, तेन पौष्करसादिः पौष्करसादी, त्वे पुष्करसदः।

बह्वचो गोत्रस्य प्राच्यभरतेषु। बह्वचः शब्दात् प्राच्य-भरत-गोत्रविहितस्य त्यस्य लुक् स्यात् त्वे। प्राच्यगोत्रे—पन्नागारस्यान्तरापत्यं पान्नागारिः पान्नागारी, त्वे पन्नागाराः। भरतगोत्रे—यौधिष्ठिरिः यौधिष्ठिरी युधिष्ठिराः। एवमार्ज्जुनिः आर्ज्जुनी अर्ज्जुनाः। बह्वच इति किम्? भैमिः भैमी भैमयः।

अगस्त्यकुण्डिन्योरगस्तिकुण्डिनौ च। आभ्यां गोत्रत्यस्य त्वे

(१) लह्य इत्यत्र लच इति च पाठान्तरम्।
(२) विषपुट, उपरिमेखल। पादक इत्यत्र पदक इत्यपि पाठः।
(३) कटुक इत्यत्र वटुक इत्यपि पाठः।

लुक् स्यात्, लुकि सति अगस्त्य कुण्डिन्योरगस्तिकुण्डिनावादेशौ क्रमात् स्तः। अगस्त्यस्यान्तरापत्यम् ऋषि-ण्यः आगस्त्यः, आगस्त्यौ व्वे अगस्तयः। कुण्डिन्या अपत्यं गर्गादित्वात् ण्यः कौण्डिन्यः कौण्डिन्यौ व्वे कुण्डिनाः।

तिककितवादेश्चे। तिकादेः कितवादेश्च परस्य गोत्रविहितस्य त्यस्य चे लुक् स्यात् व्वे। तैकायनयश्च कैतवायनयश्च ते तिककितवाः। उपकलमकाः उष्ककुभाः उरसलङ्कटाः अग्निवेशदासेरकाः वङ्करभण्डीरथाः पफकनरकाः वकनखगुदपरिणद्धाः लङ्कशान्तमुखाः कृष्णाजिनकृष्णसुन्दराः भ्रष्टककपिष्ठलाः इत्यादि। चे किं? तैकायनयः कैतवायनयः। व्वे किं? तैकायनिश्च कैतवायनिश्च तैकायनिकैतवायनी।

उपकादिभ्यो वाऽचे च। उपकादिभ्यो व्वे विहितस्य गोत्रत्यस्य अचे चे च व्वे लुक् स्याद्वा। उपकाः औपकायनाः, लमकाः लामकायनाः। उपकलमकाः औपकायनलामकायनाः। व्वे किम्? औपकायनश्च लामकायनौ च औपकायनलामकायनाः। उपकादिर्यथा—

उपक-लमक-सुपिष्ट-मयूरं जटिलक-वधिरक-कृष्णाक-कर्णम्।
पिष्ट-कपिष्ठल-खारीजङ्घाऽनुजक-शलाखल-कलसीकण्ठम्॥
कासकृत्स्नो निदाघश्च मन्दकः कृष्णसुन्दरः।
कृष्णाजिनोऽवतारश्च भ्रष्टकः कृष्णपिङ्गलः॥
उलूक-दामकण्ठौ चाऽवटावक-कुषीतकौ।
अनुलोमाऽनभिहितः प्रतानोऽजपथस्तथा॥

उपकलमकौ नड़ादौ, सुपिष्टाद्यः सप्त शिवादयः, अनुलोमन् वाह्वादिः, शेषाणामदन्तत्वात् ष्णिप्राप्तिः।

गर्गविदादयः ब्बहुयोः षे। गर्गादेर्विदादेश्च षे वर्त्तमानस्य ब्बहयोर्विहितस्य त्यस्य लुक् स्याद्वा।

गार्ग्यस्य गार्ग्ययोर्वा धनं गर्गधनं गार्ग्यधनम्, एवं वैदस्य वैदयोर्वा धनं विदधनं वैदधनम्।

रूढ़ात् कम्बोजादेर्नित्यम्। कम्बोजादे रूढ़ात् उत्पन्नस्य राजापत्यार्थत्यस्य लुक् नित्यं स्यात्। कम्बोज-जनपदस्यापत्यं राजा वा कम्बोजः।

कम्बोजादिर्यथा—

कम्बोजः केरलश्चोलः खशश्च यवनः शक इत्यादि।

स्त्रियां कुरुकुन्त्यवन्तिभ्यः। एभ्यो राजापत्योत्पन्नत्यस्य, स्त्रियां लुक् स्यात्। कुरोर्जनपदस्यापत्यं स्त्री राज्ञी वा कुरूः, उत इत्यादिना ऊप्। एवं कुन्ती अवन्ती, षाऽङो लुकि नृजातेरिति इति ईप्।

अतश्चाप्राच्य-भर्ग-यौधेयादेः। प्राच्यगोत्र-भर्गादि-यौधेयादि-भिन्नाद्राजापत्योत्पन्नस्य अतस्त्यस्य (१) स्त्रियां लुक् स्यात्। शूरसेनस्यापत्यं स्त्री राज्ञी वा शूरसेनी, इड़विड़स्यापत्यं स्त्री राज्ञी वा इड़विड़ी इत्यत्र ट्वस्य, मद्रस्यापत्यं स्त्री राज्ञी वा मद्री, दरदोऽपत्यं स्त्री राज्ञी वा दरत् इत्यत्र ह्राचः ष्णस्य लुक्, लुकि ईप् मद्र-शूरसेनाभ्याम्। अत इति किं? कौशल्या आजाद्या। अप्राच्य-भर्ग-

(१) अकारमात्रप्रत्ययस्य।

यौधेयादेरिति किं ? पाञ्चाली वैदेही मागधी आङ्गी वाङ्गी सौह्मी-त्यादि । भर्गादेः—भार्गी कैकेयी । कथं "प्राक् केकयीतो भर-तस्ततोऽभूत्" आद्यप्रकृतिरेव ? नदादिपाठादिति भागवृत्तिः ।

भर्गादिर्यथा—

भर्गः करूषः कश्मीरः कौरव्यः सुह्मकेकयौ ।
शाल्वोऽनुभवकश्चैव भर्गादिः परिकीर्त्तितः ॥

यौधेयादेः—यौधेयी शौभ्रेयीत्यादि । स्त्रियामिति चकारेणा-नुकर्षणान्न व्यमत्र (१) ।

न गोपवनादेः । गोपवनादेर्गोत्रत्यस्य लुङ् न स्यात् । अयं विदाद्यन्तर्गणः । गौपवनाः, गौपवनस्य गौपवनयोः कुलं गौपवन-कुलमित्यादि ।

## उक्तोऽपत्याधिकारः ।

ष्णो वेत्त्यादौ यमादिभ्यस्त्वपत्यवत् । स्याद्यन्तान्नः ष्णः स्यात् वेत्त्यादिष्वर्थेषु, यमादिभ्यस्तु अपत्यवत् त्याः स्युः । वेत्त्यादिर्यथा—

वेत्ति । अधीते । रक्तम् । युक्तः कालः । दृष्टं साम । परिवृतो-रथः । उद्धृतम् । संस्कृतं भक्ष्यम् । व्रतमयिता । पौर्णमास्यस्मिन् । अस्य देवता । समूहः । विषयो देशोऽस्य । आदिरस्य प्रगाथे । संग्रामः । तदस्त्यस्मिन् देशे । निर्वृत्तः । निवासः । अदूरभवः । विकारः । अवयवः । भवः । व्याख्यानम् । प्रायभवः । जातः । कृतः । क्रीतः । लब्धः । कुशलः । ऋणं दृश्यते । संभृतः । साधुः । पुष्यात् ।

---

(१) अनुवर्त्तते इति शेषः ।

४३०। ढघे कात् णीककण्णीनेया श्चानितश्च।

(ढ घे ७।, कात् ५।, णीक कण् णीन् इयाः १।।।, च ।१।, अनितः १।।।, च ।१।)।

कात् परा एते पूर्व्वे च सेतो ऽनितश्च स्युः ढे घे च वाच्ये।

पच्यमानम्। उप्तम्। देयमृणम्। मृगो व्याहरति। अस्य सोढ़म्। आगतः। प्रभवति। गच्छति। अभिनिष्क्रामति। अधिकृत्य कृतो ग्रन्थः। एकदिक्। अस्य निवासः। अस्याभिजनः। अस्य भक्तिः। दृश्यते। श्रूयते। उच्यते। प्रोक्तम्। उपज्ञातं। कृतो ग्रन्थः। इदम्।

यमादिस्तावत्—यमः आदित्यः अग्निः कलिः दितिः अदितिः पृथिवी देवः अपश्चाद्यादिस्थानाम्नाः उत्सादयश्च। पश्चादिर्व्यक्तः कुर्व्वादौ। उदाहरणानि तत्र तत्र वक्ष्यामि।

दित्यदितिभ्यां न णेयः। आभ्यां वेत्त्यादौ णेयो न स्यात्। दितिं वेत्ति अधीते वा दैत्यः, एवं आदित्य इत्यादौ ण्यः, न दैतेय आदितेय इति।

४३०। ढघे। ढश्च घश्च तत्तस्मिन्। वा कारकम्। णीकश्च कण् च णीनश्च इयश्च ते। नास्ति इत् येषां ते। चकारेण पूर्व्वं-सप्त-त्या अनुकृष्यन्ते। तथाच अतत्यास्तत्याश्च त्या एकादश सेतोऽनितश्चाभिधानाद्भविष्यन्तीत्यर्थः।

ढादित्यधिक्रियते भात् प्राक्।

वेत्त्यधीते। ढात् परः ण्यः स्यात् वेत्त्यधीते अर्थे। वैया-

तर्कं वेत्ति अधीते वा तार्किकः, पदकः, क्रमकः, वैयाकरणः; वाचा कृतं वाचिकं, पाणिनीयं; शक्त्या युध्यते ऽसौ शाक्तीकः, याष्टीकः, तिष्येण युक्ता रात्रिः तैषी, पौषी; यज्ञाय साधुः यज्ञियः, यज्ञाय हितं यज्ञियं; मथुराया आगतः माथुरः; इह भवं ऐहिकं, कादाचित्कं, ग्रामीणः, ग्राम्यः, मूर्द्धन्यः, नादेयः शालीयः, नागरः, अग्रः ।

---

करण इति व्याङ् पूर्व्वात् कृधोरनट् णः अर्, व्याकरणं वेत्ति अधीते वा इत्यर्थे णः णित्ते युम् त्रिः यद्योरित्यकारलोपः। एवं प्रभाकरोपलक्षितो ग्रन्थः प्रभाकरस्तं वेत्ति अधीते वा प्राभाकर इत्यादि ।

ष्णिक उक्थादेः षष्टिशतपथाभ्यां त्वणित् । उक्थादेः ष्णिकः स्यात् षष्टिपथ-शतपथाभ्यान्तु णिकः । उपचारात् उक्थशब्द औक्थिकार्थः, तं वेत्ति अधीते वा औक्थिकः लौकायतिकः ।

उक्थादिर्यथा—

उक्थो लोकायतः न्यायः पुराणं संहिता शरत् ।
वर्षा वसन्तो हेमन्तः सङ्घातः संग्रहो गणः ॥
अथर्व्वा शिशिरो वृत्तिश्चाथर्व्वण-लक्षणम् ।
न्याय-न्यासावनुपदानुगुणाक्षगुणा अपि ॥
द्विपदा त्रिपदा ज्योतिरायुर्व्वेदः क्रमेतरः ।
यज्ञ लक्ष्यानुकल्पाश्च पुनरुक्तः पदःक्रमः ॥

चरमप्रथमाभ्यान्तु गुणोऽथ क्रतुवाचिनः।
आख्यानाख्यायिके (१) चेतिहासो वै लक्षणोत्तराः॥
अधर्म्माद्यादिविद्यान्ता अथ कल्पादिवर्ज्जिताः।
सूत्रान्ताश्चाथ कल्पान्तास्तथाश्मिन्ननुसूरपि॥

अथर्व्वाणं वेत्त्यधीते वा आथर्व्वणिकः, इके न नलोपः। नैयायिकः नैयासिकः, य्वोर्युम् इतीमि व्रिः। अनुकल्प-शब्दं परे पठन्ति (२)। वस्तुतस्तु कल्पान्तत्वात् सिध्यति। चारम-गुणिकः प्राथमगुणिकः। क्रतुवाचिनः क्रतुविशेषवाचिनः। आश्वमेधिकः वाजपेयिकः राजसूयिकः। आख्यानं ग्रन्थान्तर्गता-पेक्षितस्य वर्णनम्। यवक्रीतमधिकृत्य कृतो ग्रन्थ इत्यर्थे णो कृते क्वचित्तस्य लुक्, तं वेत्त्यधीते वा यावक्रीतिकः प्रैयङ्गविकः। मूले तार्किक इति (३)।

आख्यायिका प्रबन्धविशेषः, तमधिकृत्य कृतो ग्रन्थः, तस्य लुक्, तं वेत्त्यधीते वा इत्यर्थे णिकः। वासवदत्तिकः सौमनो-त्तरिक इत्यादि। लक्षणोत्तरा इति—लक्षणशब्द उत्तरो येषां, गौलक्षणिक आश्वलक्षणिकः। अधर्म्माद्यादिविद्यान्ता इति—सार्प-विद्यिकः वायसविद्यिकः। धर्म्माद्यादयस्तु धार्म्मविद्यः त्रैविद्यः आङ्गविद्यः। अथानन्तरं कल्पादिवर्ज्जिताः सूत्रान्ता इति—सांग्रह-सूत्रिकः वार्त्तिकसूत्रिकः। कल्पादिस्तु काल्पसूत्रः। कल्पान्ता

(१) आख्यानविशेषवाचिनः, आख्यायिकाविशेषवाचिनश्च।
(२) तन्मतानुसारेणैवास्माभिरपि स पठित इत्याशयः।
(३) आख्यानोदाहरणमितिशेषः।

इति—मातृकल्पिकः पाराशरकल्पिकः। अनुसूर्नाम ग्रन्थविशेषः, तं वेत्त्यधीते वा इत्यर्थे ष्णिकः।

इस्नुसुक्तान्तादिकस्य कः। उक् प्रत्याहारः। इसन्तादुसन्तादुक्प्रत्याहारात् तान्ताच्च परस्य इकस्य कः स्यात्। आनुसुकः, ष्णिकस्येकस्य कत्वविधानात् णित्त्वे त्रिः। षष्टिपथं वेत्त्यधीते वा षष्टिपथिकः षष्टिपथिकी शतपथिकः शतपथिकी।

पदादेः कः। ढादित्येव। पदादेर्वेत्त्यधीते वार्थे कः स्यात्। मूले पदकः क्रमक इति। पदादिर्यथा—

पदं शिक्षा क्रमः साम मीमांसोपनिषच्च षट्।

शिक्षकः मीमांसकः, केऽकः स्वः।

पदोत्तरदादिकः। पदमुत्तरपदं यत्र तस्मात् इकः स्यात् वेत्त्यधीते वार्थे। पूर्व्वपदं वेत्त्यधीते वा पूर्व्वपदिक उत्तरपदिक इति। एकदेशिनस्तु पदोत्तरशब्दादेव इकः, पदोत्तरपदिक इत्याहुः। आनुपदिक इति उक्थादित्वात्।

अनुब्राह्मणादिन्। उपनिषद्भागातिरिक्तवेदव्याख्यानं ब्राह्मणशब्देनोक्तं, तस्य सदृशम् अनुब्राह्मणं, सादृश्ये वसः, तद्वेत्त्यधीते वा अनुब्राह्मणी अनुब्राह्मणिनौ अनुब्राह्मणिन इति। चान्द्रास्तु अस्त्यर्थेमा साधयन्ति इति चिन्त्यम्।

इयस्तु वाधीते छन्दसः श्रोत्रश्च। छन्दसोऽधीतेऽर्थे इयः स्यात् वा, तस्मिन् छन्दसः श्रोत्रादेशश्च। छन्दोऽधीते श्रोत्रियः पक्षे छान्दसः, त्वन्तस्य नानुवृत्तिः।

सूत्रात् संख्याकोण्डो लुक्। सूत्रवाचिनः संख्याप्रकृतेः कोण्डो-

ऽध्येतृवेदित्रोर्विहितस्य त्यस्य लुक् स्यात्। पाणिनीयमष्टकं (१) सूत्रं वेत्त्यधीते वा अष्टकः पाणिनीयः, दशको वैयाघ्रपदीयः। संख्येति किं? महावार्त्तिकं सूत्रं वेत्त्यधीते वा माहावार्त्तिकः। कोङ इति किं? चतुष्टयं सूत्रं वेत्त्यधीते वा चातुष्टयः।

सहसर्व्वपूर्व्वाच्च। सहपूर्व्वात् सर्व्वपूर्व्वाच्च लेः परस्याध्येतृवेदित्रोर्विहितस्य त्यस्य लुक् स्यात्। सवार्त्तिकं वेत्त्यधीते वा सवार्त्तिकः ससंग्रहः, एवं सर्व्ववेदः सर्व्वशास्त्रः, पञ्च वेदान् वेत्त्यधीते वा ताचि वाचे गः।

प्रोक्ताच्च। प्रोक्तविहितत्यान्तादध्येतृवेदित्रोर्विहितस्य त्यस्य लुक् स्यात्। पाणिनिना प्रोक्तं वेत्ति अधीते वा पाणिनीयः स्त्रियां पाणिनीया, अपिशलस्यापत्यं आपिशलिः, तेन प्रोक्तम् आपिशलं, तद्वेत्त्यधीते वा आपिशलः स्त्रियामापिशला, पित्त्वेऽपि गौणत्वान्नेप्।

कल्प-सूत्र-च्छन्दो-ब्राह्मणानि तद्विषयाणि। एतानि प्रोक्ताधिकारत्यान्तानि अध्येतृवेदितृविषयाणि भवन्ति। अनन्यत्रभावो विषयार्थः। तथाच प्रोक्तत्यान्तानामध्येतृ-वेदितृ-विषयता-व्याप्य-विषयताकत्वमिति पर्य्यवसितार्थः (२)। एतेन स्वातन्त्र्यम् उपाध्यन्तरयोगे वाक्यञ्च निवर्त्तते। कल्पस्य तावत्—काश्यपेन

---

(१) अष्टौ अध्यायाः परिमाणमस्येति अष्टकम्।

(२) छन्दःप्रभृतिभ्यस्तदैव प्रोक्तार्थे प्रत्ययः स्यात् यदा प्रोक्तप्रत्ययान्तेभ्यः शब्देभ्यः परं वेत्त्यधीते वेत्यर्थे प्रत्ययस्तल्लोपश्च सम्भाव्यते। न तु कठेन प्रोक्तं कठमिति स्वातन्त्र्येण प्रयोगः स्यात्। तेन कठेन प्रोक्तं काठम्। कठं वेत्त्यधीते वा कठ इत्येवं वाक्यमपि न स्यात्। अतएवोक्तं कठेन प्रोक्तमधीते इति हरिनामामृतव्याकरणम्।

प्रोक्तं कल्पं (१) वेत्त्यधीते वा काश्यपी, कश्यपशब्दात् प्रोक्तार्थे णिन् (२) तस्मादध्येतृवेदितोः ण:, तस्य लुक्, लुकि सति अनेन प्रोक्तस्याध्येतृवेदितृविषयत्वे लिङ्गवचने (३) न भवतः। एवं कौशिकी। इह कल्पविषयस्य ग्रहणात् पैङ्गीकल्प इत्यादौ न स्यात्। सूत्रस्य तावत्—पाराशर्य्येण प्रोक्तं भिक्षुसूत्रं वेत्त्यधीते वा पाराशरी भिक्षुः, कर्म्मन्दी भिक्षुः (४) शैलाली नटः, कृशाश्वी नटः (५)। छन्दसस्तावत्—कठो ब्राह्मणः, तेन प्रोक्तं छन्दो वेत्त्यधीते वा कठः, मोदः पैप्पलादः आर्चाभी वाजसनेयी। ब्राह्मणस्य तावत्—तण्डिना विप्रेण प्रोक्तं ब्राह्मणं (६) वेत्त्यधीते वा ताण्डी शाट्यायनी ऐतरेयी। एषामिति किम्? पाणिनीयं व्याकरणम्।

अगोत्रणि-कण्वादिणाद्वृद्धादीयो भवादौ। गोत्रविहितणान्त-वर्ज्जितात् कण्वादिणान्तवर्ज्जिताच्च वृद्धसंज्ञकादीयः स्यात् भवादिष्वर्थेषु। गार्गीयः वात्सीयः शालीयः शैवीयः औपगवीयः त्वदीयः मदीयः अस्मदीय इत्यादि। गोत्रणि-कण्वादिणाभ्यान्तु दाक्षः काण्वः जामदग्न्यः। गोत्रार्थ इति किम्? सुतङ्गमेन

(१) यागक्रियोपदेशको वेदाङ्गग्रन्थविशेषः कल्पः।

(२) णिनृविधायकसूत्रं परत्र वक्ष्यति।

(३) लिङ्गवचने इति प्रोक्तस्येत्यनेनान्वयः।

(४) कर्म्मन्देन प्रोक्तं भिक्षुसूत्रं वेत्त्यधीते वेति। भिक्षुः परिव्राट् कर्म्मन्दी-त्यमरः।

(५) कृशाश्वोत्पत्त वक्ष्यमाणसूत्रेण इन्।

(६) मन्त्रेतरवेदभागो ब्राह्मणम्।

निर्वृत्तः सौतङ्गमः, तस्येदं सौतङ्गमीयम्। ण्य इति किम्? कण्वो देवताऽस्य काण्वः, तस्येदं काण्वीयम्।

द्वाचः प्राच्यभरताच्च। प्राच्यगोत्रण्यान्तात् भरतगोत्रण्यान्ताच्च द्वाच ईयः स्यात् भवादौ। पूर्व्वेणाप्राप्तेऽनेन विधीयते। पौष्पीय वैङ्कीयः काशीयः। द्वाच इति किम्? पान्नागारः। प्राच्यभरतादिति किम्? दाक्षः प्राचः। ननु कथं काशीय इत्युदाहृतं, काश्यादेर्णिकण्णिकयोर्विधानादिति चेन्न, तत्र चेदि-शब्द-समभिव्याहृत देशवाचक-काशीशब्दग्रहणात्। इह गोत्रार्थस्य ग्रहणं, न तु देशवाचकस्येति।

कखोङो देशे। वृद्धादित्येव। ककारोङः खकारोङश्च देशे वर्त्तमानाद्वृद्धादीयः स्यात् भवादौ। कोङ्ण्यस्य वाहीकग्रामेभ्यश्चेति णिकण्णिकयोर्बाधनार्थमिदम्। आवहनकीयं द्रौघनकीयम् भास्वत्यकीयं कौटशिखीयम् आयोमुखीयम्। वृद्धादिति किम्? सौमुखम्।

ग्राम-कन्या-ह्रद-पलद-नगरोत्तरदात्। ग्रामाद्युत्तरदाद्देशवाचकात् वृद्धादीयः स्यात् भवादौ। दाक्षिग्रामीयं दाक्षिकन्थीयं दाक्षिह्रदीयं दाक्षिपलदीयं दाक्षिनगरीयं माहकिग्रामीयमित्यादि। वृद्धादिति किम्? मद्रनगरे भवः माद्रनगरः। उत्तरदादिति किम्? वाहुग्रामं वाहुनगरम्। वाहीकग्रामेभ्यश्चेति णिकण्णिकयोर्बाधकमिदम्।

पर्णक्षकणाद्भारद्वाजे। वृद्धादिति निवृत्तम्। भारद्वाजे नाम्नि देशे वर्त्तमानाभ्यां पर्णक्षकणाभ्याम् ईयः स्यात् भवादौ। पर्णीयं क्षकणीयम्। भारद्वाजदेशभिन्ने तु पार्णं काकंणम्।

